प्रमामुत्पादयन्तीति चेत्, तदपि दृष्टविरुद्धम्, न हि प्रमाणानि परस्परापेक्षया प्रामाण्यं भजन्ते । अतोऽभ्यासजन्योऽयं बुद्धावतिशयो भावनालक्षणमेकरूपमेवेत्यापतति । तथा च तज्जन्या द्वैतनिवृत्तिरप्यनित्या स्यात् (३-८६, ९०, ९१)। अनादिकालोपचिता चेत् दुरितवासना प्रसङ्ख्यानेन विनाशिता, तर्हि अल्पीयोऽभ्यासजन्या भावना प्राक्तनी भवेदित्यत्र का प्रत्याशा (३-९२, ९३)? शास्त्रजनितं ज्ञानं यदि प्रसङ्ख्यानाज्ज्ञानान्तरं जनयदेव सफलम्, तर्हि शास्त्रमप्रमाणमेव भवेत् (३-१२३)। तस्मात्, न वाक्यजन्यज्ञानप्रसङ्ख्यानविधिः कल्पनीयः (१-९८)। शब्दयुक्ती चेत् न यथार्थज्ञानजनकौ, तत्प्रसङ्ख्यानं यथार्थज्ञानं जनयेदिति कथं निश्चेयम् (३-१२४)? ये तु प्रसङ्ख्यानविधिं व्यसनितया रोचयन्ते, ते श्रवणादि-प्रसङ्ख्यानविधानेनैव कथञ्चित् सन्तोष्टव्यम् (३-१२५, १२६)॥

प्रसङ्ख्यानेऽपि वादो यो बृहद्वार्तिके प्रत्याख्यातः (बृ वा ४-४-८७७-८८५)। यद्यपि वाक्यजन्यं ज्ञानं यथार्थमेव, तथापि स्वजन्मानन्तरमेव अनादिकाल-प्रवृत्तया अविद्यया तद् बाध्यते अविद्याकार्यरागादिदर्शनादेवैवम् इति गम्यते (बृ वा ४ ४-८७८ ८७९)। आगन्तुकं शाब्दज्ञानम् अनात्मविषयं सम्यग्ज्ञान-जन्ममात्रेण ध्वस्यते नैसर्गिकी त्वविद्या बाधितापि पुनरुदेत्येव। अतस्तस्या निरन्वयनाशार्थं ज्ञानाभ्यासः कार्यः (बृ वा ४-४-८९५) इत्येकदेशिनामेतेषां मतम्। अस्त्यत्र श्रीगौडपादाचार्याणामपि सम्मतिः, 'तत्त्वादप्रच्युतो भवेत्' (गौ का २ ३८) इति 'यदा न लीयते चित्तं न च विक्षिप्यते पुनः। अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा॥ (गौ का ३ ४६) इति च तेषां कारिकासु प्रमाणम्-इत्येते वादिनो मन्यन्ते (बृ वा ४-४-८८७, ८८८)॥

कथमेते वादिनः प्रत्याख्याता इति न विज्ञातम्। नैष्कर्म्यसिद्धावपि 'यद्यपि सम्यग्ज्ञानं सत्, अप्रमाणायमानेनाभ्यासज्ञानेन बाध्यमानमुपलभामहे, यत उत्पन्नपरमार्थावबोधस्यापि कर्तृत्वभोक्तृत्वरागद्वेषाद्यनवबोधोत्थप्रत्ययाः आविर्भवन्ति' इति आशङ्कमुत्थाप्य 'बाधितत्वादविद्याया विद्यां सा नैव बाधते' (१-२८) इति निराकृतोऽयं पक्षः। 'रागो लिङ्गमबोधस्य' (४-६०) इत्युक्तिरन्यविषया पुनरस्याभिनिराकरणायैव स्यात्। उपदेशसाहस्र्यामपि –

> सदस्मीति च विज्ञानमक्षजो बाधते ध्रुवम्।
> शब्दोत्थं दृढसंस्कारो दोषैश्चाकृष्यते बहिः॥ १८-१३
>
> श्रुतानुमानजन्मानौ सामान्यविषयौ यतः।
> प्रत्ययावक्षजोऽवश्यं विशेषार्थो निवारयेत्॥ १८-१४

इति च श्लोकद्वयदर्शनात् प्रसङ्ख्यानवादिनोऽपि 'श्रौतज्ञानं बाध्यते तस्मात् यावत् विशेषानुभवो न जायते तावत् प्रसङ्ख्यानं कर्तव्यम्' इति वदन्ति स्मेति गम्यते।

वार्तिककारमतस्तु वादो बाधिताप्यविद्या सम्यग्ज्ञानमपि बाधते इत्याग्रहवान् इति विशेषः । एतैरद्वैतिभिरुद्धृतायाः कारिकाया (गौ. का २-३८) भाष्येऽप्येतद्वाद-निरसनसूचकानि वाक्यानि दृश्यन्ते । सिद्धौ 'अज्ञानमात्माश्रयम्, आत्मविषयकं च' इति प्रतिपाद्य 'अनात्मविषयकमज्ञानं नास्त्येव' (२-१, सं.) इत्यवधारणमप्येतद्वाद-निरासस्चकमिति भाति ॥

एकदेशिभिरेतैः श्रीगौडपादाचार्यवचनस्य स्वमतोपबृंहकत्वेनोदाहरणात्, श्रीशङ्करभगवत्पादकालात् प्रागेव गौडपादाचार्यानुयायिषु तदीयप्रस्थानविषये विप्रतिपत्तिरासीदित्यवगच्छामः । तथापि श्रीशङ्करभगवत्पादकृतसूत्रभाष्यटीकाकाराणाम् अविद्याविषये मतिभेदो दरीदृश्यते । तद्यथा –

पञ्चपादिकायाम् –

'अवश्यमेषा अविद्याशक्तिर्बाह्याध्यात्मिकेषु वस्तुषु तत्स्वरूपसत्तामात्रानुबन्धिनी अभ्युपगन्तव्या ; अन्यथा मिथ्यार्थावभासानुपपत्तेः । सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाति । प्रमाणवैकल्यादेव तदग्रहणसिद्धेः । रजतप्रतिभासात् प्राक् ऊर्ध्वं च सत्तामपि तस्य स्वरूपग्रहणदर्शनात् । अतस्तत्र रूपान्तरावभास-हेतुरेव केवलम् ; प्रत्यगात्मनि तु चितिस्वभावत्वात् स्वयंप्रकाशमाने ब्रह्मस्वरूपा-नवभासस्य अनन्यनिमित्तत्वात्, तद्गतनिसर्गसिद्धाविद्याशक्तिप्रतिबन्धादेव अहङ्काराद्य-तद्रूपप्रतिभासनिमित्तं च भवति' – प पा ९६ ॥

अत्र यद्यप्यात्मन्यनात्मनि च पृथक्पृथगेवाविद्याद्वयम् इति नोक्तम्, तथापि अनात्मनि मिथ्यार्थावभासहेतुरेव केवलम्, आत्मनि तु स्वरूपावारकं च इत्युक्तम् ॥

भामत्यां तु –

(1) 'कार्यकारणाविद्याद्वयाधारोऽहङ्कारास्पदं संसारी' – भा. भा. पा. ४५, इत्येकत्राविद्याद्वयं निर्दिष्टम् । अन्यत्र तु –

(2) 'न वयं प्रधानवदविद्या सर्वजीवेष्वेकाम् आचक्ष्महे येनैवमुपालभ्येमहि, किं त्वियं प्रतिजीवं भिद्यते' – भा. भा. पा ३७७.

इत्यविद्यानानात्वमपि स्वीकृतम् । अपरत्र पुनः –

(3) 'तत्त्वावधारणाभ्यासस्य हि स्वभाव एव स(?) तादृशः, यदनादिमपि विपरीतनिश्चयवासनामपि मिथ्याप्रत्ययमपनयति ।' – भा. भा. पा. ४०
इति ॥

(4) 'तस्मात्, यथा गान्धर्वशास्त्रार्थज्ञानाभ्यासाहितसंस्कारसचिवश्रोत्रेन्द्रियेण

षड्जादिस्वरग्राममूर्छनाभेदमध्यक्षम् अनुभवति, एवं वेदान्तार्थज्ञानाभ्यासाहितसंस्कारो जीवस्य ब्रह्मभावमन्तःकरणेन' – वा। भा। पा। ५८

इति च वाक्यार्थज्ञानाभ्यासोऽप्युररीकृतः ॥

नैष्कर्म्यसिद्धौ पुनः –

अविद्यानाशत्वम् अविद्यासंस्कारनाशार्थं प्रयोजनान्तरार्थं वा ज्ञानप्रसंख्यानं च कण्ठरवेण निरस्तम्। अविद्यासंस्कारनाशार्थं यत्नान्तरकरणं वृथायासः स्यात्, यतो विद्यास्मृतिरेवाल अविद्यानाशायेति स्पष्टमुक्तम् –

बाधितत्वादविद्याया विद्या सा नैव बाधते ।
तद्वासना निमित्ताच्च यान्ति विद्यास्मृतेर्ध्रुवम् ॥ १ ३८

इति। शाब्दज्ञानं परोक्षज्ञानमात्रम्, आत्मापरोक्ष्यं तु श्रवणमननाभ्याससचिवान्तःकरणेन – इति प्रस्थानं तु मण्डनमिश्रभुजावलम्बनफलं नैष्कर्म्यसिद्ध्या नैवानुमन्यते इति प्रसंख्यानवादनिरासेनैव स्पष्टमिति न पृथग्वक्तव्यमस्ति तत्र किञ्चित्। अथास्मादुदाहृतास्त्रयोऽपि पक्षाः, ज्ञानाभ्यासलक्षणं मनोनिग्रहरूपं वा निदिध्यासनम् आवश्यकत्वेन परिगृहीतवन्त इतिकारणात् स्यात्, वार्तिककारः 'अवगतबोधोऽत्र निदिध्यासनमुच्यते' (बृ वा २-४-२१७) इत्याग्रहपूर्वकं प्रतिपादयति। इह च प्रकरणे वाक्यज्ञानम् आत्मापरोक्षसाक्षात्कारणमिति (३-६९, ७०), तच्च ज्ञानं निरस्तसमस्तकारकग्राममेवोदेति (३-७१) इति च सुस्फुटमुक्तम्। वाक्यज्ञानानन्तरमपि ब्रह्मसाक्षात्कारः कर्तव्यतयावशिष्यत इति वादिनः प्राचीना अर्वाचीना वा इमं सिद्धान्तं (३-६८, ४-१३) न परामृशन्ति, वाक्यजन्यज्ञानं सकलकारकग्रामप्रध्वंसि (१-२६) इत्यपि नानुमन्यन्ते इत्येतत्तु वाचकैरवश्यमवधेयम् ॥

## क्लेशापहारिणीव्याख्या

दुर्दैववशादिदानीं वार्तिकप्रस्थानस्य पठनपाठनसम्प्रदायः शिथिलतां विच्छिन्नतां च गतः। सूत्रभाष्यव्याख्यानव्याजेन, स्वाभिमतविशेषोपादानप्रपञ्चवशाद् पुरस्कृत्य प्रचालितं पञ्चपादिका तद्विवरणप्रस्थानम्, मण्डनमिश्रकृतब्रह्मसिद्धिगतविचारसरण्यनुसारिणा नानादर्शनाचार्यवाचस्पतिमिश्रोपज्ञं भामतीप्रस्थानं च – इत्येतद् व्याख्यानद्वयं विविधोपव्याख्याभिरुपबृंहितम् — प्रमेयविशेषप्रतिपादनप्रकारे, वेदान्तार्थनिर्णयाय समाश्रितेषु प्रक्रियाविशेषेषु च परस्परं भाष्येण च तत्र तत्र विरुध्यमानमपि – एकमेवेदं शाङ्करं प्रस्थानम् इति दृढं विश्वसन्ति पण्डितप्रकाण्डाः पाठयन्ति च विनेयान् पाठशालासु विश्वविद्यालयोपजीविनीषु बालभाषाप्रधानकलाशालासु चेत्यहो विधिविलासः।

अनुशाङ्करव्याख्यानप्रस्थानेषु वार्तिकप्रस्थानमेव प्राचीनतमम् इत्येतत् तैत्तिरीयबृहदारण्यकभाष्यवार्तिकयोरवलोकनेन स्फुटं भवति । अथवा नैष्कर्म्यसिद्धिपरिशीलनेनापि व्यक्तं भवेदेतत् । वार्तिकप्रस्थाने हि अर्वाचीनवेदान्तग्रन्थेषु विचारणीयत्वेन प्राचुर्येणोपलभ्यमाना – अविद्या जगतः स्वातन्त्र्येण कारणं, द्वारकारणं वा ? अविद्या कस्य जीवाश्रया वा सा, ब्रह्माश्रया वा ? एका वा, नाना वा ? जीवः किमेक एव, उत नाना ? भगवत्पादसम्मतो जीवः किमन्तःकरणावच्छिन्नः, अथवा ब्रह्मणः प्रतिबिम्बो वा ?–इत्यादिविकल्पा नैव विमर्शनीयत्वेनोपात्ताः क्वचिदपि । किञ्चान्यत्, पञ्चपादिकायाम् अन्तःकरणोपरागनिमित्तं मिथ्यैवाहङ्कर्तृत्वमात्मनः – इत्युपपादनार्थं विविधदृष्टान्तानामुपन्यासमात्रम् एव लिखितं दृश्यते –

“ यत् पुनः, दर्पणजलादिषु मुखचन्द्रादिप्रतिबिम्बोदाहरणम्, तत् अहङ्कर्तुरनिर्मलो बिम्बादिव प्रतिबिम्बं न ब्रह्मणो वस्त्वन्तरं किं तु तदेव, तत्पृथगवभासविपर्ययस्वरूपमात्रं मिथ्या इति दर्शयितुम् । अत्राह – भवतु न वस्त्वन्तरम्, तदेव तत् इति तु न क्षम्यते । शुक्तिकारजतस्य मिथ्यारूपस्यापि सत्यरजतैकरूपावभासित्वदर्शनात् । नैवम् । तत्र हि बाधदर्शनात् मिथ्याभावः नह स बाधो दृश्यते । यत् पुनः दर्पणापगमे तदपगमः, न स बाधः, दर्पणेऽपि तत्प्रसङ्गात् । ननु तत्त्वमसिवाक्याद् बाधो दृश्यते । नैवम् । ‘तत् त्वम्’ इति बिम्बस्थानीयब्रह्मस्वरूपता प्रतिबिम्बस्थानीयस्य जीवस्य उपदिश्यते । अन्यथा न ‘तत्त्वमसि’ इति स्यात्, किं तु ‘न त्वमसि’ इति भवेत् ‘न रजतमस्ति’ इतिवत् ॥”
प पा २४२ २४३

इति । अत्र त्व(मह)पदार्थस्य तत्पदार्थैकता वाक्येनोपदिश्यते इत्यभिप्रायवान् टीकाकार इति स्पष्टम् । अहमर्थबाधेनैव वाक्यार्थप्रतिपत्तिरिति ॥ सिद्धौ स्पष्टं लिखितमस्ति –

योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव ।
ब्रह्मास्मीति धियाऽशेषा ह्यहंबुद्धिर्निवर्त्यते ॥ २-२९

रूपेण सर्पवद्रज्ज्वा प्रतीचः स्यादहं तथा ।
तद्बाधेनैव वाक्यार्थं वेत्ति सोऽपि तदाश्रयात् ॥ ३-७७

भ्रान्तिप्रसिद्धयानूद्यार्थं तत्त्वं भ्रान्तिबाधया ।
अयं नत्युपादस्येत यथैव तत्त्वमित्यपि ॥ ३-७२

इति । एतेन पञ्चपादिकाकारः सुरेश्वरोक्तं बाधसामानाधिकरण्यं निरस्यन्, वार्तिककारादप्यर्वाचीनः स्यात् इत्युत्प्रेक्षितुं शक्यते, अत एव नैष्कर्म्यसिद्धौ पञ्चपादिकागताः प्रमेयविशेषाः नैव परामृष्टा इति च ॥

तस्मात्, शाङ्करप्रस्थानसतत्त्वं निर्दिधारयिषुभिरवश्यं वार्तिकप्रस्थानं यथावत् परिशीलनीयम् अर्वाचीनटीकाप्रस्थानयो परिशीलनस्तु प्रागेवेति ग्रन्थतत्त्वशोधकैरभ्युपगन्तव्यम् । एतद्दृष्ट्या, नैष्कर्म्यसिद्धिप्रतिपादितवेदान्तप्रमेयानामनर्घतया च प्रलोभितोऽहं प्रकरणस्यास्य व्याख्यां क्लेशापहारिणीनाम्नीं नूत्नामेताम् अकार्षम् । यद्यपि चन्द्रिकया व्याख्यया सयुता सिद्धिर्मुद्रापितैव बहोः कालात् प्राक् प्रकाशं नीता च पाठकानां दृष्टिपथमानीतास्ति, तथापि तद्व्याख्याकर्तुरर्वाचीनव्याख्यानप्रस्थानप्रभावितत्वात् वार्तिकप्रस्थानस्यानुमता बहवः प्रमेया –स्वाभिलषितसिद्धिनिबन्धना मूलाविद्यावाद्यादयो मूलग्रन्थकृदभिप्रेतत्वेन विभाविता –कथञ्चित् तत्र तत्र प्रवेशिता दरीदृश्यन्ते, प्रसन्नगम्भीरे सिद्धिग्रन्थे स्थिता प्रमेया बृहदारण्यकवार्तिकाद्याकरसंवादं विना नैवाक्लेशेन विज्ञेया अपि भावा सङ्क्षेपरुचिना चन्द्रिकाकर्त्रा समुपेक्षिता दृश्यन्ते । तस्मात्, ग्रन्थविस्तरभयं परित्यज्यापि मया तत्र तत्र यथायोग्यं बृहद्वार्तिकात् प्रमाणश्लोकान् आनीय जिज्ञासुजनस्य क्लेशनिवारणं यथा स्यात् तथा सिद्धिश्लोकानां सम्बन्धोक्तीनां चाभिप्रायो विवृतोऽस्ति । यद्येनया व्याख्यया नैष्कर्म्यसिद्धिगता ग्रन्थग्रन्थयः किञ्चिदपि भिद्यन्ते, जिज्ञासूनां च वार्तिकप्रस्थानविमर्शने अधिकतरा अभिरुचिश्च जायेत, तेनैवाहं धन्यं मन्येयात्मानमिति निवेदयति

प्लवंगसंवत्सरे }
माघशुद्धैकादश्याम् }

ग्रन्थसंपादनकर्ता व्याख्यानकर्ता च

# विषयानुक्रमणिका

अत्र कृष्णतराक्षरैरङ्किता नैष्कर्म्यसिद्धिग्रन्थशरीरविभागाः, ततः परं सूक्ष्माक्षरैरङ्कितास्तु क्लेशापहारिणीविभागाः । क्लेशापहारिणीविभागाः केचन ग्रन्थमध्ये अनुल्लिखिता अपि सूक्ष्मा इति सूचनार्थं कंसचिह्नाभ्यन्तरे न्यस्ताः ॥

पृष्ठानि

## १. संबन्धोक्तौ ग्रन्थावतारिका



## प्रथमोऽध्यायः

## २. मङ्गलाचरणपूर्वकं ग्रन्थारम्भप्रतिज्ञा

( श्लोकाः १-६ )



## ३. प्रकरणार्थः संक्षेपतः

( श्लोकाः ७-८ )

## ४. पदार्थशोधनपूर्वक वाक्यार्थसिद्ध्यर्थमुत्तरग्रन्थ

(श्लोका ९-१०)



## ५ स्थूलशरीरविवेक

(श्लोका ११-२१)



## ६ सूक्ष्मदेहविवेक

(श्लोका २२-४४)



## ७ द्वैतस्य प्रतीतिमात्रसिद्धत्वम्

(श्लोका ४५-५३)



## ८ आत्मन्यहशब्दप्रवृत्ति कथम्?

(श्लोका ५४-५७)

## तृतीयोऽध्यायः

## १९. प्रत्यक्षविरोधपरिहार

( श्लोकाः ९६-१०३ )



## २०. शब्दादात्मनि सम्यग्ज्ञानोत्पत्तिप्रकार

( श्लोकाः १०४-११२ )



## २१. अविद्यायाः शाब्दिकमानेन निवृत्ति

( श्लोकाः ११३-१२२ )



## २२. प्रसंख्यानाभ्युपगमे दोषः

( श्लोकाः १२३-१२६ )

## चतुर्थोऽध्यायः

## अनुबन्धाः



———

# ग्रन्थपाठसंस्करणम्

सङ्ख्ययोर्गाद्या पत्रपार्श्वं सूचयति, द्वितीया च पङ्क्तिम् । पत्रपार्श्वाध-स्तात् परिगणिता पङ्क्तिम् 'अ' इत्यक्षरं सूचयति । दृष्टिमात्रेण सुबोधा दोषा अत्रोपेक्षिता । सर्वत्र शुद्धपाठा एव प्रदर्शिता । संयोजनीयानि पदानि, वाक्यानि च कृष्णतरसीसकाक्षरैरङ्कितानीति बोध्यम् ॥

## संग्रन्थोक्तौ ग्रन्थावतरणिकायाम्

११-अ ५ निर्विशेषप्रत्यगात्मविषयत्व , १२-१ न तत्

## प्रथमाध्याये

१६-११ पूर्वंस्वबलापनाय , २०-९ ततो विशेष २१-११ निकपात्मान , १४-२४ न च , ३५-१२ कर्मानुष्ठानोपात्त ३९-अ १२ तथैव न , ५०-अ १ अनभिसंबन्धादात्मना , ५२ अ ७ तथाऽलब्ध , ५४-अ ६ भुरिगत्तु , ५९-१२ स्वविषयविषयाविद्या ६३-७ अभ्युदय , तस्य , ६३-अ १२ दा ३६ पा ५६ , ६३-अ ९ द्वितीयो हेतु , ६३-अ ६ अत स एवेह , ६३-अ. २ मिति देह ६४-अ ८ सत्या , ६९ अ ८ प्राप्ति , ७०-१ भूताना , ७८-१ चतुर्विध वस्तु , ७९-७ चित्तशुद्धिर्वैराग्यस्य , ८६-१३ बुद्ध्यादिभिरात्मानम् , ८९ (पत्रपार्श्वशीर्षऐक्य ) ज्ञानस्य मोक्षं प्रति निरपेक्षसाधनत्वम् , ९१-अ १ अज्ञानाग ज्ञानानन्तरमुपास्य , ९३-१ साक्षात्कारद्वारेण मोक्षप्राप्तिरिति ९३-अ ६ चिन्तयितुमपि ९७-अ १० सभाव्यते ९८-१४ उत्पाद्याद्ययतमभेन , १०१ अ ३ प्रत्यव-नीगत इत्यर्थं , ११७ अ ७ जैमिन्यभिप्रायपरिज्ञानाभावादेव १२० अ-७ (इत प्राक् सयोजनीयम् —) किञ्च – 'न तावद्योग एवास्ति शरीरेणात्मन सदा । विपर्ययैर्वृतो नास्ति स्वर्गादौ कात् कथ सुरस् ३-९५', १२१-१२ तृप्त्येकसाधन , १२१ अ १३ ('उपगमात्' इत्यत उपरिष्टात् सयोजनीयम् –) यद्वा तद्वृत्तिरेव एक साधन यस्य सोऽयम् तद्वृत्त्येकसाधन । न तु देहादिसहित इत्यर्थ , १२५-८ यथावस्थितवस्तुस्वरूप १२५-अ ९ त्यति अविप्रतिषिद्ध भवेत्

## द्वितीयाध्याये

१२९-१३ उपजीव्येव , १३०-अ २ स्वविषयविषयक , १३१-१० (उप सा १८-१८१ १८२), १३२-५ स्मार्यमाणे १३६-६ वाक्यान् विरोधो , १३७ अ ८ (१९०-१९१), १३९-अ २ अपरान् पुन , १४१-६ प्रतिपत्ताविति , १४१-१२ न विद्धि , १५३-अ ३ ताद्धम्येन , १५७-अ ९ आगमापायशीनो , १६६-६ स्वयसिद्धात्माभिप्रत्येन १६८-८ स्वभावपदार्थ परमार्थत , १७१-अ २ (उप १८-६५), १७३-२, ३ अहशब्दादीन नि

# सङ्केताक्षरविवरणम्

मन्त्रोपनिषदो तत्तदाद्याक्षरेण शाङ्करभाष्यस्य च भा इति सङ्केतेन सङ्केतः कृतः । वाणीविलाससंस्कृतपुस्तकालयतः प्रकाशितपुस्तकस्था पत्रपार्श्वसङ्ख्या । गीताभाष्यस्यापि (गी भा) पत्रपार्श्वसङ्ख्या यथोक्तस्थानप्रकाशितपुस्तकस्था एव । सूत्रभाष्यं तु निर्णयसागरमुद्रणालयप्रकाशितम् । अवशिष्टानां तु सङ्केतानां विवरणमत्र दीयते ॥

| सङ्केत | विवरणम् |
|---|---|
| उप , उप सा | उपदेशसाहस्री, (मैसूर 'ओरियंटल् लैब्ररी' प्रकाशिता) |
| गौ का | गौडपादाचार्यविरचिता माण्डूक्यकारिका |
| गौ सू | गौतमधर्मसूत्रम् |
| जै | जैमिनीयसूत्रम् |
| तै आ | तैत्तिरीयारण्यकम् |
| तै ब्रा | तैत्तिरीयब्राह्मणम् |
| तै वा | तैत्तिरीयवार्तिकम् |
| त वा | तन्त्रवार्तिकम् |
| न्या सू | न्यायसूत्रम् |
| न्या भा वा | न्यायभाष्यवार्तिकम् |
| प वि | पञ्चपादिकाविवरणम् |
| परा उप | पराशरोपपुराणम् |
| बृ वा | बृहदारण्यकवार्तिकम् |
| ब्र सि | ब्रह्मसिद्धि |
| मनु | मनुसंहिता |
| वा भा | वाचस्पतिमिश्रविरचिता भामती |
| शा भा | शाबरं भाष्यम् |
| श्लो वा | श्लोकवार्तिकम् |
| स वा | सम्बन्धवार्तिकम् |



श्रीसच्चिदानन्देन्द्रसरस्वतीस्वामिन

॥ ॐ ॥

# नैष्कर्म्यसिद्धिः

( क्लेशापहारिणीसहिता )

— § —

## १. सम्बन्धोक्तौ ग्रन्थावतारिका

आब्रह्मस्तम्बपर्यन्तैः सर्वप्राणिभिः सर्वप्रकारस्यापि दुःखस्य स्वरसत एव जिहासितत्वात्, तन्निवृत्त्यर्था प्रवृत्तिरस्ति स्वरसत एव। दुःखस्य च देहोपादानैकहेतुत्वात्। देहस्य च पूर्वोपचितधर्माधर्ममूलत्वात्, अनुच्छित्तिः। तयोश्च विहितप्रतिषिद्धकर्ममूलत्वादनिवृत्तिः। कर्मणश्च रागद्वेषास्पदत्वात्, रागद्वेषयोश्च शोभनाशोभनाध्यासनिबन्धनत्वात्, अध्यासस्य चाविचारितसिद्धद्वैतवस्तुनिमित्तत्वात्, द्वैतस्य च शुक्तिकारजतादिवत् सर्वस्यापि स्वतःसिद्धाद्वितीयात्मानवबोधमात्रोपादानत्वात्, अव्यावृत्तिः। अतः सर्वानर्थहेतुरात्मानवबोध एव। सुखस्य चानागमापायिनोऽपरतन्त्रस्य आत्मस्वभावत्वात् तस्यानवबोधः पिधानम्। अतस्तस्यात्यन्तोच्छित्तौ अशेषपुरुषार्थपरिसमाप्तिः। अज्ञाननिवृत्तेश्च सम्यग्ज्ञानस्वरूपलाभमात्रहेतुत्वात् तदुपादानम्। अशेषानर्थहेत्वात्मानवबोधविषयस्य चानागमिकप्रत्यक्षादिलौकिकप्रमाणाविषयत्वात्, वेदान्तागमवाक्यादेव सम्यग्ज्ञानम्। अतोऽशेषवेदान्तसारसंग्रहप्रकरणमिदमारभ्यते॥

# क्लेशापहारिणी

तमौपनिषदात्मानं पुरुषं सर्वसाक्षिणम् ।
नैष्कर्म्यसिद्धये नित्यं नौमि शङ्कररूपिणम् ॥ १ ॥

नैष्कर्म्यसिद्धिं परमां दयालु-
र्व्यरचयत् पुरा यस्तद्धिताय योऽसौ ।
तं वासुदेवं विनिवेश्य चित्ते
नैष्कर्म्यसिद्धेर्विवृतौ यतिष्ये ॥ २ ॥

श्रुतिशङ्करवाक्यानामाद्यन्तत्वप्रदायकम् ।
सुरेश्वरोऽनुगृह्णातु ज्ञानं नैष्कर्म्यसिद्धिगम् ॥ ३ ॥

नैष्कर्म्यसिद्धिं सुसुखं यदीयवर्तुं यदीच्छथ ।
क्लेशापहारिणीं व्याख्यां भजतैतां समादरात् ॥ ४ ॥

प्रकृतव्याख्यानस्य संबन्धप्रयोजने –

इह खलु भगवान् श्रीसुरेश्वराचार्यः सकलमुमुक्षुजनप्रेप्सितं परमं निःश्रेयसं सर्वकर्मसन्न्यासपूर्वकात् वेदान्तवाक्यश्रवणजन्यात्मज्ञाननिष्ठारूपाद् धर्मात् सिध्यति न साधनान्तरात् इतीमं श्रीशङ्करभगवत्पादसमतं वेदान्तसिद्धान्तं समहेणाऽऽविश्चिकीर्षुः अन्वर्थाभिधानं नैष्कर्म्यसिद्धिं नाम प्रकरणं श्लोकसंदर्भरूपम् उपनिबबन्ध । तच्च प्रसन्नगम्भीरं मन्दमतीनां दुष्प्रवेशं मा भूदिति व्याख्यातॄणां स्वाभिप्रायग्रहणसामर्थ्यविधायिनीं सम्बन्धोक्तिमपि दुर्व्याख्यानावकाशनिवारिणीं स्वयमेव चोदाजहार[1] । तथापीदं ग्रन्थरत्नं कालेन विविधविरुद्धप्रक्रियासमिश्रव्याख्यानाकुलितचित्तानां जिज्ञासूनां दुरूहतत्त्वमेव संवृत्तम् इत्यतोऽहं ग्रन्थकर्तृविरचितवार्त्तिकोपनीतां पाठकानां सर्वक्लेशापहारिणीम् इमां व्याख्यां विशुद्धवेदान्तप्रक्रियाप्रकाशिनीं प्रस्तौमि ॥

---

1 'सम्बन्धोक्तिरियं शास्त्री प्रतिश्लोकमुदाहृता । नैष्कर्म्यसिद्धेर्नैवास्य व्याख्यानाशो भवेद् ध्रुवम् ॥' इति समाप्तिश्लोकोऽत्रानुसंधेयः ॥

संबन्धोक्त्यवतरणिका —

तत्र 'खानिलाद्यब्धरित्यन्तम्' इत्यादिर्नैष्कर्म्यसिद्धेर्मङ्गलश्लोकः। तत्सहितस्यास्य प्रकरणस्य अवतारिकां करोति संबन्धोक्तौ ग्रन्थकृत् 'आब्रह्म-स्तम्बपर्यन्तैः' इत्यादिना 'प्रकरणमिदमारभ्यते' इत्यन्तेन ॥

प्रकरणस्यारम्भणीयत्वे शङ्का —

अत्राहुः केचित्। नारम्भणीयमिदं प्रकरणम्। विषयाद्यनुबन्धाभावात्, तथा हि — न तावदस्यासाधारणो विषयोऽस्ति। न चात्मज्ञानमेव सोऽस्त्विति वाच्यम्। आत्मनः सुप्रसिद्धत्वात् तत्र जिज्ञासानुपपत्तेः। न हि प्रसिद्धमपि जिज्ञासन्ते प्रेक्षावन्तः। आत्मा च अत्यन्तं प्रसिद्धः; जिज्ञासोः स्वरूपत्वात्। अत एव तज्ज्ञानमपि सुप्रसिद्धमिति सुतरामजिज्ञास्यम्। तदेवं नास्त्यस्य प्रकरणस्यासाधारणो विषयो यदधिगमनार्थं प्रकरणमारभ्येत। अभ्युपगम्यापि विषयं न प्रयोजनमस्य प्रकरणस्य संभावयामः। ननु निःश्रेयसप्राप्तिः प्रयोजनं भविष्यति; तत्साधनभूतस्य ज्ञानस्यात्र निरूपणात्। न। तस्याः साधनान्तरायत्तत्वात्। वेदविहितकर्मोपासनादिसाधनायत्ता हि निःश्रेयस-प्राप्तिः, न तु सा नित्यसिद्धात्मज्ञानादेव केवलात् सेद्धुमर्हति। अत एवास्य ग्रन्थस्य प्रकरणत्वमपि नोपपद्यते। शास्त्रसबद्धं हि प्रकरणं नाम। प्रवृत्ति-निवृत्तिप्रयोजनं च शास्त्रम्। तत्र नात्मज्ञानं शास्त्रार्थः; तद्धि न प्रवर्तकम्, नापि निवर्तकम्। तस्माच्छास्त्रेणासबद्धत्वान्नेदं प्रकरणम्। तस्मान्नारम्भ-णीयमिति ॥

शङ्कापरिहारः संक्षेपतः —

तामिमां विषयप्रयोजनाद्यभावशङ्कां वेदान्तशास्त्रविषयप्रयोजनकथन-द्वारेणैव परिहरिष्यन्नाह — आब्रह्मस्तम्बपर्यन्तैरित्यादि। इदमत्राकूतम्। न तावद्विषयादिरहितं प्रकरणम्। असाधारणविषयप्रयोजनवद्वेदान्तशास्त्रैकदेश-संबद्धत्वादेव अस्यापि तद्वत्त्वोपपत्तेः। वेदान्तशास्त्रस्य च सकलदुःख-निवृत्तिपूर्वकात्यन्तिकसुखप्राप्तिरूपनिःश्रेयसप्रयोजनवदात्मज्ञानाभिव्यञ्जकत्वेन

भवति । प्रवृत्तिनिवृत्त्योः स्वरसत एव प्राणिषु प्राप्तत्वात् तत्र शास्त्रव्यापारस्यानपेक्षणात् । दुःखहेतुप्रहाणं तु स्वात्मविज्ञानादेवेति युज्यते तदर्थं शास्त्रव्यापारस्यापेक्षणम् । तथा च सिद्धमात्मज्ञानोपदिद्वारा दुःखनिवृत्तिरूपं प्रयोजनं प्रकरणस्येति – इति भावः ॥

दुःखनिमित्तं धर्माधर्महेतुकं जन्म –

ननु भवतु दुःखप्रहाणाय स्वरसत एव सर्वप्राणिनां प्रवृत्तिरिति । नैतावता आत्मज्ञानस्यैव तत्रापेक्षा भवति । दृष्टेनैवोपायेन केनचिद्दुःखप्रहाणोपपत्तेः । तत्राह – दुःखस्य च देहोपादानैकहेतुत्वात् इति । देहोपादानं देहग्रहणं जन्मशब्दवाच्यम् ; तदेकहेतुत्वात् । सति देहे दुःखप्रहाणानुपपत्तिरिति भावः । यद्यपि दृष्टैरप्युपायैर्दुःखस्य निवृत्तिर्भवति तथापि सति देहे तस्यात्यन्तिकी निवृत्तिर्न सम्भवति । क्षुधादिनिमित्तदुःखस्य भोजनादिना निवृत्तावपि पुनरनुवृत्तिदर्शनात् । आत्यन्तिकनिवृत्तिरत्र प्रयोजनत्वेन विवक्षिता इति भावः । ननु भवतु देहानुवृत्तिपर्यन्ता दुःखानुवृत्तिः । देहोच्छित्तेरनन्तरं तु स्यादेव तन्निवृत्तिः । तत्राह – 'देहस्य च पूर्वोपचितधर्माधर्ममूलत्वात्, अनुच्छित्तिः' इति । नैतत् संभवि देहोच्छित्तेरूर्ध्वं दुःखनिवृत्तिः स्यादिति । कुतः ? देहसामान्यस्य पूर्वोपचितधर्माधर्ममूलत्वात् । एतद्देहस्य हि पूर्वं जन्मान्तरेषु उपचितयोः रागादिजनयोः धर्माधर्मयोः पुण्यापुण्ययोः एकदेश एव मूलम् । अतो यावत् सञ्चितपुण्यपापयोः शेषः, तावत् तत्तत्फलभोगहेतोर्देहोपादानम् अशक्यनिवारणम् । न च देहोपादाने सति धर्माधर्मोपचयो न भवति । तथा चैतद्देहपातेऽपि देहान्तरोपादानस्यावश्यम्भावात्, न सर्वथा देहस्योच्छित्तिः, देहमात्रस्य नाशो भविता । ततश्च तत्तद्देहोपादानहेतुकस्य दुःखस्याप्यनुच्छित्तिरेव । यद्यपि कदाचित् किञ्चिद्दुःखं सत्यपि देहे निवर्तते, तथापि नैव सर्वथा सर्वदुःखानां निवृत्तिः सति धर्माधर्ममूले देहसन्ताने संभवति । देहो हि सुखदुःखभोगायतनम् इति भावः ॥

पारम्पर्येण तद्धत्त्वसिद्धेः । यदुक्तम् – 'आत्मनः सर्वस्य स्वरूपत्वेन सुप्रसिद्धत्वात्, अजिज्ञास्यत्वे सति तज्ज्ञानस्य सुतरामजिज्ञास्यत्वम्' इति । तदसत् । आत्मनः स्वरूपत्वेन ज्ञातत्वेऽपि अद्वितीयपरमात्मत्वेनाज्ञातत्वात् जिज्ञास्यत्वोपपत्तेः । तादृशात्मज्ञानस्वरूपे च वेदान्तवाक्यैकजन्यत्वोपासनारूपत्वप्रसङ्ख्यानजन्यानुभवरूपत्वादिप्रकारविशेषं प्रति वादिविप्रतिपत्तिदर्शनात्, तस्यापि जिज्ञास्यत्वोपपत्तेः । न च दुःखात्यन्तनिवृत्त्यात्यन्तिकसुखप्राप्तीत्येतदुभयलक्षणस्य शास्त्रप्रयोजनभूतस्य निःश्रेयसस्य तत्प्राप्तेर्वा ज्ञानातिरिक्तसाधनायत्तत्वम् । साधनायत्तस्य कृतकत्वादनित्यत्वे निःश्रेयसस्वरूपस्यैवासिद्धिप्रसङ्गात् । तदेवं तावत् आत्मनः, तज्ज्ञानस्य च, जिज्ञास्यत्वे सिद्धे शास्त्रस्य सविषयत्वं सप्रयोजनत्वं च सिद्धम् । अत एव प्रकृतग्रन्थस्य शास्त्रैकदेशभूतज्ञानप्रतिपादनसंनद्धत्वात् प्रकरणत्वम् विषयाद्यनुबन्धवत्त्वं च निष्प्रत्यूहं सिद्धम् इत्यारम्भणीयमेवेदं प्रकरणमिति । तदेतत् सर्वं मनसि निधाय प्रकरणस्य विषयप्रयोजनादिमत्त्वं मङ्गलश्लोकेनैव समुचितं मूले । तदेव च सम्बन्धग्रन्थे स्फुटयितुमाह – 'आब्रह्मस्तम्बपर्यन्तम्' इत्यादिना 'प्रकरणमिदम् आरभ्यते' इत्यन्तेन ॥

दुःखनिवृत्तौ स्वरसत एव प्रवृत्तिः प्राणिनाम् –

तत्र तावद् दुःखस्य ज्ञानैकनिवर्त्यत्वोपपादनाय तस्याज्ञानकृतत्वप्रदर्शनार्थम् 'अतः सर्वानर्थहेतुरात्मानवबोध एव' इत्यन्तो ग्रन्थः । तस्यायमर्थः । आब्रह्मस्तम्बपर्यन्ते, आब्रह्म च ते स्तम्बपर्यन्ताश्च कमलासनमारभ्य स्थावरान्तं ये स्थिताः ते सर्वैरपि प्राणिभिः, सर्वप्रकारस्यापि आध्यात्मिकाधिभौतिकाधिदैविकरूपभेदेनानुभूयमानस्य सुखत्वेन सुखप्राचुर्येण वा मिश्रस्य दुःखस्य वार्तमानिकस्यागामिनो वा, स्वरसत एव स्वेच्छयैव शास्त्राचार्याद्युपदेशं विनापि, जिहासितत्वात् हातुं निवारयितुं च इष्टत्वात्, तादृशदुःखनिवृत्त्यर्थं प्रवृत्तिरपि स्वरसत एव भवतीति सर्वेषां न प्रत्यक्षमेतत् । तत्र यदुक्तं शङ्कावादिना प्रवृत्तिनिवृत्तिप्रयोजनं शास्त्रमिति, तदनेन प्रत्युक्त

अध्यासात्य मिथ्याज्ञान प्रवहति तावद्रागद्वेषाववश्यभाविनौ । ततश्च कर्मणि प्रवृत्तिरिति न तद्व्यावृत्ति सम्भवति । न च शोभनाशोभनमति सम्यग्ज्ञानमेवेति युक्तम् । अव्यभिचारिण्येव वस्तुनि व्यभिचारित्वात् । एकस्मिन्नेव हि वस्तुन्यवस्थान्तरानापन्ने एकस्यैव पुरुषस्य कदाचित् शोभनमिति मतिर्भवति कदाचित्त्वशोभनमिति । तदेव यावच्छोभनाशोभनाध्यास, तावद्रागद्वेषसन्तानाव्यावृत्ति , यावच्च रागद्वेषौ, तावत्तदास्पदस्य कर्मणो न व्यावृत्ति । ततश्च ध्रुव धर्माधर्मोपचयो, देहोपादानम्, दु खोदयश्चेति न दु खोच्छित्ति कथमपि सम्भावनीया–इति स्थितम् ॥

**मिथ्याज्ञानं स्वात्मानवबोधमात्रनिबन्धनम् –**

स्यादेतत् । यद्येव दु खस्य परम्परया मिथ्याज्ञानकृतत्वम्, तर्हि मिथ्याज्ञानेनैव परिहृतेन दु खोच्छित्तिर्भविष्यति, किमनेनाद्वैतात्मज्ञानेन ? तथा हि न्यायविदा सूत्रम् 'दु खजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग ' (न्या सू १–१–२) इति । उत्तरमुत्तर यदा अपैति, तदा तत्तदनन्तरपूर्वमपैति , एव च मिथ्याज्ञाननिवृत्तिरेव परम्परया दु खव्यावृत्त्युपाय – इति सूत्रार्थ । अत्रोच्यते 'अध्यासस्य चाविचारितसिद्धद्वैतवस्तुनिमित्तत्वात् , द्वैतस्य च शुक्तिकारजतादिवत् सर्वस्यापि स्वतःसिद्धाद्वितीयात्मानवबोधमात्रोपादानत्वात् अव्यावृत्ति.' शोभनाशोभनाध्यासरूपमिथ्याज्ञान हि द्वैतवस्तुनिमित्तम् । यावद्धि द्वैत वस्तु सदिव प्रतीयते तावदेतन्मिथ्याज्ञान नैवापैति । तच्च द्वैत न वस्तुसत् परमार्थत , कि तर्हि केवलम् अविचारितसिद्धम् । 'यत्र हि द्वैतमिव भवति तदितर इतर पश्यति ' (बृ ४–५–१५) इत्यादिश्रुते । अविचारितसिद्धत्वे दृष्टान्त 'शुक्तिकारजतादिवत्' इति । यदा हि विचारेण 'इय शुक्तिकैव' इति निश्चिता बुद्धिर्जायते तदा नैव रजतावभासो भवति । यदा पुनर्विचारमकृत्वैव मतिनयनदोषादिवशात् 'रजतम्' इति निश्चिनोति तदैव तद्रजतमवभासत इत्यविचारितसिद्ध शुक्तिकारजतम् । एव रज्जुसर्पादिकमपि ज्ञेयम् । तदेवम् अविचारितसिद्धस्य द्वैतस्य सर्वस्यापि शुक्तिकारजतादिवत् स्वत सिद्धाद्विती

## धर्माधर्मयोश्च कर्महेतुकत्वम् –

अथ मत धर्माधर्मयोरेव निवृत्त्या देहोपादान न भविष्यति, तथा च दु खमपि निवर्तत इति । एतदपि न शक्यमित्याह – 'तयोश्च विहित-प्रतिषिद्धकर्ममूलत्वादनिवृत्तिः' इति । अयमभिप्राय । धर्माधर्मयोर्हि शास्त्रविहितप्रतिषिद्धकर्मणी मूलम् । विहितकर्मानुष्ठानाद्धर्मोपचय , प्रतिषिद्ध कर्मानुष्ठानाच्चाधर्मोपचय इति शास्त्रसिद्धमेतत् । प्राणिनस्तु सर्वे सर्वदा यत्किञ्चित्, विहित प्रतिषिद्ध वा, कर्म कुर्वन्त एव वर्तन्त इति सति देहे धर्माधर्मोपचय न शक्नुवन्ति सर्वथा वारयितुम् । धर्माधर्मौ च दु खमूलम् । यद्यपि धर्मस्य इष्टप्रासिद्वारेण सुखकारणत्वात् तस्य दु खमूलत्वोक्तिर्न घटत इव , तथापि तत्फलस्य सुखस्याल्पत्वात्, अस्थिरत्वात्, बहुलायाससाध्यत्वात्, स्वभोगकालेऽपि सातिशयत्वात् ईर्ष्यादिजननद्वारा चित्तविक्षेपकरत्वात्, स्वक्षयिष्णु यचिन्तनतोद्वेगजनकत्वात्, क्षयदर्शननिमित्तसन्तापोदर्कत्वाच्च तस्यापि दु खत्वमेव परमार्थत इति धर्मोऽपि देहोपादानद्वारा दु खमूलमि युक्तम् इत्यदोष । अत एव दु खविचार परिसमाप्य परमार्थसुख हितमेव निरूप यिष्यतीत्य यदेतत् । तदेव धर्माधर्ममूलकस्य देहान्तरोपादानस्य तद्धेतुकस्य दु खस्य वा समुच्छेदो न शक्यप्रतिज्ञान इति स्थितम् ॥

## कर्म तु अध्यासोत्थरागद्वेषनिमित्तकम् –

ननु तर्हि नैव वय कर्म करिष्याम । तथा च धर्मादिद्वारक दु ख सहेतुक न भविष्यति । तत्र किमात्मज्ञानेनेति ? तदेतन्निराकरोति 'कर्मणश्च रागद्वेषास्पदत्वात्' इत्यादिना । अयमभिप्राय । न कर्मण सर्वथा परि वर्जन सम्भवति । कुत ? रागद्वेषास्पदत्वात् तस्य । रागद्वेषावेव हि समाश्रि य 'इद मे भूयात्' इति 'इद मा भूत्' इति वा तदिदिष्टमाहर्तुम्, अनिष्ट परिहर्तु वा प्रयतते कर्ता । तौ च रागद्वेषौ शोभनाशोभनाध्यासनिब धनौ । 'इद सुन्दरम्, इद न' इत्यतथास्वभाव एव वस्तुनि तथात्वमध्यस्य मिथ्या ज्ञानेनाध्यारोप्य खलु तस्मिन् राग द्वेष वा वहति जन । तथावदीदृशम्

प्राप्तप्रासव्यविभागमपेक्षत इति । परमार्थतस्तु न तत्सुखम् । आगमापायित्वात् परतन्त्रत्वाच्च । विषयेन्द्रियसंयोगलक्षणभोगजनितं पुरुषानुकूलतया विभावितं हि सुखमिति व्यपदिश्यते लोके । तत् कथं विषयेन्द्रियपरतन्त्रं सुखं भवेत् ? आत्मवशं हि सुखं नाम । किं च मनसो विषयाकारापत्तिरूपस्पन्दनं विना नैव वैषयिकं सुखं लभ्यते । तदेतदायासलभ्यं सत् कथं नाम सुखं भवेत् ? किं चेदं लौकिकं सुखं व्यभिचररूपम् । कथम् ? आगमापायित्वात् । विषयेन्द्रियमनःसंयोगादागच्छतीति लब्धोदयो भवति, तदन्यतमवियोगादपैति अस्तमेतीत्यागमापायस्वभावं लौकिकं सुखम् । अनित्यम् इत्यर्थः । उपलक्षणमेतत् । दुःखोदर्कं चेति द्रष्टव्यम् । उक्तं हि भगवता 'ये हि संस्पर्शजा भोगा दुःखयोनय एव ते । आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥' (गी ५-२२) इति । अपि च यदेवैकस्य पुरुषस्य सुखमिति भाति, तदेवापरेण पुरुषेण दुःखमिति विभाव्यते, एकस्यापि कालपर्ययेण तद्दुःखमिति भातीति प्रसिद्धमेतत् । तदेवम् आगमापायित्वपरतन्त्रत्वादिभ्यो हेतुभ्यो लौकिकं सुखं दुःखमेव सत् सुखमिति विपर्यस्यति जनः – इत्येतन्मनसि निधाय तद्विपरीतं परमार्थसुखं निर्दिशन् आह 'सुखस्य चानागमापायिनोऽपरतन्त्रस्यात्मस्वभावत्वात्' इति । 'विज्ञानमानन्दं ब्रह्म' (बृ ३-९-७-२८), 'आत्मानन्दः [illegible] स्वराड् भवति' (छा ७-२५-२) इत्यादिश्रुतिभ्य इति भावः । नन्वात्मस्वभाव एव चेत् प्राप्तमेव तदिति व्यर्थ एव तत्प्राप्तौ प्रयत्नः । तत्राह 'तस्याऽऽत्मानवबोधः पिधानम्' इति । सत्यं नित्यप्राप्तमेव सुखम्, आत्मस्वभावत्वात् । तथापि तु तदनवबोधमात्रेण पिहितमिव सन्न प्रकाशते प्राग् वेदान्तवाक्यजन्यज्ञानोत्पत्तेः । अतस्तज्ज्ञानार्थं यत्नः कार्य एवेति न प्रयत्नवैयर्थ्यमित्यभिप्रायः ॥

अज्ञानोच्छित्तिरेव परमपुरुषार्थः –

तदेवम् अभिलषितार्थस्य साधितत्वात् प्रकृतमुपसंहरति 'अतः' इत्यादिना 'परिसमाप्तिः' इत्यन्तेन । अतः दुःखोपशान्तेः सुखावाप्तेश्च आत्मानवबोधमात्रनिमित्तत्वात्, तस्य अनवबोधस्य अत्यन्तं पुनरावृत्तिराहित्य

यात्मानवबोधमात्रोपादानत्वम् । तन्मात्रनिमित्तप्रतीतिमत्त्वम् इति यावत् । यदा खलु 'आत्मैवेदं सर्वम्' इति निश्चितोऽवबोधो जायते तदैवेदं द्वैतं शुक्तिकारजतादिवत् सर्वात्मना व्यावर्तते । 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' (बृ ४-५-१५) इत्यादिश्रुतेः । एतच्चाग्रे स्फुटी करिष्यते । तदेवम् आत्मानवबोधस्य द्वैतवस्तुप्रतीति शोभनाशोभनाध्यास रागद्वेष विहितप्रतिषिद्धकर्मानुष्ठान धर्माधर्मोपचय देहोपादानपरम्परया दुःख संतानहेतुत्वात्, तस्मिन् सति दुःखस्योपायान्तरेण नात्यन्तिकी उच्छित्तिः सम्भवतीत्युपसंहरति 'अतः सर्वानर्थहेतुरात्मानवबोध एव' इति ॥

## आत्मानवबोधस्य दुःस्थितत्वम् –

अत्राद्वितीयात्मनः स्वतःसिद्धत्वविशेषणेन आत्मानवबोधस्यात्यन्तदुःस्थितत्वं ज्ञापितं भवति । न हि प्रमाणादिसर्वव्यवहाराश्रयत्वेन तद्व्यवहारात् प्रागेव स्वयंसिद्धस्य सर्वसाक्षिण आत्मनः साक्ष्यभूतप्रमाणव्यापारनिरस्यमानानवबोधाश्रयत्वं तद्विषयत्वं वा संभावयितुमपि शक्यम् । उद्घोषयति चोदर्के दुःस्थितत्वम् ग्रन्थशरीरे एव कण्ठरवेण ग्रन्थकृत् 'अतिदुःस्थोऽप्रबोधोऽत्र' (३-११०) इति । इत्थं चानवबोधस्य अत्यन्तदुःस्थितस्य निर्दुष्टात्मबोधकवाक्यजन्यज्ञानमात्रान्निवृत्तिरप्युपपद्यत इति ग्रन्थप्रतिपाद्यप्रधानविषयस्य बीजावापोऽयमिति ध्येयम् ॥

## दुःखपरिहारवत् सुखावाप्तिरप्यनवबोधकृतैव –

नन्वस्त्वेव दुःखहेतुरात्मानवबोध एवेति । तथा च भवतु नामात्मानवबोधनिवृत्तिरेव दुःखहानोपायः इति । सुखस्य तु प्राप्तौ साधनान्तरमेव मृग्यं भवति । सुखस्य हि प्राप्तिरिदानीमप्राप्तस्य । सा कथमज्ञाननिवृत्तिमात्राद् भवेत् ? किञ्च, सकलविधविभागानर्ह आत्मेष्यते भवता । अद्वैतत्वात् । न च तत्र प्राप्तृप्राप्यविभागस्य कथमप्यवकाशं पश्यामः । तत्राह – 'सुखस्य चानागमापायिनोऽपरतन्त्रस्य आत्मस्वभावत्वात् तस्य अनवबोधः पिधानम्' इति । अयमाशयः । सत्यं सुखप्राप्तिर्व्यवहारे

वाच्यं द्वैतोपादानमात्मपिधानं चाङ्गीकृतम्-इति। तदेतदनाकलितग्रन्थहृदाशयानां स्वोत्प्रेक्षामात्रम् इत्युपेक्ष्यम् । यतोऽत्र न द्वैतस्योपादानकारणत्वेन विवक्षितम् अज्ञानम्, मृदादिवद् घटादेः । नाप्यात्मसुखस्य समाच्छादकत्वेन, नीहारादिकमिव वृक्षादेः । किं तर्हि, शुक्त्यादिसम्यग्ज्ञानाभावात् रजतादिप्रतीतिवदात्माज्ञानमात्राद् द्वैतप्रतीतिः, तन्मात्रादेव च स्वरूपभूतस्यापि सुखस्यानवगमः – इत्येतावदिहोक्तम् । तदेतत् परस्तात् (सं.- ३-७) ग्रन्थमुखेनैव विशदीकरिष्यत इत्यलमिहातिप्रपञ्चेन ॥

सम्यग्ज्ञानं तु वेदान्तागमवाक्यादेव –

स्यादेतत् । भवतु सर्वमेवेदम् । तथापि किमर्थं वेदान्तप्रकरणारम्भः ? यद्यप्यज्ञानस्य निवृत्तिः सम्यग्ज्ञानोत्पत्तिमात्रादेव भवति, तथापि तु तत् सम्यग्ज्ञानं प्रत्यक्षाद्यन्यतमेनैव केनचित् प्रमाणेन सिध्येत्, किमागमपर्यन्तानुधावनेन ? अथाप्यागमवाक्यादेव तादृशं ज्ञानम् इत्याग्रहः, तर्हि योग्याप्तवाक्यरूपात् तद्भवतु, किं वेदान्तवाक्येनेति ? अत्रोच्यते ‘अशेषानर्थहेत्वात्मानवबोधविषयस्य चानागमिकप्रत्यक्षादिलौकिकप्रमाणाविषयत्वात्, वेदान्तागमवाक्यादेव सम्यग्ज्ञानम्’ इति । यद्विषयो हि योऽनवबोधः स तद्विषयकसम्यग्ज्ञानेनैव निवर्त्यः । अत्र च सर्वानर्थहेतुत्वेनोपवर्णितोऽनवबोधः आत्मविषयकः । तस्मात् स तद्विषयकसम्यग्ज्ञानेनैव निवर्त्यः । तत्र न तावत् अनागमिकप्रत्यक्षादीनि लौकिकानि प्रमाणानि प्रभवन्ति प्रकृतमनवबोधं निवर्तयितुम् । तेषामात्मविषयकत्वाभावात् । प्रत्यक्षानुमानोपमानार्थापत्त्यनुपलब्ध्याख्यानि प्रत्यक्षादीनि । तानि तावत् नात्मविषयाणि । अनागमिकत्वात् । न हि आगमवाक्यविलक्षणानां सविशेषपराक्प्रमेयमात्रप्रकाशकानां प्रत्यक्षादीनां प्रत्यगात्मविषयत्वं संभवति । अत एव हि श्रुतिः ‘कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुः’ (का. २-१-१) इति, ‘नैषा तर्केण मतिरापनेया’ (का. १-२-९) इति च । न च योगिवाक्यरूपादागमादपि प्रकृतानवबोधनिवर्तनपटीयस्सम्यग्ज्ञानं संभवेत् । योगिप्रत्यक्षस्यापि पराङ्मात्रविषयत्वेन स्वेतरलौकिकप्रमाणाविशेषात् । यथोक्तं बृहद्वार्तिके ‘नेनीयस्थूलमित्यादि-

यथा तथा उच्छित्तौ नाशे सति अशेषपुरुषार्थपरिसमाप्तिः । यद्यपि सुषुप्ति समाध्यादौ न संभवत्यनवबोध , तत्र बोधाबोधकार्यकारणसामग्र्यभावात् । तथापि न तत्र तदुच्छित्तिरत्यन्ताय भवति , पुनरुत्थाने सत्यनुवृत्तिदर्शनात् । अत उक्तम् 'अत्यन्तोच्छित्तौ' इति । तस्यां सत्याम् अशेषस्य पुरुषार्थस्य परिसमाप्तिः । एतावानेव खलु पुरुषार्थो नाम यद् हातव्यस्य दुःखस्य अत्यन्त हानम्, प्राप्तव्यस्य च परमार्थसुखस्य प्राप्तिश्चेति । अतोऽनवबोधोच्छित्तौ सकलोऽपि पुरुषार्थः परितः सम्यक् आप्तो भवति । न पुनः कियानप्यंश आप्तव्योऽवशिष्यत इत्यभिप्रायः ॥

सम्यग्ज्ञानात्मलाभमात्रादेवाज्ञाननिवृत्तिः –

नन्वेवम् आत्मानवबोधोच्छित्तौ यत्नः कार्य इत्यापतति, किमायातम् आत्मज्ञानस्येति ? अत्राह – 'अज्ञाननिवृत्तेश्च सम्यग्ज्ञानस्वरूपलाभमात्रहेतुत्वात् तदुपादानम् ।' इति । अनवबोधो नाम अज्ञानम्, ज्ञानाभाव एव । अतः सम्यग्ज्ञानस्वरूपलाभमात्रेण तन्निवर्तते । प्रतियोगिभावस्योपचितेरेव हि अभावस्य निवृत्तिः । अतो यदैव सम्यग्ज्ञानं स्वरूपं लभते, तदैव तदुत्पत्तिमात्रेण तदभावस्याज्ञानस्य निवृत्तिर्भवति । नात्र ज्ञानाभ्यासादिरूपं साधनान्तरम् अपेक्ष्यते । अत एव चात्र कर्मोपासनादिकमपि नोपयुज्यते । अविचारितसिद्धक्रियाकारकफलविभागरूपद्वैताश्रयत्वात् कर्मादेः । अतः परिहृत्यान्यत् साधनं तन्निवृत्तये सम्यग्ज्ञानोपादानमेव तत्सिद्ध्यर्थप्रयतनमेव स्वीकर्तव्यम् इत्यभिप्रायः ॥

आत्मानवबोधविषये एकदेशीयम् असङ्गतं व्याख्यानम् –

अत्र केचित्, द्वैतस्य आत्मानवबोधमात्रोपादानकत्वोक्त्या सुखस्यात्मानवबोधपिधानकत्वोक्त्या च मोहिताः, प्राहुः । न किलानवबोधस्य कस्यचिदुपादानत्वं पिधायकत्वं वा संभवति । अभावत्वात् । अतोऽग्रहणान्यथाग्रहणाभ्यामन्यदेव यत्किंचित् द्वैतस्योपादानम् आत्मस्वरूपसुखस्य च पिधानम् अभ्युपेयम् । तथाहि प्राचीनैः सम्प्रदायविद्भिराचार्यैर्मूलाविद्याशब्द

उपसंहारः –

तदेवं वेदान्तागमवाक्यजनितं विज्ञानम् आत्माज्ञानप्रहाणमुखेनाशेषपुरुषार्थसमाप्तिकृदिति स्थितम् । अथात्र ग्रन्थे तदेवैतद् वेदान्तवाक्यज्ञानं प्रतिपाद्यत इति ससम्बन्धाभिधेयप्रयोजनं प्रकरणमिदमारम्भणीयमेवेत्युपसंहरति '**अतोऽशेषवेदान्तसारसंग्रहप्रकरणमिदमारभ्यते**' इति । अतः वेदान्तवाक्यजन्यज्ञानादेव वर्णितविधया परमपुरुषार्थसिद्धेः, अशेषाणां वेदान्तानां यः सारः सर्वोपनिषत्प्रतिपाद्यात्मज्ञानं तस्य संग्रहः स्वरूपकार्यादिनिरूपणेन संक्षेपकथनम् यस्मिन् तदीदृशमिदं प्रकरणम् आरभ्यते । वेदान्तरूपशास्त्रस्य एकदेशेन आत्मवस्तुनिरूपणेन संबद्धत्वात्, तस्यैव च कार्यान्तरे संग्रहेण वाक्यज्ञानस्वरूपादिनिरूपणे स्थितत्वाच्च, अस्य ग्रन्थस्य प्रकरणत्वमप्युपपन्नम् इति भावः । तथा हि प्रकरणलक्षणविदो वदन्ति 'शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम् । आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ॥' (परा. उप. १८-२१) इति ॥

---

वाक्याद्योऽर्थोऽवगम्यते । योगिप्रत्यक्षगम्योऽय न हि प्रत्यक्त्वहेतुत ॥'
(बृ वा २-४-१७१) इति । अशेषविशेषनिराकरणरूपाद् वेदान्त
वाक्यादेव योऽर्थ आत्मरूपोऽवगम्यते, स न योगिप्रत्यक्षगम्य । नित्य
प्रत्यक्स्वभावत्वात्, लौकिकप्रत्यक्षादिवदेव योगिप्रत्यक्ष प्रत्यग्यात्मत्वात्,
पराक्प्रवणस्य योगिप्रत्यक्षस्य स्वप्रत्यगात्मनि प्रवृत्त्यनुपपत्ते –इति वार्तिकार्थ ॥

वाक्यजन्यज्ञानादन्यत् साक्षात्काररूप ज्ञान न ग्रन्थकृन्मतम् –

'आगमिकप्रत्यक्षम् आगमवाक्यजन्य साक्षात्कारलक्षणम्, तत्र
भवतीत्यनागमिकप्रत्यक्षम्' इति केचिद् व्याचक्षते । तत्र वाक्यजन्यमेव
ज्ञान प्रत्यक्षम्, आत्मन परोक्षतापादकस्यानवबोधस्य नितरा विनाशकत्वात्
– इति यद्यभिप्राय, तर्हि न कोऽपि दोष । 'अनागमिकप्रत्यक्षादि' इत्यत्र
प्रत्यक्षपदार्थस्य आदिपदार्थेनान्वयस्तु सुघटो भवति । यदि पुन वाक्यजन्य
ज्ञानात् अर्थान्तरं साक्षात्कारलक्षणम् आगमिकप्रत्यक्ष विवक्ष्यते, तर्हि तस्य
ग्रन्थकृतैव अग्रे (१–६७ सं) निराकरिष्यमाणत्वात् अनादरणीयमेव भवति
व्याख्यानम् । अत, अनागमिकानि यानि प्रत्यक्षादीनि प्रमाणानि तेषाम्
अविषयत्वात् वेदान्तागमवाक्यादेव सम्यग्ज्ञानम् । वेदान्तेषु य आगम
'तत्त्वमसि' (छा ६–८–७), 'नेति नेति' (बृ २–३–६), 'अस्थूलमनणु'
(बृ ३–८–८)–इत्यादिरूप उपदेशविशेष, तस्मादेव भवेत् प्रकृताज्ञान
निवर्तक सम्यग्ज्ञानम्, न प्रमाणान्तरात् तार्किकसमतसर्वज्ञप्रणीतागमाद्वा
– इत्यर्थोऽवसेय । 'त त्वौपनिषद पुरुष पृच्छामि' (बृ ३–९–२६) इति
श्रुते । 'वेदान्तागमवाक्यादेव' इत्येवकारेण प्रसंख्यानादिजन्य ज्ञानमिति
मतनिरासो विवक्षित । 'वैदिकागमवाक्यादेव' इति वक्तव्ये वेदान्तग्रहणम्
एतत् सूचयति यत् कर्मवाक्यमुपासनावाक्य च वैदिकागमरूप सदपि
प्रकृताज्ञानापनोदक ज्ञान जनयितु नालमिति । तत्र कारण तु क्रियाकारक
फलविभागरूपाविद्यासिद्धद्वैताश्रयत्वमित्युक्तम् (पृ १०) । एतच्च सर्वं
ग्रन्थमध्य एव स्फुटीभविष्यतीत्यलमतिप्रपञ्चेन ॥

ग्रन्थाद् बहिरपि कृतात् परमेश्वरनमस्कारात् एतत् सिध्यति, तथापि शिष्टाचार-परिपालनं कर्तव्यमिति शिष्यजनशिक्षार्थं ग्रन्थनिबन्धनद्वारेण मङ्गलमाविष्कृतम् । तदपि शिष्यशिक्षणं स्वाभिलषितार्थान्तर्गतमेवेति हृदयम् । ननु गणेशादिस्तुत्याप्यभिलषितार्थप्रचयः सिध्यति । तत्र किं विशिष्टदेवता-नमस्कारेण ? उच्यते । न केवलमभिलषितार्थप्रचयाय, अपि तु प्रकरणार्थ-संसूत्रणाय चायमाद्यः श्लोकः । प्रकरणप्रतिपाद्योऽर्थः सम्यक्सूचितो ह्यस्मिन् श्लोके । य एव हि वेदान्तानामर्थः प्रत्यगात्माभिन्नपरदेवताज्ञानम्, तेन च सर्वानर्थहेतोरज्ञानस्य समुच्छित्तिः, स एवात्र प्रकरणे संग्रहेण प्रतिपाद्यत इत्युक्तम् । तत्संसूत्रणाय चात्र विशिष्टा परा देवता नमस्क्रियते । आद्यश्चायं श्लोकः प्रकरणस्य । आदावेव संबन्धविषयप्रयोजनानां संसूत्रणे हि प्रेक्षावतां प्रकरणे आदरेण प्रवृत्तिर्भवेदिति ॥

मङ्गलश्लोकाभिप्रायः –

खानिलाग्न्यब्धरित्र्यन्तमिति ॥ अयमत्र श्लोके संसूत्रितोऽर्थः । आहरति, आनयति स्वमायया स्वस्मादनन्यदेव सदपि तत्त्वान्यत्वाभ्यामनिर्वचनीयेन रूपेण सर्वमिदं जगत् अविद्यातिमिरार्तानां विमूढानां दृष्ट्या इति, उपसंहरति च स्वस्मिन्नेव, जलशोषणेन सूर्यकमिव सूर्यः सर्वं संसार-प्रपञ्चं प्रगतानामविद्याविनाशनेनेति हरिः, परमेश्वरः । तस्मादेव हि हरेः सर्वमिदं खानिलाग्न्यब्धरित्र्यन्तं जगत् उद्धृतम्, तस्मिन्नेव चोपसंह्रियते । 'यतो वा' (तै. ३-१) इत्यादिश्रुतिप्रामाण्यात् । 'खानिलाग्न्यब्धरित्र्यन्तम्' इति तु आकाशादिभूम्यन्तम् इति लुप्तादिपदकत्वेन व्याख्येयम् । 'हिरण्यगर्भ-मारभ्य' पञ्चभूतान्तं जगत्' इत्यध्याहारेण वा । सर्वथापि पञ्चभूतोपलक्षितं जगत् यतः श्रीहरेरद्भुतं उद्धृतं तिष्ठति तस्मै हरये नमः इत्यभिप्रायः । किं परमार्थत एवोद्धृतम् ? न । कथं तर्हि ? स्रक्फणीव । यथा स्रजः मालायाः अनिश्चितस्वरूपायाः सकाशात् तदज्ञानादेव केवलं मालासर्पस्ततः समुद्धृत इव तत्र तिष्ठन्निव च भाति । एवमात्माज्ञानादेव केवलं पञ्चभूतात्मकं जगत्

1. द्रष्टव्यं तैत्तिरीयवार्तिकम्, अस्मदीयमानन्दवल्लीभाष्यव्याख्यानं चात्र विदये ॥

# अथ प्रथमोऽध्यायः

( नैष्कर्म्यज्ञानादेव मोक्षः )

—§०§—

## २. मङ्गलाचरणपूर्वकं ग्रन्थारम्भप्रतिज्ञा

( मूलम् )

तत्राभिलपितार्थप्रचयाय प्रकरणार्थसंसूत्रणाय[1] चायमाद्यः श्लोकः —

खानिलाग्न्यब्धरित्र्यन्तं स्वस्फुरणीत्वोद्गतं यतः ।
ध्वान्तच्छिदे नमस्तस्मै हरये बुद्धिसाक्षिणे ॥ १ ॥

स्वसंप्रदायस्य चोदितप्रमाणपूर्वकत्वज्ञापनाय विशिष्टगुणसंबन्ध-संकीर्तनपूर्विका गुरोर्नमस्कारक्रिया —

अलब्ध्यातिशयं यस्माद्व्यावृत्तास्तमवादयः ।
गरीयसे नमस्तस्मा अविद्याग्रन्थिभेदिने ॥ २ ॥

( क्लेशापहारिणी )

मङ्गलश्लोकगतसंबन्धोक्तिविवरणम् —

अथ मङ्गलपूर्वकं प्रकरणार्थं सूचयति सिद्धौ । तत्र मङ्गलश्लोक-संबन्धोक्तिः — 'तत्राभिलपितार्थप्रचयाय प्रकरणार्थसंसूत्रणाय चायमाद्यः श्लोकः ' इति । तत्र प्रकरणेऽयम् आद्य. श्लोकः । स किमर्थः ? अभि-लपितार्थप्रचयाय इष्टार्थस्य प्रसिद्धये । इष्टोऽर्थ· प्रकरणस्य निर्विघ्नं परिसमाप्तिः, शिष्यपरम्परया अधिकारिषु विनियोगश्च । तत्सिद्ध्यर्थम् इत्यर्थः । यद्यपि

1. 'संसूचनाय ' पा· ॥

अथवा चोदितप्रमाणेत्येव पाठः । इदानीं गुरोः परमात्माभेदादिकं श्लोकोक्त्यैवार्थात् सिध्यति । सम्बन्धोक्तौ विशेषमेवाह 'स्वसंप्रदायस्य' इत्यादि—इति व्याख्येयम् । स्वस्य संप्रदायः गुरुपरम्पराप्राप्तविशिष्टवेदान्तसिद्धान्तप्रक्रियोपदेशरूपः, प्रसङ्ख्यानादिसंप्रदायेभ्यो विलक्षणः । तस्य चोदितप्रमाणपूर्वकत्वज्ञापनाय चोदितम् 'आचार्यवान् पुरुषो वेद' (छा ६ १४-२), 'गुरुमेवाभिगच्छेत्' (मु १ २-१२), 'तद्विद्धि प्रणिपातेन' (गी ४ ३४)—इत्यादिश्रुतिस्मृतिपरिप्रापितं प्रमाणम् आचार्योपदेशरूपम्, तत्पूर्वकत्वज्ञापनाय । संप्रदायस्य श्रुत्युक्तरीत्या स्वाविद्यानिरासचणाचार्यपूर्वकत्वं ज्ञापयितुम्—इत्यर्थः । विशिष्टगुणसम्बन्धकीर्तनपूर्विका असाधारणेन वक्ष्यमाणेन गुणेन स्वगुरोर्यः सम्बन्धः तत्संकीर्तनपूर्विका । अविद्यानिरासित्वरूपासाधारणगुणकथनपुरःसरा येयं नमस्क्रिया, सा स्वसंप्रदायस्य श्रुतिचोदितप्रमाणपूर्वकत्वज्ञापनाय — इति सम्बन्धः ॥

स्वगुरोरनितरसाधारणसंप्रदायत्वम् —

अलब्ध्वेति । यस्माद् गुरोः सकाशात् अन्यत्र अतिशयम् अलब्ध्वा अतिशायनबोधकाः तमप्, तरप्, इष्ठन्—इत्यादिप्रत्ययाः व्यावृत्ताः निवृत्ताः भवन्ति । तस्मिन्नेव विश्रान्तिं लभन्ते इति यावत् । तस्मै 'अविद्याग्रन्थि-भेदिने' इति हेतुसमर्थकं विशेषणम् । अविद्याग्रन्थिर्नाम आत्माज्ञानवशात् चिरकालोपचितो ग्रन्थिवद् दृढीकृतो मिथ्याज्ञानवासनाराशिः । स च तत्त्वदर्शिगुरूपदेशात् सद्य प्रणश्यति । 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' (छा ४-९-३), 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः । यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ॥' (गी ४-३४, ३५) इत्यादिश्रुतिस्मृतिभ्यः । न चावशिष्यते कश्चिदविद्यालेशः, यस्य समुच्छित्तये विद्यातिशयाकाङ्क्षया गुर्वन्तरोपसर्पणमिष्येत । तदेवं स्वगुरोरविद्याग्रन्थिभेत्तृत्वरूपानितरसाधारणगुणसंबन्धात् स्वस्यैव संप्रदायस्य उक्तप्रमाणकत्वं सिद्धमित्यभिप्रायः ॥ २ ॥

तस्माद् हरेरुद्गतमिव तस्मिंस्थितमिव च मिथ्यैव प्रतीयते इत्यर्थः। तदुक्तं बृहद्वार्तिके 'अज्ञानानुपमर्देन व्याकृतिर्यास्य जायते। स्वप्नविज्ञानवत्सासौ सत्यमेयव्यपाश्रया॥' (बृ. वा. १-२-१३२) इति। तस्य च हरेर्जगत्कारणस्य पारोक्ष्यं मा भूदित्याह 'बुद्धिसाक्षिणे' इति। बुद्धेरपि साक्षाद् द्रष्टा यः सर्वेषां प्रत्यगात्मा तदभिन्न एवासौ हरिर्न परोक्षो मन्तव्यः। 'अयमात्मा ब्रह्म' (बृ. २-५-१९) इति श्रुतेः। यदा चैव वाक्यतो ज्ञायते तदैव ध्वान्तं मिथ्याजगत्प्रतीतिकारणमज्ञानम् अत्यन्तं छिनत्तीत्यतोऽपि हरिरयमिति भावः। 'तस्मै नमः' इति तु मङ्गलार्थमित्युक्तम्॥ १॥

गुरुनमस्कारश्लोकसंबन्धोक्त्याशयविवरणम् –

अथ द्वितीयश्लोकाभिप्रायमाह 'स्वसंप्रदायस्य चोदितप्रमाणज्ञापनाय' इति। चकारो भिन्नक्रमः। 'उदितप्रमाणपूर्वकत्वज्ञापनाय च' इति संबन्धः। तथा च अभिलषितप्रचयप्रकरणार्थससूचनाभ्याम् अस्य ज्ञापनस्य समुच्चयः सिध्यति। प्रमाणभूतगुरोर्हि प्रकरणार्थभूतज्ञानविषयादात्मनोऽभेदो विवक्षितः। तस्य नमस्क्रिया स्वाभीष्टसिद्धिप्रदा चेति च। नन्वेवं देवतानमस्कारवचनं गुरुनमस्कारवचनं चेत्येतदुभयं स्वसंप्रदायस्य उदित प्रमाणपूर्वकत्वज्ञापकमित्यापद्यते। बाढम्, इष्टमेव तदापद्यते। स्वसंप्रदायो हि वस्तुतन्त्रज्ञानेनाज्ञानोच्छित्तौ तावतैव परमपुरुषार्थप्राप्तिरिति विशिष्टप्रक्रियोपदेशः। तस्य च उदितप्रमाणपूर्वकत्वम् 'ब्रह्मविदाप्नोति परम्' (तै. २-१), 'मुमुक्षुर्वै शरणमहं प्रपद्ये' (श्वे. ६-१८), 'आचार्यवान् पुरुषो वेद तस्य तावदेव चिरम्' (छा. ६-१४-२) इत्यादिश्रुतिभ्यः। तत्र पूर्वस्मिन् श्लोके परदेवतानमस्कारोक्तिव्याजेन परमात्मज्ञानस्य परप्राप्तिफलकत्वं सूचितम्; द्वितीये पुनस्तस्या एव देवताया गुरुमूर्तिरूपाया विशिष्टोपदेशेनाविद्याग्रन्थिभेत्तृत्वमुच्यत इति विशेषः। न चैवं संबन्धग्रन्थद्वयानर्थक्यमिति शङ्कनीयम्। आद्यश्लोकस्य प्रकरणार्थसमूत्रणप्राधान्यं द्वितीयस्य तु संप्रदायस्य प्रमाणपूर्वकत्वज्ञापनप्राधान्यमिति विवेचनेनावतरणिकाद्वयस्य सार्थक्योपपत्तेः॥

साधनमिति शिष्यशिक्षणार्थं श्लोकद्वयेन हरिगुर्वोर्नमस्कारो गुम्फितः । अथाधुना तादृशनमस्कारे निमित्तभूतो यः स्वाशयः वेदान्तवाक्यज्ञानव्याकरणेऽभिप्रायः, तमाविष्कर्तुम् इत्यर्थः ॥

वेदान्तेत्यादि । वेदान्तानामुदरे मध्ये स्थितमपि सगूढम् सछन्नम् गुरुदेवतानुग्रहं विना अप्राप्यम् इति यावत् । तेनावाप्तेन किं प्रयोजनमिति ? अत आह – समारोसारि स्वोत्पत्तिमात्रेणाविद्याकृतसंसारनाशनम् इत्यर्थः । किंस्वरूपं तत् ? तत्राह – वस्तुगम् अद्वितीयात्मवस्तुविषयकम् । वस्तुतन्त्रम् इति यावत् । अनेन कर्तृतन्त्रकर्मध्यानादिज्ञानं व्यावर्त्यते । तदीदृशं ज्ञानं वक्ष्ये व्याकरिष्ये इत्यर्थः । नन्वद्य यावत् किं न केनाप्युक्तं ज्ञानम्, येनागतार्थता प्रकरणस्य स्यात् ? तत्राह – अन्यैः स्वस्वसंप्रदायाध्वना व्याख्यातमपि न सम्यग्व्याख्यातम् । अतस्त्वया पुनरपि व्याकर्तव्यम् इति गुरोरनुशिक्षया लोकानुग्रहैकरसिकगुरोः अनुशासनेन शुद्धसंप्रदायवर्त्मना व्याकरिष्यामीत्यर्थः ॥ ३ ॥

स्वयंसिद्धात्मविषयकं ज्ञानमत्र प्रतिपाद्यम् –

उत्तरश्लोकसंबन्धः 'किंविषयम्' इति । यद्यपि वस्तुतन्त्रं वेदान्तवाक्यज्ञानमेव विषयः प्रकरणस्येत्युक्तमेव, तथापि किंविषयकं ज्ञानमत्र विवक्षितमिति वस्तुविशेषजिज्ञासोरयं प्रश्न इत्यदोषः । तदुपन्यासः । तस्य वस्तुन उपन्यासः 'समनन्तरश्लोके क्रियते' इति शेषः ॥

यत्सिद्धाविति । यस्यानुभवरूपस्य सिद्धौ यस्य सिद्धिमाश्रित्यैव इदम् इदंप्रत्ययगोचरस्य प्रमात्रादेः सिद्धिः प्रतीतिर्भवति व्यवहारे । यदसिद्धौ यस्य सिद्धेराश्रयं विना न किञ्चन न किञ्चिदपि सिध्येत् । न केवलं प्रमात्रादेः, किं तु तदभावस्यापि न सिद्धिर्भवेत् इत्यर्थः । निःसाक्षिकस्य कस्यचिदपि सिद्ध्यनुपपत्तेः – इति भावः । एतेनाऽऽत्मनो निरपेक्षसिद्धिरुक्ता भवति । तदिदमुक्तं बृहद्वार्तिके 'प्रमाता च प्रमाणं च प्रमेयो निश्चितिस्तथा । यस्मात्सिद्धात् प्रसिध्यन्ति तत्सिद्धौ किमपेक्षते ॥' (बृ वा १–

(मूलम्)

नमस्कारनिमित्तस्वाशयाविष्करणार्थः –

वेदान्तोदरसगूढं ससारोत्सारि वस्तुगम् ।
ज्ञान व्याकृतमप्यन्यैर्वक्ष्ये गुर्वनुशिक्षया ॥ ३ ॥

किंविषय प्रकरणमिति चेत् तदुपन्यासः –

यत्सिद्धाविदमः सिद्धिर्यदसिद्धौ न किञ्चन ।
प्रत्यग्धर्मैकनिष्ठस्य याथात्म्य वक्ष्यते स्फुटम् ॥ ४ ॥

विवक्षितप्रकरणार्थप्ररोचनाय अनुक्तदुरुक्तप्रामाण्यकारणशङ्का-
व्युदासेन स्वगुरोः प्रामाण्योपवर्णनम् –

गुरूक्तो वेदराद्धान्तस्तत्र नो वच्म्यशक्तित ।
सहस्रकिरणव्याप्ते खद्योतः किं प्रकाशयेत् ॥ ५ ॥

गुरुणैव वेदार्थस्य परिसमापितत्वात्, प्रकरणोक्तौ ख्यात्या-
द्यप्रामाण्यकारणाशङ्का इति चेत्, तद्व्युदासार्थम् उपन्यास.[1] –

न ख्यातिलाभपूजार्थं ग्रन्थोऽस्माभिरदीर्यते ।
स्वबोधपरिशुद्ध्यर्थं ब्रह्मविन्निकषाश्मसु ॥ ६ ॥

(क्लेशापहारिणी)

वेदान्तोक्तज्ञानमत्र विषयः –

अथ ग्रन्थारम्भ प्रतिजानीते चतुर्भि श्लोकै । तत्र प्रथमश्लोकसंबन्ध कीर्तयति – 'नमस्कारनिमित्तस्वाशयाविष्करणार्थ.' इति । 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्था प्रकाशन्ते महात्मन ॥' (श्वे ६–२३) इति श्रुतेर्देवताभक्तिर्गुरुभक्तिश्च वेदान्तार्थग्रहणेऽन्तरङ्ग

1 'आह' पा॥

ग्रन्थकर्तुरीप्सितं प्रयोजनम् –

शङ्कान्तरं निरस्यतेऽधुना इत्याह–गुरुणैवेति ॥ नेति ॥ न व्याख्याद्यर्थं ग्रन्थोक्तिश्चेत् किमर्थं तर्हि सा ? न तावद् वेदान्तसिद्धान्तप्रकाशनाय । गुरुणैव भाष्येषु तस्य प्रकाशितत्वात् । नापि तत्स्फुटीकरणाय । उपदेशसहस्र्यादौ स्फुटीकरणस्यापि निर्वृत्तत्वात्, अत्रोच्यते । यद्यपि गुरुणैव सिद्धान्तस्फुटीकरणमपि संपादितमस्ति, तथापि संप्रदायान्तरनिराकरणपूर्वकं वेदान्तवाक्यज्ञानं कुत्रापि संग्रहेण न निरूपितम् । अतोऽल्पमतीनां श्रोतॄणां कृते स्फुटमुच्यत इति यत् प्रतिज्ञातम् तन्निराबाधमेव । 'नो वच्मि' इति तु स्वौद्धत्यपरिहारार्थं वचनम् इत्यदोषः । अथेदानीं वक्तुर्ममापि व्याख्याद्यतिरिक्तं किञ्चित् प्रयोजनमस्ति प्रकरणनिर्माणेनेत्याह स्वबोधपरिशुद्ध्यर्थम् इति । ब्रह्मविद एव निकषाश्मानः, तेषु स्वबोधस्य परिशुद्ध्यर्थं परीक्ष्य योग्यता निर्धारणार्थम् । यथा निकषशिलासु घर्षणेन परीक्ष्य हेम्नः शुद्धिर्निर्धार्यते, एवं ममापि ब्रह्मविद्भिः सह वादेन बोधशुद्धिर्भविष्यतीत्यभिप्रायः ॥ ६ ॥

## २. प्रकरणार्थः संक्षेपतः

(मूलम्)

अनर्थानर्थहेतुपुरुषार्थतद्धेतुप्रकरणार्थसंग्रहज्ञापनायोपन्यासः –

ऐकात्म्याप्रतिपत्तिर्या स्वात्मानुभवसंश्रया ।
साऽविद्या संसृतेर्बीजं तन्नाशो मुक्तिरात्मनः ॥ ७ ॥

पुरुषार्थहेतोरवशिष्टत्वात् तदभिव्याहारः –

वेदावसानवाक्योत्थसम्यग्ज्ञानाशुशुक्षणिः ।
दन्दहीत्यात्मनो मोहं न कर्माप्रतिकूलतः ॥ ८ ॥

४–८७०) इति । तस्य प्रत्यग्धर्मैकनिष्ठस्य प्रत्यग्धर्मं प्रत्यक्त्वम् । तस्य एका मुख्या निष्ठा पर्यवसानं यस्मिन् तत् प्रत्यग्धर्मैकनिष्ठम् । सर्वान्तरत्वश्रुतेः । अथवा प्रत्यङ् चासौ धर्मश्च प्रत्यग्धर्मः, प्रत्यगात्मा । प्रत्यग्धर्मे एवैकस्मिन् निष्ठा पर्यवसानं यस्य वस्तुनः तदिदं प्रत्यग्धर्मैकनिष्ठम् । प्रत्यगात्माभिन्नम् इति यावत् । 'स आत्मा तत्त्वमसि' (छा ६–८–७) इत्यादिश्रुतेः । तस्य याथात्म्यं यथास्थितस्वरूपतत्त्वं वक्ष्यते स्फुटम् । एतेन वेदान्तेषूपदिष्टं तत्र शारीरकमीमांसायां तद्भाष्ये च न्यायतो निर्णीतमपि विषयान्तरमिश्रितत्वात् विप्रकीर्णरूपेणोक्तत्वाच्च मन्दमतीनां दुरवगाहम् । अतोऽत्र तदेव संक्षिप्य एकत्रैव सुस्पष्टमुच्यत इति प्रकरणस्य विशेषः प्रदर्शितः ॥ ४ ॥

गुरूक्तमेवात्र विशदीक्रियते –

'स्फुटं वक्ष्यते' इत्युक्तत्वात् स्वगुरुणा त्वयं वेदान्तार्थो न स्फुटमुक्तः, दुरुक्तो वा स्यात्– इति शङ्का समुन्मिषेत् । तथा च स्वसंप्रदायस्य चोदितं प्रमाणपूर्वकत्वं यत् प्रतिज्ञातं तद्बाधितं भवेत् । अत उक्तशङ्कानिरसनपूर्वकम् उत्तरश्लोकेन प्रामाण्योपवर्णनं क्रियते । तत्प्रामाण्योपवर्णनं तु न केवलं शङ्काबाधादिसमाधानार्थम्, किं तु विवक्षिते प्रकरणार्थे शिष्याणां रुच्युत्पादनेन सादरं ग्रन्थाध्ययने प्रवृत्तिजननार्थमपीत्याह – विवक्षितेत्यादि ॥

गुरूक्त इति । गुरुणा उक्त एव नानुक्तः । वेदराद्धान्तः वेदान्तसिद्धान्तः एवोक्तो न तु स्वकपोलकल्पितः – इति न दुरुक्तः । अतो नात्र प्रामाण्यकारणम् इति भावः । तत्र सिद्धान्ते गुरूक्ते नाधिकं वच्मि । तत् कस्मात् ? अशक्तितः, असामर्थ्यात् । तत्र दृष्टान्तः, 'सहस्रकिरणव्याप्त' इति । सद्योतः रात्रिमात्रे लब्धोपप्रकाशः सहस्रकिरणेन भानुना व्याप्ते सुप्रकाशिते विषये किम् अधिकं प्रकाशयेत् ? न किमपि । यथायं दृष्टान्तः, तथा बहुभिः प्रकारैर्गुरुभिरेवोक्ते वेदान्तसिद्धान्ते किमप्यनुक्तं वक्तुं नायमुद्यमः, नापि किंचिद् दुरुक्तं समीकर्तुम्, किं तु तदाकलनासमर्थानामर्थाय तदेव विशदीक्रियते मया इति भावः ॥ ५ ॥

कृतम् । प्रकरणकृत्तु मिथ्याप्रतिपत्तेरप्रतिपत्तिनिबन्धनत्वात् कारणध्वंसे कार्यध्वस्तेरवश्यभावाच्च अप्रतिपत्तिमेव अविद्यात्वेन व्यवजह्रु । तदुक्तं बृहद्वार्तिके 'यदेव नित्यमज्ञानं मिथ्याज्ञानं तदेव तु । कारणेतररूपेण तयोरव्यभिचारतः ॥' (बृ वा १-४-३८६) इति, 'मिथ्याधियोऽपि बाध्यत्वमनानैकसमन्वयात् । मूलध्वस्तौ हत तच्चेन्मिथ्याधीः किं करोति न' (बृ वा १-४-४३८) इति च । अधिकं त्वेतद्ग्रन्थभूमिरातोऽधिगन्तव्यम् । तदेवं परिभाषाभेदेऽपि न प्रक्रियाभेद इत्यलं प्रसङ्गागत प्रपञ्चेन ॥

अविद्याया अनुभवैकसिद्धत्वम् —

नन्वविद्या प्रमाणतः सिद्धा वा न वा ? सिद्धा चेत् तस्या उच्छेदानुपपत्तिः । वस्तुस्वभावस्योच्छेदासम्भवात् । न हि भावानां स्वभावो निवर्तेत, अग्नेरिवोष्ण्यस्वभाव । अथ न प्रमाणसिद्धा अविद्या, कस्तस्याः समुच्छेदाय प्रयतेतेति ? अत्राह — 'स्वात्मानुभवसंश्रया' इति । स्वात्मानुभवमात्र संश्रयतेऽविद्या स्वसिद्धये न प्रमाणम् इत्यर्थः । न हि घटविषयकम् अज्ञानं घटप्रमाणगम्य तद्बाध्यत्वात् तस्य । नापि प्रमाणान्तरगम्यम् । अन्यस्य अन्यविषयकप्रमाणगम्यत्वे सर्वस्य सर्वविषयकप्रमाणगम्यत्वप्रसङ्गात् । अपि च वस्तुनोऽज्ञातत्वं न प्रमाणकृतम् । सर्वत्र ज्ञातत्वस्यैव प्रमाणकृतत्वप्रसिद्धेः । यथोक्तं बृहद्वार्तिके 'अनातत्वं न मानेभ्यो ज्ञातत्वं तत्कृतं यतः । तैरप्यज्ञातता चेत् स्यात्काऽतिशीतिर्मितेर्भवेत् ॥' (बृ वा १-४-२९५) इति । अतो न जानामीति सार्वजनीनप्रसिद्धेरनुभवगम्यमेवाज्ञानम् इत्यभ्युपगन्तव्यम् । एवमात्माज्ञानमपि न प्रमाणसिद्धम्, किं तु प्रमाणव्यापृते पूर्वमेव स्वानुभवगम्यम् । प्रमाणादिव्यवहारोऽपि ह्यात्माज्ञानमनुभवसिद्धमाश्रित्यैव प्राणान् धारयतीति भावः । ननु नित्यानुभवस्वरूपऽप्यात्मनि कथं तद्विषया अविद्या स्वात्मानं लभताम् ? अत्रोच्यते । न तावदस्या उत्पत्तिरनुज्ञायते । अनादित्वात् । प्रतीतिस्तु प्रागैकात्म्यप्रतिपत्तेः 'परमात्मानं न वेद्मि' इति स्वानुभवसिद्धत्वान्नापलपनीया भवति । नाप्यनुपपन्ना सा ।

(क्लेशापहारिणी)

ग्रन्थसंबन्धः –

यत्तदुपवर्णितं प्रकरणसम्बन्धप्रघट्टके (पृ. २) आत्मानवबोध एव सर्वानर्थहेतुः, वेदान्तवाक्यज्ञानं च तदुच्छित्तिद्वारेण परमपुरुषार्थहेतुरिति ; तदिह द्वाभ्यां श्लोकाभ्यां संगृह्य ज्ञाप्यत इत्याह – अनर्थेति ॥

भाष्यकारवार्तिककारयोरविद्याविषये संगानम् –

ऐकात्म्येति । एकश्चासौ आत्मा च एकात्मा अद्वितीयप्रत्यक्स्वरूपः । तस्य भाव ऐकात्म्यम् । तस्याप्रतिपत्तिः ज्ञानाभावः । सेयम् ऐकात्म्याप्रतिपत्तिः सैवाविद्या संसृतेर्बीजम् । संसारानर्थस्य कारणम् इत्यर्थः । यद्यपि मिथ्याप्रतिपत्तिरेव भाष्यकारैरविद्यात्वेनोपवर्णिता 'तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते', 'तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः' (अध्या. भा.) – इत्यादिस्थलेषु, तथापि अप्रतिपत्तिरेव मिथ्याप्रतिपत्तिनिबन्धनम्, तेन च द्वारेण द्वैतवस्तुप्रत्युपस्थापने शोभनाशोभनाध्यासरागद्वेषप्रतिपत्तिपरम्परया एकत्वाप्रतिपत्तिरेव संसृतेर्बीजं भवतीत्यभिप्रायेण ऐकात्म्याप्रतिपत्तिर्या सैवाविद्येत्युक्तम् । अतो न दोषः । अत एव भाष्यकारा अपि 'अन्योन्यस्मिन्नन्योन्यात्मकताम् अन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेन' इति, 'इतरेतरतद्धर्माध्यासलक्षणः क्षेत्रक्षेत्रज्ञसंयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनः' (गी. भा. १३-२६) इति चाप्रतिपत्तिनिबन्धनत्वमेव मिथ्याप्रतिपत्तेर्वर्णयामासुः । अध्यासस्यैव प्राधान्येनाविद्यात्वाभिधानं तु प्रमाणादिव्यवहारहेतुत्वेन साक्षादनर्थहेतुत्वविवक्षया, न पुनरप्रतिपत्तेरविद्यात्वेऽरुच्या । अत एव गीताभाष्ये 'तामसो हि प्रत्ययः, आवरणात्मकत्वात् अविद्या विपरीतग्राहकः, संशयोपस्थापको वा, अग्रहणात्मको वा । विवेकप्रकाशभावे तदभावात् । तामसे चाऽऽवरणात्मके तिमिरादिदोषे सति अग्रहणादेरविद्यात्रयस्योपलब्धेः' (गी. भा. १३-२) इत्यप्रतिपत्तेरप्यविद्यात्वेन परिगणन

## ४. कर्मवादिनां पूर्वः पक्षः

( मूलम् )

प्रतिज्ञातार्थसंशुद्ध्यर्थं पूर्वपक्षोक्तिः । तत्र ज्ञानमभ्युपगम्य तावदुपन्यामः –

मुक्तेः क्रियाभिः सिद्धत्वाज्ज्ञानं तत्र करोति किम् ।
कथं चेच्छृणु तत्सर्वं प्रणिधाय मनो यथा ॥ ९ ॥

अकुर्वतः क्रियाः काम्या निषिद्धास्त्यजतस्तथा ।
नित्यनैमित्तिकं कर्म विधिवच्चानुतिष्ठतः ॥ १० ॥

किमतो भवति ?

काम्यकर्मफलं तस्माद्देवादीमं न ढौकते ।
निषिद्धस्य निरस्तत्वान्नारकीं नैत्यधोजनिम् ॥ ११ ॥

देहारम्भकयोश्च धर्माधर्मयोर्ज्ञानिना सह कर्मिणः समानौ चोद्यपरिहारौ –

वर्तमानमिदं याभ्यां शरीरं सुखदुःखदम् ।
आरब्धं पुण्यपापाभ्यां भोगादेव तयोः क्षयः ॥ १२ ॥

काम्यप्रतिषिद्धकर्मफलत्वात् संसारस्य तन्निरासेनैव अशेषानर्थनिरासस्य सिद्धत्वात् किं नित्यानुष्ठानेन ? – इति चेत्, तन्न। तदकरणादप्यनर्थप्रसक्तेः –

नित्यानुष्ठानतश्चैनं प्रत्यवायो न संस्पृशेत् ।
अनादृत्यात्मविज्ञानमतः कर्माणि संश्रयेत् ॥ १३ ॥

दृष्टत्वात् । न हि दृष्टेऽनुपपन्न नामेति । तस्मात् साधूक्त 'स्वात्मानुभव सश्रया' इति ॥

अनर्थतद्धेतुनाशः पुरुषार्थः –

तदेव ससृतिरनर्थ , अविद्या चानर्थहेतु , इत्युक्तम् । अथ पुरुषार्थ कथ्यते 'तन्नाशो मुक्तिरात्मनः' इति । यथा अविद्याकार्यभूत ससार एवानर्थ , बन्ध , एवम् अविद्यानाश एव मुक्ति , परमपुरुषार्थ इत्यर्थ ॥ ७ ॥

वेदान्तवाक्यजन्यज्ञानमेव पुरुषार्थहेतुः –

प्रतिज्ञातेषु चतुर्षु त्रय प्रकरणार्था उक्ता । चतुर्थस्य पुरुषार्थहेतो रवशिष्टत्वात् तस्याभिव्याहार वचनम् उत्तरश्लोके भविष्यतीत्याह – पुरुषार्थहेतोरिति ॥

वेदान्तसानेति । वेदान्तवाक्यजनित सम्यग्ज्ञानाग्नि निरवशेषमात्मनो मोहमविद्या दहति । न तु कर्म केवल ज्ञानसमुच्चित वा । कुत ? अप्रति कूलत्वात् । कर्मणोऽज्ञानेन विरोधाभावात् इत्यर्थ । सम्यग्ज्ञानम् इति विशेषण तु मिथ्याज्ञानस्याप्यज्ञानमात्रत्वाद् बाध्यत्वज्ञापनार्थम् , उपासनादिरूपस्यापि ज्ञानस्यासम्यक्त्वज्ञापनार्थं चेति ध्येयम् ॥

अनर्थहेत्वविद्याविषये मतान्तर तद्दूषण च –

अत्र केचित् 'अविद्यासंसृतेर्बीजम्' इत्युक्तमवष्टभ्य वर्णयन्ति–अविद्या नाम अग्रहणान्यथाग्रहणाभ्यां व्यतिरिक्ता सदसद्भ्यामनिर्वचनीया अनादि भावरूपा मूलाज्ञानापराभिधाना । सैव च द्वैतसंसारवृक्षस्य बीजम् उपादान कारणम् । 'ऐकात्म्याप्रतिपत्ति' इत्यनेन तस्या अविद्याया विषय प्रदर्शित , स्वात्मानुभवसश्रया इति चाश्रय । तदेवम् आत्माश्रया आत्मविषया च सा मूलाविद्या वाक्यजन्यसम्यग्ज्ञानेन विनाश्यते । तद्विनाश एव च मुक्ति इति । तदेतत्सर्वं अभित्तिचित्रम् । ग्रन्थकारेण कुत्राप्यनुपन्यासात् तादृशाविद्याया । ज्ञानविरोधित्वेन लोकेऽप्रसिद्धत्वाच्च तस्या – इत्युपेक्ष्यते ॥ ८ ॥

अद्वितीयब्रह्मात्मज्ञानम् । तथा च केवलेभ्य एव कर्मभ्यो मोक्षस्य सिद्धत्वात्, ब्रह्मात्मज्ञानमनर्थकम् । विद्यमानत्वेनाभ्युपगतस्यापि तस्याकिञ्चित्करत्वात् । न हि ज्ञानं कारकमिष्यते सिद्धान्तिना – इत्यभिप्रायः ॥

अथ नित्याया मुक्तेः कथं क्रियाभिरेव सिद्धत्वम् ? – इति चेत् शङ्कसे, यथैतत् संभवति तथा वक्ष्यते । तदिदं सर्वं मनः प्रणिधाय समाधाय शृणु – इत्यर्थः ॥ ९ ॥

काम्यनिषिद्धवर्जनान्मोक्षप्रतिबन्धपरिहारः –

अथैतत्संभावनायाह– अकुर्वत इत्यादि ॥ काम्याः क्रियाः अकुर्वतः, तथा निषिद्धाः क्रियास्त्यजतः, नित्यनैमित्तिकं च कर्म । नित्यनैमित्तिके कर्मणी इत्यर्थः । विधिवत् यथाविधि अनुतिष्ठतश्च मुक्तिर्विनापि सिद्धान्त्यभिमतज्ञानम्, सिध्यति इति शेषः । अयं भावः । न वयं क्रियासाध्यां मुक्तिम् अभ्युपगच्छामः, किं तु प्रतिबन्धपरिहारादेव स्वात्मन्यवस्थानलक्षणा मुक्तिरयत्नसिद्धा भविष्यतीति । अतो नैतदसंभावितमिति ॥

प्रतिबन्धपरिहारप्रकारः –

एवमनुष्ठानमात्रात् कथं मोक्षप्रतिबन्धपरिहारो भवेत् ? – इति सिद्धान्ती शङ्कते – किमतो भवति ? इति । अस्मात् काम्याकरणाद्यनुसरणात् न किञ्चिदपि मुक्तिप्रापकं भवेत् इत्यर्थः ॥

स्वाशयं विवृण्वन् शङ्कां परिहरति कर्मवादी– काम्यकर्मफलमिति ॥ तस्मात् काम्यकर्मत्यागात् इमं मुमुक्षुं देवादि देवत्वादिकाम्यकर्मफलं न ढौकते न स्पृशति । किं चायं नारकी नरकसंबन्धिनीं स्थावरान्ताम् अधोजनिं नीचजन्मापि नैति न प्राप्नोति । कुत एतत् ? निषिद्धस्य कर्मणः निरस्तत्वात् । त्यक्तत्वात् इत्यर्थः । तदेवं शुभाशुभकर्मफलभोगयोर्निमित्ताभावादेव परिहारः कृतो भविष्यतीत्याशयः ॥ ११ ॥

(क्लेशापहारिणी)

## पूर्वपक्षविमर्शने हेतुः –

वेदान्तवाक्यज्ञानं सर्वानर्थहेतुभूतामविद्यां दन्दहीति न कर्म । तस्य तया अविरोधात् (१–८) इत्युक्तम् । तत्रेदानीं पूर्वपक्षाः प्रदर्श्य खण्ड्यन्ते । ननु स्वपक्षस्थापनमेव क्रियताम्, किं परपक्षनिराकरणेन वीतरागकथायां प्रवृत्तस्य ? इत्यत आह – प्रतिज्ञातेति ॥ प्रतिज्ञातो योऽर्थः वाक्योत्थसम्यग्ज्ञानमेवाविद्यानाशकं न कर्म – इत्येवरूपः, तत्संशुद्ध्यर्थं परीक्ष्य निर्णयार्थं पूर्वपक्षोक्तिः । 'स्वबोधपरिशुद्ध्यर्थं ब्रह्मविन्निकषाश्मसु ' (१–६) इत्यपि हि प्रकरणप्रणयनप्रयोजनं प्रतिज्ञातम् । न च पक्षप्रतिपक्षग्रहणं विना तत्त्वावधारणं शक्यं कर्तुम् इति पूर्वपक्षा उपन्यस्य खण्ड्यन्ते, न तु व्यसनितया इति भावः ॥

## कर्मवादिपक्षावतारणम् –

तत्र पूर्वपक्षाणां मध्ये, वेदान्तेषु वस्तुबोधकं ज्ञानमपि उपदिष्टमस्ति इत्यभ्युपगम्य कर्मणैव तु मोक्षः सिध्यतीति ब्रुवतां मीमांसकानां पक्षस्तावदुपन्यस्यत इत्याह – तत्र ज्ञानमिति । अभ्युपगमस्तु त्यक्ष्यते पूर्वपक्षिणा अनुपदमेव 'अभ्युपेत्यैवमुच्यते' (१–१४) इत्यत्रेति भावेन 'तावत्' इत्युक्तम् ॥

## कर्मणैव मुक्तिरिति प्रतिज्ञा –

मुक्तेरिति ॥ मुक्तेः क्रियाभिः वेदोक्तकर्मभिरेव सिद्धत्वात् तत्र मुक्तौ साध्यभूतायां ज्ञानं विद्यमानमपि किं करोति ? न किञ्चित् तस्य तत्र कृत्यमस्तीत्यर्थः । यद्यपि मोक्षोपायविषयकेच्छाजनकतया कृत्यमस्त्येव ज्ञानस्य पूर्वपक्षिमतेऽपि, यथाहुः – 'प्रार्थ्यमानं फलं ज्ञातं न चानिच्छोर्भविष्यति । आत्मज्ञे चैतदस्तीति तज्ज्ञानमुपयुज्यते ' (श्लो वा ? ) इति । तथापि मुक्तौ तस्य साक्षात् कृत्यं नास्तीति भावः । किं च न पूर्वपक्षिसंमतं देहव्यतिरिक्तात्मज्ञानमात्रमत्र विवादास्पदम्, किं तु सिद्धान्तिसंमतम्

प्रतिबन्धनिरासेन। स च निरासः कर्मणा भवति न ज्ञानेन इति पूर्वपक्षिणोऽभिप्रायः। श्लोकपूर्वार्धं न व्याख्यानमपेक्षत इत्युपेक्षितम् ॥ १३ ॥

(मूलम्)

अभ्युपेत्यैवमुच्यते न तु यथावस्थितात्मवस्तुविषयं ज्ञानमस्ति। तत्प्रतिपादकप्रमाणाभावात् –

यावन्त्यर्थेह विद्यन्ते श्रुतयः स्मृतिभिः सह।
विदधत्युरुयत्नेन कर्मातो भूरिसाधनम् ॥ १४ ॥

स्यात् प्रमाणासंभवो भवदपराधात् इति चेत्, तन्न। यतः –

यत्नतो वीक्षमाणोऽपि विधिं ज्ञानस्य न क्वचित्।
श्रुतौ स्मृतौ वा पश्यामि विश्वासो नान्यतोऽस्ति नः ॥ १५ ॥

स्यात् प्रवृत्तिरन्तरेणापि विधिं लोकवत् इति चेत्, तन्न। यतः –

अन्तरेण विधिं मोहाद्यः कुर्यात्सांपरायिकम्।
न तत्स्यादुपकाराय भस्मनीव हुतं हविः ॥ १६ ॥

अभ्युपगतप्रामाण्यवेदार्थविज्जैमिन्यनुशासनाच्च –

आम्नायस्य क्रियार्थत्वादानर्थक्यमितोऽन्यथा।
इति साटोपमाहोच्चैर्वेदविज्जैमिनिः स्वयम् ॥ १७ ॥

मन्त्रवर्णाच्च –

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।
इति मन्त्रोऽपि निःशेषं कर्मण्यायुरवासृजत् ॥ १८ ॥

प्रारब्धकर्मणो भोगादेव क्षयः –

नन्वेवमपि एतद्देहारम्भकयो पुण्यापुण्ययोर्नाश कर्मणा न भवेत् इत्याशङ्क्य तत्परिहारार्थमुत्तरश्लोक इति वक्तु तत्तात्पर्यमाह – **देहारम्भकयोरिति** ॥ यौ धर्माधर्मौ वर्तमानदेहमारब्धवन्तौ तयो कथ क्षय ? – इति चोद्यम्, भोगादेवेति परिहारश्च – इत्येतौ कर्मवादिनो ज्ञानवादिना सह समानौ । नातोऽस्मास्माभिरेव विशिष्य वक्तव्यमस्तीत्यभिप्राय । अत्र यद्यपि सिद्धान्तिदृष्ट्या ज्ञानिन किञ्चिदपि कर्म कथमपि न सम्भवति । 'त्रिष्वपि कालेष्वकर्तृत्वाभोक्तृत्वस्वरूप ब्रह्माहमस्मि' इत्यवगमो हि ज्ञान नाम । तथापि व्यावहारिकदृष्ट्या ज्ञानवादिनापि अनारब्धकार्ये एव सुकृतदुष्कृते ज्ञानेन क्षीयेते इत्यङ्गीकारात् आरब्धफलयोस्तयो 'समानौ चोद्यपरिहारौ' इत्याह पूर्वपक्षीति बोध्यम् ॥

**वर्तमानमिति** ॥ स्पष्टार्थ श्लोक ॥ १२ ॥

नित्यानुष्ठानप्रयोजनम् –

उत्तरश्लोकाभिप्रायमाह – **काम्येत्यादिना** ॥ संसारस्य सुखदु ख भोगलक्षणस्य काम्यप्रतिषिद्धकर्मफलत्वात् तन्निरासेनैव तयोस्त्यागेनैव अशेषा नर्थस्य भोगार्थं देहग्रहणरूपस्य निरास परिहार सेत्स्यतीति तत्र किं नित्यानुष्ठानेन ? न हि तेन निरसनीयोऽनर्थोऽवशिष्यते । न च मोक्षस्य कर्मजन्यत्वमङ्गीक्रियते भवद्भिरपि, येन नित्यकर्मणा तत्र विनियोग स्यादि त्याक्षेप । अत्र कर्मवादी परिहारमाह – **तन्न** । **तदकरणादपीति** । तस्य नित्यकर्मणोऽकरणादपि अनर्थप्रसक्ते काम्यप्रतिषिद्धत्यागात् केवलात् न पुरुषार्थसमाप्तिर्भवेदित्यर्थ ॥

एव च ज्ञाने सत्यपि केवलेन कर्मणैव मोक्षप्राप्तिरिति यत् प्रतिज्ञात तत् साधितमित्युपसंहरति – **नित्यानुष्ठानतश्चेति** ॥ आत्मज्ञान विद्यमानमपि अनादृत्य मोक्षकारणसामग्र्या तस्य नान्तर्भाव इति निश्चित्य कर्माण्येव संश्रयेत् । न हि वस्तुज्ञानमात्रात् स्वरूपावस्थितिलक्षणा मुक्तिर्भवित्री, किं तु

प्रतिबन्धनिरासेन । स च निरास. कर्मणा भवति न ज्ञानेन इति पूर्वपक्षिणो-ऽभिप्रायः । श्लोकपूर्वार्धं न व्याख्यानमपेक्षत इत्युपेक्षितम् ॥ १३ ॥

( मूलम् )

अभ्युपेत्यैवमुच्यते न तु यथावस्थितात्मवस्तुविषयं ज्ञानमस्ति । तत्प्रतिपादकप्रमाणाभावात् –

यावत्यश्चेह विद्यन्ते श्रुतयः स्मृतिभिः सह ।
विदधत्पुरुयत्नेन कर्मातो भूरिसाधनम् ॥ १४ ॥

स्यात् प्रमाणासंभवो भवदपराधात् इति चेत्, तन्न । यतः –

यत्नतो वीक्षमाणोऽपि विधिं ज्ञानस्य न क्वचित् ।
श्रुतौ स्मृतौ वा पश्यामि विश्वासो नान्यतोऽस्ति नः ॥ १५ ॥

स्यात् प्रवृत्तिरन्तरेणापि विधिं लोकवत् इति चेत्, तन्न । यतः –

अन्तरेण विधिं मोहाद्यः कुर्यात्सांपरायिकम् ।
न तत्स्यादुपकाराय भस्मनीव हुतं हविः ॥ १६ ॥

अभ्युपगतप्रामाण्यवेदार्थविज्जैमिन्यनुशासनाच्च –

आम्नायस्य क्रियार्थत्वादानर्थक्यमितोऽन्यथा ।
इति साटोपमाहोच्चैर्वेदविज्जैमिनिः स्वयम् ॥ १७ ॥

मन्त्रवर्णाच्च –

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
इति मन्त्रोऽपि निःशेषं कर्मण्यायुरवासृजत् ॥ १८ ॥

ज्ञानिनश्च वस्तुनि वाक्यप्रामाण्याभ्युपगमात्, वाक्यस्य च क्रियापदप्रधानत्वात्, ततश्च अभिप्रेतज्ञानाभावः –

विरहय्य क्रिया नैव संहन्यन्ते पदान्यपि ।
न समस्त्यपदं वाक्यं यत्स्याज्ज्ञानविधायकम् ॥ १४ ॥

( क्लेशापहारिणी )

आत्मवस्तुविषयज्ञाने न प्रमाणमस्ति –

तदेवम् अभ्युपगम्यापि ब्रह्मात्मज्ञानं तस्य कार्यान्तरमुत्प्रेक्षितव्यम् । न तु मुक्तौ तस्य कृ यमस्ती यावेदितम् । इदानीं तदेव नास्ति वस्तुमात्र बोधकं ज्ञानं नाम इत्युच्यते परेण ग्रन्थेनेत्याह – अभ्युपेत्येति ॥ यथावस्थितात्मविषयं परिनिष्ठितात्मरूपवस्तुबोधकं ज्ञानं नास्त्येव । कुतः ? तत्प्रतिपादकप्रमाणाभावात् । अयं भावः । किमत्र ज्ञानशब्देन विवक्षितम् ? निमदृष्टफलेषु कर्मसु प्रवृत्त्यर्थमपेक्षितं देहातिरिक्तात्मज्ञानम्, किं वा स्वतन्त्रमेव पुरुषार्थसाधकमिति ? यदि पूर्वं कल्पः, तत्रोमिति ब्रूमः । न हि कर्मणैव मुक्तिरिति पक्षस्य किञ्चिद् हीयते तेनाङ्गीकृतेन । अथ द्वितीयः कल्पः, न तादृशं ज्ञानं समस्ति । तत्प्रतिपादकप्रमाणाभावात् । न तावत् प्रत्यक्षादिना तादृशं ज्ञानं संभवति । आत्मनः प्रत्यक्षादेरविषयत्वाभ्युपगमात् । तत एव तज्ज्ञानस्यापि प्रत्यक्षविषयत्वाभावात् । न च तत्र वाक्यरूपं प्रमाणं क्रमते । तस्य कुत्राप्यदर्शनादिति ॥

प्रमाणवाक्याभावमेव दर्शयति यावन्त्यर्थेति । श्रुतयः स्मृतयश्च यावत्यः सन्ति तावत्यः सर्वा उत्पत्वेन तात्पर्येण कर्मैव विदधति । न तु आत्मवस्तु प्रतिपादयन्ति मोक्षार्थम् । न च क्वचिदपि श्रुतिस्मृतिवाक्यानां विधिसंस्पर्शमन्तरेण व्यापारो दृष्टः । अतः केवलवस्तुप्रतिपादकवाक्याभावात् कर्मविधानेनैव सर्वेषां वाक्यानामुपक्षयदर्शनात् कर्मैव मोक्षं प्रति भूरिसाधनं पुष्कलोपायः इत्यवगम्यते इत्यर्थः ॥ १४ ॥

श्रुतिस्मृतिषु ज्ञानविधिवाक्यं नैवोपलभ्यते –

अत्र सिद्धान्ती शङ्कते स्यादिति ॥ अस्त्येव तात्पर्येणात्मज्ञानमपि विहितम्। अतोऽत्र प्रमाणासंभवाशङ्का भवद्पराधात् अज्ञानरूपादित्युत्पश्याम इत्यर्थः। तत्र पूर्ववाचाह – तत्रेति। 'यतः' इति तु श्लोकार्धेन सम्बन्धनीयम् ॥

यतः यत्कारणं श्रुतौ स्मृतौ वा ज्ञानस्य विधिं यत्नतो वीक्षमाणोऽपि न पश्यामि, सर्वत्र तु क्रियाविधिमेव पश्यामि। अतः 'यदुक्तं भवता तत्र' इति सबन्धः। ननु श्रुतिस्मृतिबाह्यानामपि ज्ञाने प्रवृत्तिर्दृष्टा, अतोऽत्रापि विषये कुत्राप्यन्यत्र विधिः स्यात् इति शङ्कयित्वा ब्रवीति – 'विश्वासो नान्यतोऽस्ति नः' इति। वेदप्रमाणकाना नैतादृशी प्रवृत्तिः संभवति शब्दमात्रगम्येऽर्थे। न चात्र सुगताद्यागमानुसारिणा प्रवृत्तिरुदाहार्या भवति इत्यभिप्रायः ॥ १५ ॥

अविधिना कृतं न परलोकफलाय –

ननु कुतोऽन्यतो विश्वासाभावः? न हि क्षुधादिनिवृत्तिमन्वय-व्यतिरेकाभ्यां दृष्ट्वा जना भोजनादौ न प्रवर्तन्ते। तद्वदिहापि विधिं विनैव अज्ञाननिवृत्त्यर्था प्रवृत्तिः किं न स्यात्? – इति शङ्कोत्तरत्वेन श्लोकान्तर-मवतारयति। 'तत्र। यतः' इत्यन्तेन ॥

अन्तरेणेति ॥ सपरेयते इति संपरायः परलोकः तत्प्रयोजनं साम्प-रायिकः साधनविशेषः। यस्तु मोहात् विधिमन्तरेण शाब्दविधिं विना स्वाभ्यूहसिद्धमेव पारलौकिकं कर्म कुर्यात्, तत् तस्य कर्म न कस्मैचित् उपकाराय भवेत्। न पुरुषार्थसाधकं भवेत्। तत्र दृष्टान्तः 'भस्मनीव हुतं हविः' इति। यथा अङ्गारेषु होतव्यं वस्तु भस्मनि हुतं सत् व्यर्थमेव भवेत् तद्वत् – इत्यर्थः ॥ १६ ॥

जैमिनिवचनप्रामाण्यादपि नास्ति ज्ञानम् –

न चेदं सर्वस्यैव वेदस्य क्रियाविधिपरत्वं स्वमनीषिकया अभ्यूहितम्,

कि त्वाप्तवाक्यमवलम्ब्योच्यते । तस्मात् श्रद्धेयमित्याह – **अभ्युपगतेति** ॥ अभ्युपगत प्रामाण्य यस्य सोऽय जैमिनिरभ्युपगतप्रामाण्य । आप्तत्वेन उभयेषामप्यस्माक समत इति यावत् । प्रामाण्याभ्युपगमे हेतुसूचक विशेषणम् 'वेदार्थवित्' इति । अभ्युपगत प्रामाण्य यस्य वेदस्य तदर्थवित् इति वार्थ । वेदार्थविस्त्वेन भवतामपि समतस्य जैमिनेरनुशासनादपि क्रियापरत्वमेव वेदस्य न वस्तुपरतेति निश्चीयते इति शेष ॥

कि तदनुशासनमिति ? तत्राह – **आम्नायस्येति** ॥ 'आम्नायस्य क्रियार्थ त्वादानर्थक्यमतदर्थानाम्' (जै १-२-१) इति जैमिनीय सूत्रम् । अस्मिन् हि सूत्रे इतोऽन्यथा क्रियार्थतोऽन्यथा प्रवृत्तानां वाक्यानामानर्थक्यम् आह जैमिनि । तच्च उच्चै साटोपम् अभिनिवेशपूर्वकम् आह । अत्राभिनिवेशाभावे हि आम्नायस्य क्रियार्थत्वम् इत्येतावदेव वदेत्, न तु कण्ठरवेण 'आनर्थक्यमनदर्थानाम्' इत्यपि इति भाव । यद्यपि पूर्वपक्षसूत्रमिदम्, तथापि 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्यु' (जै १-२-७) इति सिद्धान्तसूत्रे अर्थवादाना क्रियास्तुत्यर्थेन विध्येकवाक्यत्व वर्णयतो भगवतो जैमिने केवलवस्तुप्रतिपादनपर वेदवाक्य नास्ति, अस्तित्वेऽपि केवल जपार्थ त्वमेव तस्य न तु बोधकतया प्रामाण्यम् इत्यत्रैव तात्पर्यमवसीयते इति पूर्वपक्षिणोऽभिप्राय ॥ १७ ॥

अपौरुषेयवचनोदाहरणार्थमुत्तरश्लोक इत्यभिप्रायेणाह – **मन्त्र वर्णाच्चेति** ॥

मन्त्रवर्णमेवोदाहरति–**कुर्वन्नेवेति** ॥ वाजसनेयिना संहितोपनिषदि ह्यय मन्त्र आम्नायते । अध्यात्माधिकारे च पठितोऽयम् । अथ च नि शेष पुरुषायु कर्मण्येव अवासृजत् उत्ससर्ज, विनियोग कृतवान् । अनेन हि मन्त्रेण यदि शत समा संवत्सरान् जिजीविषेत् तदा कर्माणि कुर्वन्नेव निर्जीविषेत् इति कर्म विहितम् । शतायुर्हि पुरुष । तेन वर्षशतात् परं केवल ज्ञानमनुष्ठेयत्वेनात्र विवक्षितम् इत्युत्प्रेक्षितुमपि न शक्यत इति भाव ॥ १८ ॥

ज्ञानं वाक्यप्रतिपाद्यमित्येतदेवासंभवि —

तदेवं ज्ञानविधिवाक्यादर्शनात्, आप्तवाक्यवेदवाक्याभ्यां सर्वस्यैवाम्नायस्य क्रियापरत्वावगमाच्च नास्ति श्रौतमात्मवस्तुविज्ञानमिति स्थितम्। अथेदानीं वस्तुनि वाक्यमात्रस्य प्रामाण्यमसंभावितम् इति दर्शयति — ज्ञानिनश्चेति। आत्मज्ञानादेव वेदान्तवाक्यजन्यात् कैवल्यम् इति वदन् ज्ञानी। तेन हि आत्मवस्तुनि न प्रत्यक्षादि प्रमाणम्, किं तु वेदान्तवाक्यमेव प्रमाणम्—इत्यभ्युपगम्यते। वाक्यं तु क्रियापदप्रधानम्; ततश्च अभिमतज्ञानाभावः, सिद्धान्त्यभिमतस्य क्रियासंबन्धरहितकेवलात्मज्ञानस्य अभावः। तादृशस्य ज्ञानस्य वाक्यप्रतिपाद्यत्वं नैव संभवतीत्यर्थः॥

कथं क्रियापदप्रधानत्वं वाक्यस्येति? एतद् विवृणोति— विरहय्येति। क्रिया क्रियापदं विना पदान्यपि न संहन्यन्ते। न हि 'दश दाडिमानि षडपूपाः' इत्यादीनां पदानां संहतिरस्तीत्याशयः। अत्र क्रियाशब्देन कर्तव्यं विवक्षितम्। न हि अनुष्ठेयेऽसति पदानि संहन्येरन्, सति तु तस्मिन् तादर्थ्येन संहन्यन्त इति युक्तम्; यथा 'इदमनेनैवं कर्तव्यम्' इति — इति कर्मवादिनोऽभिप्रायः। इदमत्राकूतम्। आत्मनः पदार्थत्वे प्रत्यक्षादिप्रमाणान्तरविषयत्वं दुर्वारम्। वाक्यार्थत्वं त्वस्य नैव संभवति। वाक्यमात्रस्य अनुष्ठेयनिष्ठत्वात्। न ह्यनुष्ठेयवाचकपदं विना पदशतानामपि वाक्यत्वेन संघातो भवतीति। ननु पदानां संहतिः क्रियापदापेक्षैव भवतु; तथापि वस्तुपरं वाक्यं किं न स्यात्? नैतत् संभवि। न हि अपदं पदरहितं वाक्यं समस्ति संभवति यत् ज्ञानविधायकं कल्प्येत। पदसंघातस्यैव वाक्यत्वात् इत्यर्थः। अत्र सिद्धान्तिना ज्ञानविधानानभ्युपगमात् 'ज्ञानविधायकम्' इत्यस्य ज्ञानोपदेशकम् इत्यर्थः। अथवा पूर्वपक्षप्रारम्भ एव वस्तुबोधकं ज्ञानं सदपि मुक्तावकिञ्चित्करमिति वस्तुज्ञानपक्षस्य निराकृतत्वात् इह विधेयज्ञानमपि नास्तीत्युच्यते कर्मणो मुक्तिसाधकत्वेऽसहायकत्वस्थापनार्थम् इति व्याख्येयम्। एवं हि योऽसौ 'अन्तरेण विधिम्' (१-१६) इति मोक्षार्थप्रवृत्तेर्विध्यपेक्षतानियम उक्तः, तेनास्यैकवाक्यता भविष्यतीति॥ १९॥

## ५. ज्ञानाभ्युपगमेऽपि कर्मणो मुक्तिसाधनत्वमक्षतम्

( मूलम् )

ज्ञानाभ्युपगमेऽपि न दोषः । यतः –

कर्मणोऽङ्गाङ्गिभावेन स्वप्रधानतयाथवा ।
संबन्धस्येह संसिद्धेर्ज्ञाने सत्यप्यदोषता[1] ॥ २० ॥

( क्लेशापहारिणी )

विधेयज्ञानाभ्युपगमेऽपि समुच्चयत एव मोक्षः –

मुक्तिसाधनत्वेन वेदविहितं ज्ञानं नास्तीत्युक्तम् । अथ तादृशज्ञानाङ्गीकारेऽपि मुक्तेः कर्मसाधनत्वानपायात् न कोऽपि दोषः । अविधेयज्ञानस्यैव तु वाक्यप्रमाणकत्वं नास्तीति सत्वस्माकम् आग्रहः इत्याह – ज्ञानाभ्युपगमेति । कथं न दोषः ? – इत्याशङ्क्य तदुत्तरत्वेन श्लोकमवतारयति 'यतः' इति ॥

कर्मणो ज्ञानेन सह अङ्गाङ्गिभावेन सम्बन्धोऽस्मन्मतेऽपि ससिध्यति । कर्मणो ज्ञानमङ्गम् 'विद्वान् यजते' इत्यादिश्रुतिभ्यस्तथावगमात् । ज्ञानस्य वा कर्माङ्गम् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ ४–४–२२) इति श्रुतेः । स्वप्रधानतयैव वा कर्मणो ज्ञानेन सम्बन्धः । 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' (ई ११) इति श्रुतेः । यथोक्तमभियुक्तैः – 'न च ज्ञानविधानेन कर्मसम्बन्धवारणम् । प्रत्याश्रमवर्णनियतानि नित्यनैमित्तिककर्माण्यपि पूर्वकृतदुरितक्षयार्थम् अकरणनिमित्तानागतप्रत्यवायपरिहारार्थं च कर्तव्यानि । न च तेषां भिन्नप्रयोजनत्वात्, भिन्नमार्गत्वाच्च बाधविकल्पपरस्पराङ्गाङ्गिभावाः संभवन्ति' (त वा १–३–८–२७) इति । तदेवमनुक्रमेणोक्तप्रकाराणाम् अन्यतमस्य स्वीकारे कर्मणो ज्ञानेन सह मुक्तिसाधनत्वेन संबन्धस्य समुच्चयस्य संसिद्धेः इह कर्मवादिनां पक्षे अदोषता नैव दोषवत्त्वं स्यात् । ज्ञानमात्रेण मुक्तिरिति तु नैव न प्रापयितव्यम् इति भावः ॥ २० ॥

1 'सत्यप्यदोषतः' इति पा ॥

## ६. पूर्वपक्षोपसंहारः

(मूलम्)

यस्मात् ज्ञानाभ्युपगमेऽनभ्युपगमेऽपि न ज्ञानान्मुक्तिः –

अतः सर्वाश्रमाणां हि वाङ्मनःकायकर्मभिः ।
स्वनुष्ठितैर्यथाशक्ति मुक्तिः स्यान्नान्यसाधनात् ॥ २१ ॥

(क्लेशापहारिणी)

यथावर्णितपूर्वपक्षोपसंहारार्थं उत्तरः श्लोकः । तत्र अतःशब्दापेक्षितं पूरयन्नाह – यस्मात् ज्ञानाभ्युपगमेऽपीति । आत्मज्ञानाभ्युपगमे तावन्न ज्ञानान्मुक्तिः । केवलवस्तुबोधकस्य तस्य कृत्याभावात् । अभ्युपगमस्तु तुष्यतु-दुर्जनन्यायेनैव, यतस्तादृशं ज्ञानं निष्प्रमाणकम् । विधेयस्य तूपासनादिरूपस्य तस्य कर्मणा सहाङ्गाङ्गिभावेन समप्रधानतया वा समुच्चितस्यैव साधनत्वात् केवलस्य च नित्यकर्मानुष्ठानोपात्तप्रत्यवायदूषितस्य मुक्तिप्रदानेऽनीश्वरत्वात् । आत्मज्ञानानभ्युपगमेऽपि प्रपञ्चितप्रकारेण केवलेन कर्मणैव मुक्तेः सुसाध्यत्वात् न केवलज्ञानान्मुक्तिः कस्मिंश्चिदपि पक्षे इति स्थितं यस्मात् इत्यर्थः ॥

अतः सर्वाश्रमाणाम् ; सर्वाश्रमिणाम् इत्यर्थः । 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः' (गौ. ध. २–२–२९) इति आश्रमशब्दस्याश्रमिपरत्वेन प्रयोगदर्शनात् । सर्वेषामप्यधिकारिणां स्वाश्रमविहितैः वाङ्मनःकायकर्मभिः यथाशक्ति स्वनुष्ठितैः ज्ञानेन समुच्चितैरसमुच्चितैर्वा मुक्तिः स्यात् । नान्यसाधनात् केवलात्, वस्तुतत्त्वज्ञानरूपात् उपासनारूपाद्वा इत्यर्थः । अत्र वाङ्मनःकायकर्मभिः इति श्रुतिस्मृतिविधानस्य त्रिविधकर्मविषयतामाह । 'यथाशक्ति' इत्यनेन सत्यां शक्तौ कर्मत्यागोऽनर्थकरः, तदनुष्ठानं तु श्रेयस्करम् इति सूचयतीति ध्येयम् ॥ २१ ॥

## ७. सिद्धान्तोपक्रमः – कर्म न मोक्षसाधनम्

(मूलम्)

असदर्थप्रलापोऽयमिति दूषणसमाम्नानायाह –

इति हृष्टधिया वाचः स्वप्रज्ञाऽऽध्मातचेतसाम् ।
घुष्यन्ते यज्ञशालासु धूमानद्धधिया किल ॥ २२ ॥

दूषणोपक्रमावधिज्ञापनायाह –

अत्राभिदध्महे दोषान् क्रमशो न्यायबृंहितैः ।
वचोभिः पूर्वपक्षोक्तिघातिभिर्नातिसंभ्रमात् ॥ २३ ॥

(क्लेशापहारिणी)

**पूर्वपक्ष्युपहासः –**

अथ मूले पूर्वपक्षस्य असारतां प्रकटयितुमारभते । तत्र किमर्थमुत्तर श्लोके पूर्वपक्षिण उपहस्यन्ते इति ? तत्राह – असदर्थेति । एते पूर्वपक्षिण न सन्तमर्थमुपदिशन्ति । किं त्वसन्तमेवार्थं प्रलपन्ति । अतस्तत्र दोषा संभवन्तीति वक्तुं श्लोकमाह इत्यर्थ ॥

इति हृष्टधियामिति ॥ इति एवंप्रकारा 'वाच' इति संबन्ध । एषणात्यागाद्यायासं विनैव केवलेन कर्मणा मुक्ति सिध्यतीति हृष्टा धीर्येषां कर्मवादिनां त एते हृष्टधिय । अतोऽसदर्थं प्रलपन्तीति न चित्रमिति भाव । शान्तदर्पा एव हि तत्त्वार्थं निर्णेतुं क्षमन्ते न हृष्टधिया दृप्ता । अत एवैते 'स्वप्रज्ञाध्मातचेतस' । येषां स्वभूता स्वाभ्यूहितप्रक्रियाजनिता प्रज्ञा न तु शास्त्राचार्योपदेशजनिता, तया आध्मातम् उच्छूनतां गतं चेतो येषां ते तथोक्ता । प्राज्ञमानिन इति यावत् । अनेन असमाहितचित्तत्वमपि हेतुरस दर्थप्रलापे इत्युक्तं भवति । 'धूमानद्धधियाम्' इति सदर्थग्रहणे प्रतिबन्धक सद्भावसूचनार्थकं विशेषणम् । धूममार्गोपलक्षितक्षयिष्णुफलाशाप्रतिबद्धज्ञाना एते । श्रुतिश्चात्र भवति 'अग्निमुग्धो हैव धूमतान्तः स्वं लोकं न

प्रतिजानाति' (तै. ब्रा. ३-१०-११-१) इति । तदेवं कर्मफलमात्रात् तृप्तिः, पण्डितमानिता, कर्मफलाशाप्रतिबद्धविचारशक्तिता चेत्येतत् त्रितयं तेषामसदर्थप्रलापित्वे हेतुः । अत एतादृश्यो वाचः स्वगोष्ठीष्वेव शोभन्ते न तु विदुषां समीपे इत्युपहसति – 'घुष्यन्ते यज्ञशालासु' इति । अत्र 'अविद्यायां बहुधा वर्तमानाः' (मुं. १-२-८), 'इष्टापूर्तं मन्यमाना वरिष्ठम्' (मुं. १-२-१०), 'नैषा तर्केण मतिरापनेया' (का. १-२-९), 'नाशान्तो नासमाहितः' (का. १-२-२४) इत्यादिश्रुतयोऽप्यनुसन्धेयाः ॥ २२ ॥

दूषणाभिधानप्रतिज्ञा –

अथेदानीं दूषणमुपक्रम्य केवलकर्मवादः, वस्तुबोधकवाक्यनिरासवादः, कर्मज्ञानसमुच्चयवादश्च इति वादत्रयं क्रमाद् दूषयिष्यत इत्याह – दूषणेति ॥

अत्रेति । अत्र पूर्वपक्षे दोषान् क्रमशः अभिदध्महे ब्रूमः । न्यायबृंहितैः युक्तिपरिपुष्टैः । अत एव पूर्वपक्षोक्तिघातिभिः तदुक्तिखण्डनसमर्थैरेव वचोभिर्ब्रूमः । एतदपि दूषणं न यथाकथञ्चित् पूर्वपक्षो दूषयितव्य इति व्यसनितया, किं तु तत्पक्षस्यासारताप्रकटनद्वारेण सिद्धान्ते जिज्ञासूनामादरजननार्थमेवेति भावेनाऽऽह – 'नातिसंभ्रमात्' इति ॥ २३ ॥

(मूलम्)

चतुर्विधस्यापि कर्मकार्यस्य मुक्तावसंभवान्न मुक्तेः कर्मकार्यत्वम् –

अज्ञानहानि[1]मात्रत्वान्मुक्तेः कर्म न साधनम् ।
कर्मापमार्ष्टि नाज्ञानं तमसीवोत्थितं तमः ॥ २४ ॥

(क्लेशापहारिणी)

मुक्तौ कर्मकृत्यं नास्ति –

उत्तरश्लोकाभिप्रायविशदीकरणायाऽऽह – चतुर्विधस्यापीति । उत्पत्त्यादिलक्षणस्य चतुर्विधस्यापि कर्मकार्यस्य कर्मव्यापारस्य अग्रे (१-५३)

1. 'हानमात्रत्वात्' पा ॥

वक्ष्यमाणस्य इत्यर्थः । तस्य मुक्तौ असंभवात् न मुक्तेः कर्मकार्यत्वं कर्मफलत्वम् इत्यर्थः ॥

मुक्तिः कर्मव्यापारानपेक्षेति कथम् इत्यत आह – अज्ञानहानिमात्रत्वादिति ॥ मुक्तिर्नाम स्वरूपेणावस्थानमात्मनः । तच्च नित्यसिद्धमिति तदज्ञानमात्रेण स्वरूपेऽनवस्थितिः । तस्मादज्ञानहानिरेव मुक्तिरित्युपचर्यते । तच्चाज्ञानहानं ज्ञानादेवेति लोकप्रसिद्धेरवगम्यते । अतो मुक्तेः कर्म न साधनम् । नन्वज्ञानहानमपि कर्मणैव भविष्यति । तत्राऽऽह – 'कर्मापमार्ष्टि नाज्ञानम्' इति । तत्र हेतुगर्भं निदर्शनमाह 'तमसीवोत्थितं तमः' इति । यथा तमसि रज्ज्वाद्यज्ञाने सति उत्थितम् उत्पन्नं स्थितं च तमः भ्रान्तिनाम रज्जुसर्पादिज्ञानम् न स्वमूलमज्ञानं हन्तुं क्षमम् तद्वदित्यर्थः । अत्र तमसीवोत्थितं तमः इति अज्ञानापेक्षोत्पत्तिमत्त्वम् अज्ञानापेक्षस्थितिमत्त्वं चेत्येतदुभयमपि विवक्षितं कार्याज्ञानस्य । ज्ञानं हि स्वोत्पत्तौ अज्ञानं समपेक्षमाणमपि स्वोत्पत्तिमात्रेणाज्ञानं निवर्तयति कर्म तु न केवलं स्वोत्पत्तये किं तु स्वस्थितयेऽप्यज्ञानं समपेक्षत इति न जातुचिदज्ञाननिवर्तनायालमिति । एतच्च परस्तात् (१–२५) स्फुटीकरिष्यते । अज्ञानहानिमात्रत्वात् इति 'मात्र'-पदोपादानं तु अज्ञाननिरासात् परमपि उपासनादिरूपं कर्म अपेक्ष्यत इति मतनिरासायेति बोध्यम् । एतदपि स्वावसरे (१–६७) निरूपयिष्यत इत्यास्तां तावत् ॥ २४ ॥

(मूलम्)

कर्मकार्यत्वाभ्युपगमेऽपि दोष एव –

एकेन वा भवेन्मुक्तिर्यदि वा सर्वकर्मभिः ।
प्रत्येकं चेत् पृथक्त्वानि सर्वेभ्योऽप्येकरूपता ॥ २५ ॥

(क्लेशापहारिणी)

मुक्तेः कर्मफलत्वाङ्गीकारे दोषः –

कर्मव्यापाराभावात् मुक्तेर्न कर्मफलत्वमित्यभिहितम् । इदानीं कर्मफलत्वमङ्गीकृत्यापि दोषादनिर्मोक्ष इत्याह – कर्मकार्यत्वाभ्युपगमेऽपीति ॥

एकेनेति । किमेकेनैव कर्मणा मुक्तिर्भवेत्, किं वा सर्वैरपि मिलितै-रनुष्ठितैरिति विकल्पः । किं चातो यद्यादिमः कल्पः, यदि वा द्वितीय इति ? अत आह – प्रत्येकं चेत्, एकेनैव कृतेन निष्पाद्या मुक्तिश्चेत् अन्यानि कर्माणि वृथा स्युः । न हि तदा एकस्यैव निरपेक्षसाधनत्वेन तदितरेषां विधानं सार्थकं भवेदिति भावः । सर्वेभ्यो मिलितेभ्यो मुक्तिर्निष्पाद्या चेत् सर्वेषामपि समुच्चितानामेककर्मता प्राप्नोति । फलैकत्वाभ्युपगमात्, एकनियोग-विषयत्वाच्च । तच्चायुक्तम् । प्रत्येकं फलभेदश्रवणात्, भिन्नाधिकारिककर्मणा-मेककर्मत्वानुपपत्तेश्च इति भावः ॥ २५ ॥

(मूलम्)

सर्वप्रकारस्यापि कर्मण उत्पत्तित एव विशिष्टसाध्याभिसंबन्धान्न पारिशेष्यन्यायसिद्धिः –

दुरितक्षपणार्थत्वान्न नित्यं स्याद्विमुक्तये ।
स्वर्गादिफलसंबन्धात्काम्यं कर्म तथैव नः　　॥ २६ ॥

( क्लेशापहारिणी )

पारिशेष्यन्यायेनापि मुक्तिर्न कर्मफलम् –

ननु यस्य कर्मणः फलं नाभिहितमस्ति तस्य मुक्तिफलत्वं कल्पयिष्यामः । अन्यथा विधानानुपपत्तेः इत्याशङ्क्य प्रत्याचष्टे – सर्वप्रकारस्यापीति ॥ अत्रेदं बोध्यम् । विधिश्चतुर्विधः – उत्पत्तिविधिः, विनियोगविधिः, अधिकार-विधिः, प्रयोगविधिश्चेति । तत्र कर्मस्वरूपमात्रं ज्ञापयन् उत्पत्तिविधिरित्युच्यते । तस्याङ्गसंबन्धं ज्ञापयन् स एव विनियोगविधिरिति, फलसंबन्धज्ञापनेन पुरुषं प्रवर्तयन् अधिकारविधिरिति, क्रमान्तं च सर्वमुपसंहृत्यानुष्ठापयन् प्रयोग-विधिरिति । तत्र यद्यप्युत्पत्तिविधिवाक्यादेव न कर्मणः स्वासाधारणफलाभि-संबन्धः प्रतीयते, तथापि तस्यैव विधेर्विनियोगादिरूपेणाप्यवस्थानात् उत्पत्तित एवेत्युक्तमिति । तथा च उत्पत्तित एवेति विधानत एवेत्यर्थः । अयमाशयः ।

यद्यद् विधीयते कर्म तस्य तस्य स्वफलसंबद्धस्यैव विधानं दृश्यते । यत्रापि विश्वजिदादिषु न फलश्रवणमस्ति तत्रापि 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्' इति (जै. ४-३-१५) स्वर्ग एव कर्मफलत्वेनाभिहितो जैमिनिना । तस्मान्न तदस्ति कर्म यस्य मुक्तिः फलमिति कल्प्येत । तदेवमुत्पत्तित एव विशिष्टसाध्याभिसंबन्धात् स्वासाधारणफलसंबद्धत्वात् सर्वप्रकारस्यापि कर्मणः न पारिशेष्यन्यायसिद्धिः । पूर्वपक्षी हि पारिशेष्यन्यायमवलम्ब्य नित्यकर्मफलं मुक्तिरिति कल्पयति । नित्यानां कर्मणां चोदितानां फलं न श्रुतम् । तेषां च फलेन भाव्यम् । इतरथा चोदनाप्रवृत्त्यनुपपत्तिप्रसङ्गात् । सर्वस्यापि कर्मणः स्वं स्वं फलं श्रुतमस्ति । सर्वस्यापि श्रुतस्य फलस्य स्वानुरूपसाधनभूतं कर्म श्रुतमेवेति नेतरकर्मफलव्यतिरेकेण कल्पनायोग्यं फलमस्ति । परिशिष्टश्च मोक्षः । स च साधनमपेक्षत इति फलाकाङ्क्षिणां नित्यानां कर्मणां फलत्वेन कल्पयितव्य इति । तदेतन्निराचष्टे 'पारिशेष्यन्यायासिद्धि'रिति । अभ्युपगम्यापि फलाश्रवणं न मोक्षः परिशिष्येत । विश्वजिन्न्यायेन स्वर्गस्यैव कल्पयितव्यत्वात् । न च नित्यस्य फलासिद्धिः । 'फलस्य' ग्रन्थ एव निर्देक्ष्यमाणत्वादिति भावः ॥

दुरितक्षपणार्थत्वात् इति । 'येन केनचन यजेतापि वा दर्वीहोमेनानुपहतमना एव भवति' (?) इति श्रुतेर्दुरितक्षपणं तावत् फलं वेदसिद्धम् इत्यर्थः । एतच्च फलाभिसन्धिरहितानां नित्यकर्मणां ज्ञानार्थत्वमभिप्रेत्योक्तम् । तथा च 'कर्मणा पितृलोकः' (बृ. १-५-१६) इति श्रुत्या अविरोधो द्रष्टव्यः ॥

साभिसंधीनां 'ब्रह्मा विश्वसृजः' (मनु १२-५०) इत्यादिफलस्य शिष्टैः कण्ठरवेण स्मृतत्वात् । न च तत् काम्यकर्मफलम् । कामिना देवसार्ष्टितालक्षणस्य फलस्योक्तत्वात् । यद्यपि 'नित्यानुष्ठानयत्नेन प्रत्यवायो न संस्पृशेत्' (१-१३) इत्यत्र पूर्वपक्षिणा प्रत्यवायपरिहार एव नित्यानुष्ठानफलत्वेनोक्तः, तथापि स्वाभिप्रायेणैतद्वचनं दुरितक्षपणार्थत्वादिति । प्रत्यवायपरिहारस्य केवलस्याभावरूपत्वात् फलत्वानुपपत्तेः इतरस्य कर्मणः फलान्तराभावे च

वृथायासफलकं कर्म वेदो विदधातीत्यन्याय्यकल्पनापत्तेः । अतो विधान-सामर्थ्यादेव नित्यानामपि कर्मणां फलवत्त्वमेव न्याय्यम् । तत्र चोदाहृतश्रुतिः प्रमाणम् । 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' (गी. १८–४), 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय....'(गौ.सू. २-२-२९) इत्यादिस्मृतयश्च – इति भावः । अथ कथञ्चित् प्रत्यवायपरिहारोऽपि फलत्वेनोपपाद्यते, तर्हि तदुपलक्षणार्थत्वमस्तु दुरितक्षपणस्य । मीमांसकैरप्येव-मुभयफलाङ्गीकारात् । यथाहुः – 'नित्यनैमित्तिककर्माण्यपि पूर्वकृतदुरित-क्षयार्थम् अकरणनिमित्तानागतप्रत्यवायपरिहारार्थं च कर्तव्यानि' (तं. वा. १–३–८–२७, पृ. २८८) इति । सर्वथापि तु दुरितक्षपणार्थत्वात् नित्यं कर्म विमुक्तये न स्यात् इत्यर्थः ॥

काम्यमपि कर्म नः अस्माकं मते तथैव नित्यकर्मवदेव न मुक्तये । कुतः ? तस्य स्वर्गादिफलसंबन्धात् । तत्तत्फलसाधनत्वेनैव हि काम्यानि विधीयन्ते इत्यभिप्रायः । यद्यपि पूर्वपक्षिणा काम्यं कर्म मुमुक्षुणा त्याज्यमित्येवोक्तं (१–१०) देवत्वादिप्राप्तिसाधनत्वात् (१–११) न मुक्तिसाधनमिति, तथापि पारिशेष्यासिद्ध्युपपादनाय तदभ्युपगतमेवात्रानूद्यत इत्यदोषः ॥ २६ ॥

(मूलम्)

प्रमाणासंभवाच्च –

साध्यसाधनभावोऽयं वचनात्पारलौकिकः ।
नार्थीयं मोक्षदं कर्म श्रुतेर्वकात्कयश्चन　॥ २७ ॥

(हृदयहारिणी)

मुक्तेः कर्मफलत्वे नैव श्रुतिवचनमस्ति –

ननु यद्यपि प्रत्येकं कर्मणां विशिष्टसाध्यसंबद्धत्वं श्रूयते तथापि नासंभावितमिदं कस्यचित् कर्मणः फलं स्यान्मोक्ष इति । न ह्यसर्वज्ञेनेदं शक्यप्रतिज्ञानं यत्रास्त्येव किञ्चिदपि कर्म यत्साध्यो मोक्षो न भवेदिति । तत्राह – प्रमाणाभावाच्च इति । न केवलं कर्मणां तत्तत्साध्याभिसंबन्धात्, किं तु प्रमाणाभावादपि ब्रूमः इत्यभिप्रायः ॥

कथमिति ? आह – साध्यसाधनभावोऽयम् इति । अय पार लौकिक साध्यसाधनभाव वचनादेवावगन्तव्य, न त्वनुमानगम्य । भवद्भिरपि खल्वेतदेवोपगत विधिमन्तरेण कृत साम्परायिक नोपकाराय स्यात् (१-१६) इति वदद्भि । न त्वह श्रुतेर्मुखात् मोक्षद कर्म विहितम् अश्रौषम् । न ह्यस्ति श्रुतिवचन मोक्षार्थिना इद कर्म कर्तव्यम् इति । स्वमनीषिकयैव तु केवलमभ्यूहित सभवेत् किञ्चित् कर्म मोक्षसाधकम् इति । अतो नाय शास्त्रार्थ । अत एव च वैदिकैरनुपादेय इत्यभिप्राय ॥ २७ ॥

( मूलम् )

**अभ्युपगताभ्युपगमाच्च श्वश्रूनिर्गच्छोक्तिवद् भवतो निष्प्रयोजनः प्रलापः –**

**निषिद्धकाम्ययोस्त्यागस्त्वयापीष्टो यथा मया ।**
**नित्यस्याफलत्वाच्च न मोक्षः कर्मसाधनः ॥ २८ ॥**

( क्लेशापहारिणी )

ननु मोक्ष प्रति साक्षात्साधनत्वाभावेऽपि कर्मणाम्, तैर्यथावर्णित विधयानुष्ठितै सर्वप्रतिबन्धविगमे सति ससारहेत्वभावादेव मोक्ष सेत्स्यति । काम्यनिषिद्धवर्जनपुर सर नित्यानुष्ठानात् सर्वानर्थहानि स्यात्, ततश्च स्वात्मन्यवस्थान मुक्तिरिति खल्वक्रमसाभि । तत्र किं दूषणमुक्त भवता ? – इत्याशङ्क्य, अत्रापि श्लोकद्वयम् उक्तशङ्कापरिहारार्थमावर्तनीयम् – 'साध्य साधनभावोऽयम्' (१-२७), 'निषिद्धकाम्ययोस्त्याग.' (१-२८)-इति च । न ह्यस्ति शास्त्रवचन किञ्चित् मोक्षार्थिना इत्थ कर्तव्यमिति । अतो नाय शास्त्रार्थ इत्यत उक्तानुष्ठानात् प्रतिबन्धनाशद्वारेणापि मोक्षो न भवेत् – इत्याद्यश्लोकाभिप्राय । न केवल प्रमाणाभावात् एवमुच्यते, त्वदभ्यूहस्य निष्प्रयोजनत्वाच्च – इति द्वितीयश्लोकाभिप्राय ॥

तदेव निष्प्रयोजनत्व प्रपञ्चयितु श्लोकमवतारयति – अभ्युपगता-भ्युपगमाच्चेति । य एव मया अभ्युपगत स एव त्वयाप्यभ्युपगत काम्या करणादि 'अकुर्वत क्रिया काम्या निषिद्धास्त्यजतस्तथा' (१-१०)

इति ब्रुवता । त्वयमभ्युपगमोऽसत्पक्षस्य बाधक , त्वत्पक्षस्य वा साधक । न हि निषिद्धकाम्ययोस्त्यागमात्र मोक्षकारणम् इत्यभ्युपगन्तु शक्यते । वक्ष्यते चायमभ्युपगमोऽध्यायान्ते 'योऽत्र काम्यानां प्रतिषिद्धानां च त्याग ' (१-८१) इत्यादिना सविस्तरम् । अतो निष्प्रयोजनोऽयं प्रलाप । निष्प्रयोजनत्वे निदर्शनम् 'श्वश्रूनिर्गच्छोक्तिवत्' इति । यथा भिक्षार्थिने भिक्षा प्रत्याख्यातवती स्नुषा निर्भर्त्स्य श्वश्रू पुनस्तमाहूयाऽऽह 'नास्त्यस्या भिक्षानिराकरणेऽधिकार , अहमेव तु स्वामिनी गृहे, निर्गच्छेदानीम्, नास्ति भिक्षा' इति, एवमेवास्मदभिप्रायमेवानुवदसि त्वम् न तु किञ्चिदधिक साधयसि – इत्याशय ॥

नन्तु नित्यानुष्ठानमपि मया मुक्त्यर्थमित्यधिकमुक्तम् । तत्राह – नित्यस्येति । नित्यस्य निष्फलत्वमेवोक्त त्वया 'नित्यानुष्ठानवर्ध्मेन प्रत्यवायो न सम्पृशेत्' (१-१३) इति । न हि प्रत्यवायासंस्पर्श एव मुक्ति । स्वात्मन्यवस्थान हि मुक्तिर्नाम । न च तस्यैकस्यैव कर्मण प्रत्यवायपरिहारार्थत्व मुक्त्यर्थत्व चेति युक्तम् । तत्र प्रमाणाभावादित्युक्तदोषात् । तत्कल्पने च वाक्यभेदप्रसङ्गात् । ननु स्वात्मन्यवस्थानमेव मुक्ति , तच्चावस्थान प्रतिबन्धक्षयादित्युच्यतेऽस्माभि । न । आत्मन्यवस्थानस्य नित्यसिद्धत्वेन साधनानपेक्षत्वात् । अत सर्वथापि न मोक्ष कर्मसाधन – इत्यभिप्राय ॥ २८ ॥

## ८. अज्ञानविनाशकत्वेनापि न मोक्षसाधनं कर्म

(मूलम्)

एवं तावत् 'मुक्तेः क्रियाभिः सिद्धत्वात्' (१-९) इति निरस्तोऽयं पक्ष. । अथाधुना सर्वकर्मप्रवृत्तिहेतुनिरूपणेन यथावस्थितात्मवस्तुविषयकेवलज्ञानमात्रादेव सकलसंसारानर्थनिवृत्तिरितीम पक्ष द्रढयितराम आह ॥

इह चेदं परीक्ष्यते – किं यथा प्रतिषिद्धेषु यादृच्छिकेषु च कर्मसु स्वाभाविकस्वाशयोत्थनिमित्तवशादेव 'इदं हितम्, इदम् अहितम्' – इति[1] परिकल्प्य मृगतृष्णिकोदकपिपासुरिव लौकिकप्रमाणप्रसिद्धान्येव साधनान्युपादाय हितप्राप्तयेऽहितनिरासाय च स्वयमेव प्रवर्तते निवर्तते च तथैवादृष्टार्थेषु काम्येषु नित्येषु च कर्मसु, किं वा अन्यदेव तत्र प्रवृत्तिनिवृत्तिनिमित्तम् ? – इति ॥

किञ्चातो यद्येवम् ? शृणु । यदि तावद् यथावस्थितवस्तुसम्यग्ज्ञानं प्रमाणभूतं लौकिकं आगमिकं वा प्रवृत्तिनिमित्तमिति निश्चीयते, निवृत्तिशास्त्रं च नाभ्युपगम्यते, तदा हताः कर्मत्यागिनः । भ्रान्तिविज्ञानमात्रावष्टम्भात्, अलौकिकप्रमाणोपात्तकर्मानुष्ठानत्यागित्वाच्च । अथ मृगतृष्णिकोदकपिपासुप्रवृत्तिनिमित्तवदयथावस्तुभ्रान्तिविज्ञानमेव सर्वप्रवृत्तिनिमित्तम्, तदा वदामहे वयं हताः स्थ यूयम् इति ॥

हितं संप्रेप्सतां मोहादहितं च जिहासताम् ।
उपायान्प्राप्तिहानार्थान् शास्त्रं भासयतेऽर्कवत् ॥ २९ ॥

( क्लेशापहारिणी )

कर्मप्रवृत्तिहेतुनिरूपणप्रतिज्ञा –

अथागामिग्रन्थस्य सबन्धकथनार्थम् अतीतग्रन्थार्थसंक्षेपमाह 'एवं तावद्' इति 'कर्मापमार्ष्टि नाज्ञान तमसीवोत्थित तम' (१-२४) इति कर्मणो मुक्तिसाधनत्वासभवे हेतु सूचित । तत्राय हेतुरसिद्ध इति मा शङ्कीति तदुपपादनाय सर्वकर्मप्रवृत्तिहेतुनिरूपण क्रियते । तेन च निरूपणेन

1 'इति' इत्यनन्तरं 'विशयान्' इति अधिक पा

सर्वप्रकारेऽपि लौकिके वैदिके वा कर्मणि प्रवृत्तिरज्ञानहेतुकीति सेत्स्यति । ततश्च कर्मणः स्वहेतुभूताज्ञानविनाशनासमर्थत्वम्, अर्थात् आत्मवस्तुविषयात् केवलज्ञानादेव सकलसंसारनिवृत्तिः, न तु कर्मापेक्षात् प्रसंख्यानाद्यपेक्षाद्वा इत्येतदपि दृढीकृतं भविष्यति । यद्यपि अज्ञानहेतुकज्ञानवत् कर्मणोऽप्यज्ञान निवर्तकत्वमस्तु इत्यपि शङ्कयितुं शक्यते, तथापि तदुत्तरत्र समाधास्यमितीह नोत्थाप्यते सा शङ्का । इह तु निवृत्तिशास्त्रमनभ्युपगम्य 'शास्त्रचोदितत्वादेव कर्म प्रागवेदज्ञानप्रहाणाय' इति शङ्काव्याधिरेव भिषज्यते सर्वप्रवृत्तिनिमित्त निरूपणेनेत्यदोषः । तदेवं कर्मणोऽज्ञाननाशनासामर्थ्ये स्थिते ज्ञानस्यैव तत्र प्रभुत्वम् – इति ज्ञानवादिपक्षं द्रढयितुम् उत्तरग्रन्थ इत्याह – अथाधुनेत्यादि ॥

प्रवृत्तिहेतुर्न निरूपणीय इति पूर्वपक्षः –

ननु किमस्ति निरूपणीयमत्र ? लौकिकेषु कर्मसु तावत् प्रत्यक्षादि प्रमाणसिद्धमेव यथाप्रसिद्धसाधनं प्राप्तुं परिहर्तुं वा प्रवर्तते लोकः । शास्त्रीयेषु तु कर्मसु शास्त्रप्रचोदित एव प्रवर्तत इति युक्तम्, तत्र साध्य साधनसंबन्धस्य प्रत्यक्षादिनानवगमात् । शास्त्रैकगम्यत्वाच्च । तथा हि पारमर्षं सूत्रम् 'चोदनालक्षणोऽर्थो धर्मः' (जै १–२) इति । तदेवं नास्त्येवात्र संशयः, यस्य निवारणाय कर्महेतुनिरूपणं क्रियेत । नापि प्रयोजनमस्य निरूपणस्य संभावयामः । विनैव निरूपणं लौकिकेषु वैदिकेषु च हिताहितेषु प्रवृत्तिनिवृत्त्योः सिद्धत्वात् । न हि पुरुषोत्प्रेक्षामात्रसाध्य आमुष्मिकफलस्य कर्मणः कार्याकार्यत्वविनिश्चयः । उक्तं हि भगवता 'तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ' (गी १६–२४) इति । आह च पूर्वमीमांसा भाष्यकारः 'तस्माच्चोदनालक्षणः श्रेयस्करः' (शा भा १–१–२) इति । तद्वार्तिककारश्च 'श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः । चोदनालक्षणैः साध्या तस्मात्तेष्वेव धर्मता ॥' (श्लो वा १–२–१९१, पा २८) इति । तस्मात् संशयप्रयोजनरहितत्वान्न कर्मप्रवृत्तिहेतुर्निरूपणमर्हतीति ॥

कर्मप्रवृत्तिहेतुः सन्दिग्धः –

अत्राह सिद्धान्ती – इह चेदं परीक्ष्यत इति । अयमाशयः । सत्यम् सन्दिग्धं सप्रयोजनमेव च परीक्षामर्हतीति । तथाभूतमेव त्वत्रापि परीक्षणीयम् । कथम् ? सन्देहस्तावत् प्रदर्श्यते । प्रतिषिद्धेषु तावत् कर्मसु अभक्ष्यभक्षणादिषु यादृच्छिकेषु च यदृच्छाप्राप्ताहारविहारादिषु कर्मसु स्वाभाविकस्वाशयोत्थनिमित्तवशादेव – स्वाभाविक मनुष्यस्वभावादेव प्राप्त न त्वाप्तवाक्यशास्त्रचोदनादिपरिप्राप्त स्वाशयोत्थ स्वान्तःकरणे समुत्पतित रागद्वेषादिरूपं यन्निमित्तम्, तद्वशादेव तत्प्रेरित एव – स्वयं प्रवर्तते निवर्तते च इति प्रसिद्धं प्रवृत्तिनिवृत्तिनिमित्तोपादानम् । ननु तदेव निमित्तं कस्मात् समुत्तिष्ठतीत्यत आह – हितमिदम्, अहितमिदम् इति परिकल्प्येति । हिताहितपरिकल्पनारूपोऽध्यास एव हेतू रागद्वेषसमुत्थाने । तयोश्चान्तःकरणे समुत्थितयोः सतो प्रवर्तते जनो हितप्राप्तये, निवर्तते चाहितात् इति सर्वेषां प्रत्यक्षमेतत् । अत्र दृष्टान्तं मृगतृष्णिकोदकपिपासुरिवेति । यथा पिपासापगमेच्छुः, जलपानसुखेच्छुश्च मृगतृष्णिकोदकम् उदकाभासमेव ‘उदकमिदम्, एतत्पानं चाहितपिपासापरिहाराय हर्षादिजननद्वारा हितप्राप्तये च भविष्यति’ इति परिकल्प्य तादृशाध्यासनिबन्धनरागद्वेषाभ्यामेव तत्र पाने प्रवर्तते । स चाध्यासः स्वाभाविक एव न शास्त्रकृतः । एवमेव प्रतिषिद्धेषु यादृच्छिकेषु च कर्मसु स्वाभाविकनिमित्तैव प्रवृत्तिरिति सुविदितमेतत् इत्यभिप्रायः । न अभक्ष्यकलञ्जादिभक्षणे अपेयसुरादिपाने वा निमित्तभूत क्षुधार्तस्य पिपासार्दितस्य वा भक्ष्यत्वपेयत्वज्ञानं शास्त्रकृतमिति मन्यते कश्चित् । तच्च ज्ञानं ‘न कलञ्जं भक्षयेत्’, ‘न सुरां पिबेत्’–इति प्रतिषेधज्ञानस्मृत्या बाध्यते । अनन्तरं प्रवृत्त्यभाव एव शास्त्रेण क्रियत इति भवद्भिरप्यङ्गीक्रियते इति भावः । प्रतिषिद्धेषु यादृच्छिकेषु च कर्मसु न केवलं साध्ये फलत्वबुद्धिः शास्त्रकृता, किं तर्हि साधनेषु साधनत्वबुद्धिरपीत्याशयवानाह – लौकिकप्रमाणप्रसिद्धान्येव साधनान्युपादायेति । तत्र यथा प्रतिषिद्धकर्मणि यादृच्छिके च हितप्राप्तयेऽहितनिरासाय च स्वयमेव प्रवर्तते

मिथ्याज्ञानोत्थरागद्वेषप्रेरित सन्, किं तथैव अन्यार्थेषु पारलौकिकेषु काम्येषु नित्येषु च कर्मसु मिथ्याज्ञाननिमित्तवशादेव स्वयं प्रवर्तते, किं वा अन्यदेव शास्त्रजनितं तत्र काम्येषु नित्येषु च कर्मसु प्रवृत्तिनिमित्तम् ? – यथाह पूर्वपक्षी – इति संशय । किं दृष्टफलत्वादृष्टफलत्वविभागात् प्रवृत्तिनिमित्तविभागोऽपि भवितुमर्हति, किं वा कर्मत्वसामान्यादुभयत्रापि समानमेव प्रवृत्तिनिमित्तम् ? – इति युक्त संशय इत्यभिप्राय ॥

प्रवृत्तिहेतुनिरूपणं सप्रयोजनम् –

ननु भवत्वेव संशय । निष्प्रयोजनत्वादेव निरूपण व्यर्थं भविष्यतीति शङ्कयति 'किञ्चातो यद्येवम्' इति । किमतो भवति यद्येव संशय ? यदि खलु समानमेव प्रवृत्तिनिमित्तम् यदि वा भिन्नम्, किं तावता भवेत् ? न किञ्चित्त्र फलभेद पश्याम – इत्याक्षेप । अस्य परिहारार्थमाह–भण्यते इति । यदि तावत् यथावस्थितवस्तुसम्यग्ज्ञान वस्तुतत्त्वानुसार्येव सम्यग्ज्ञानं लौकिकं लौकिकेषु कर्मसु प्रवृत्तिनिमित्तम्, काम्येषु नित्येषु च यथावस्थितवस्तु सम्यग्ज्ञानमेव आगमिक प्रमाणभूतमेव प्रवृत्तिनिमित्तम्, न तु मिथ्याज्ञानम् अप्रमाणभूतम्, यदि च निवृत्तिशास्त्रं सर्वकर्मसन्यासविधायि प्रमाणमिति नाभ्युपगम्यते 'यावज्जीवमग्निहोत्रं जुहोति' (?) इत्यादिशास्त्रविरोधात्, तदा कर्मत्यागिन, सर्वकर्मसन्यासपूर्वकात्मवस्त्वनुष्ठानादेव मुक्तिरिति वदन्त, हता पुरुषार्थात् परिभ्रष्टा भवेयु । कुत ? भ्रान्तिविज्ञानमात्रावष्टम्भात् । अशास्त्रीयस्वकपोलकल्पितसंन्यासहेतुकमुक्तिविज्ञानाश्रयणात् इत्यर्थ । न केवलं पुरुषार्थात् परिभ्रश , किं त्वनिष्टप्राप्तिरपि तेषा स्यादित्याशयवानाह – अलौकिकप्रमाणोपात्तकर्मानुष्ठानत्यागित्वाच्चेति । अलौकिकं वैदिकं यत् प्रमाणम्, 'स्वाध्यायोऽध्येतव्य', 'यावज्जीवमग्निहोत्रं जुहोति'–इत्यादि वचनरूपम्, तेन उपात्तं स्वीकृतं विहित यत् कर्मानुष्ठानम् तत्त्यागित्वाच्च ते हता भवेयुरित्यर्थ । तदेतत् फल यदि सम्यग्ज्ञाननिमित्ता कर्मप्रवृत्ति । अथ पक्षान्तरे सिद्धान्त्यभिमते मृगतृष्णिकोदकपिपासुप्रवृत्तिनिमित्तवत् अयथावस्तु

भ्रान्तिविशात्मेव सर्वप्रवृत्तिषु लौकिकीषु वैदिकीषु च निमित्तम्, तदा वय नैष्कर्म्यज्ञानवादिनो वर्तामहे। अज्ञानप्रहाणद्वारा पुरुषार्थप्राप्तेः। हता स्थ यूय मिथ्याज्ञानप्रयुक्तकर्मण एव मुक्तिमाशासाना। मिथ्याज्ञानावलम्बिनो हि फलाद्भ्रंशितत्त्व दृष्टम्, अनर्थप्राप्तिश्च मृगतृष्णिकोदकपानप्रवृत्त्यादिषु इति भाव॥

शास्त्रं पुरुषार्थोपायप्रदर्शकमात्रम् –

ननु भव नेव दर्शभेदेन फलभेद। क खल्वत्र निर्णय? तत्राह– **हितं सम्प्रेप्सतामिति॥** अयमभिप्राय। न तावत् शास्त्र कञ्चिदपि पुरुष बलात् कुत्रचित् प्रवर्तयितु कुतश्चिन्निवर्तयितु वा शक्नोति। दृश्यन्ते हि पुरुषा रागादिवशात् शास्त्रमप्यतिक्रामन्त। न च रागादय शास्त्रकृता। 'हित प्राप्स्याम, अहित च हास्याम' इतीच्छा तु स्वयमेवोत्पद्यते लोकस्य नैसर्गिकात्मोहात्। दृश्यते खलु हितसम्प्रेप्सा अहितजिहासा च गोपालादीनामनधीतशास्त्राणामपीति। कि तर्हीदानीं शास्त्र करोतीति? तत्राह – **उपायानिति।** प्राप्त्यर्थान् हानार्थांश्च उपायान् केवल भासयते शास्त्रम्। अर्कवत्। यथा हि अर्क प्रकाशात्मभाव सूर्य पथिगतान् पदार्थान् प्रकाशयत्येव केवलम्। तत्र हानोपादानोदासीन्यबुद्धयस्तु पथिकानां बुद्धिसंस्कारविशेषवशात् यथायथ स्वयमेव जायन्ते न त्वर्केणोत्पाद्यन्ते, तद्वदित्यर्थ। एतदुक्त भवति। प्रमाण हि शास्त्र स्वविषय पुरुषार्थोपाय ज्ञापयत्येव केवल यथा प्रत्यक्षादीनि प्रमाणानि स्व स्व विषयम्। न हि प्रमाणस्य प्रवर्तक त्व निवर्तकत्व वा क्वचित् दृष्टम्। य पुन प्रमितेऽर्थे हानायोपादानाय वा प्रवृत्तिनिवृत्तिरूपो व्यवहारो दृश्यते लोके, पुरुषेच्छावशादेव स, न तत्र प्रमाण व्याप्रियते। न चैव निवृत्तिशास्त्रस्यापि निवृत्तौ व्यापाराभावप्रसङ्ग। मोहादत्यासौ निवर्तते मोक्षितनेऽपि उक्तन्यायादेव विषयदोषदर्शनेन वैराग्यान्निवृत्त्युपपत्ते। प्रामाण्यमात्र तु प्रवृत्तिनिवृत्त्योरिच्छाकारणमात्र प्रत्यक्षमिति न प्रवृत्तिर्निवृत्तिर्वा तत्राभ्युपगम्यत इति सर्वं निरवद्यमिति॥ २९॥

( मूलम् )

एवं तावत् प्रत्यक्षानुमानागमप्रमाणावष्टम्भात्, आत्मनो निरतिशयसुखहितान्यतिरेकसिद्धेः अहितस्य च पष्ठगोचरवत् स्वत एवानभिसंबन्धात्, एवंस्वाभाव्यात्मानवबोधमात्रादेव 'हितं मे स्यादहितं मे मा भूत्' इति मिथ्याज्ञानं तूषरशुक्तिकानवबोधोत्थमिथ्याज्ञानवत् प्रवृत्तिनिमित्तम् इति निर्धारितम्। शास्त्रं च न पदार्थशक्त्याधानकृदिति। अथैतस्यैवोत्तरेण प्रपञ्च आरभ्यते –

न परीप्सा जिहासा वा पुंसः शास्त्रं करोति हि।
निजे एव तु ते यस्मात् पश्चादानपि दर्शनात् ॥ ३० ॥

( दुःखापहारिणी )

उत्तरग्रन्थसंबन्धः –

वृत्तवर्तिष्यमाणयोः संबन्धमाह – एवं तावदित्यादिना, आरभ्यते इत्यन्तेन ॥ तत्र प्रकृतमिदम्। प्रत्यक्षं चानुमानं चागमश्च प्रत्यक्षानुमानागमाः। त एव प्रमाणानि। तेषाम् अवष्टम्भात् आश्रयणात् 'इति निर्धारितम्' इति व्यवहितेन संबन्धः। तत्र आगमप्रमाणं तावत् पुरुषार्थोपायमेव भासयते 'इन्द्रकामोऽनेन यागेन यजेत' इत्येवम्, न तु द्वैतसत्यत्वप्रतिपादनेऽपि व्याप्रियत इत्यङ्गीकर्तव्यम्। न हि पुरुषार्थोपायप्रदर्शनम्, विषयसत्यत्वप्रतिपादनं चेत्येकस्य वाक्यस्य द्वौ व्यापारौ संभवतः। कथं तर्हि पुरुषस्य प्रवृत्तिस्तत्रेति ? अत आह – मिथ्याज्ञानं त्विति। तुरवधारणे। मिथ्याज्ञानमेवेत्यर्थः। यद्यपि द्वैतं न परमार्थसत् तथापि मिथ्याज्ञानवशात् तत्सत्यत्वं तत्र हिताहितत्वं च परिकल्प्य रागादिवशात् प्रवर्तते निवर्तते च – इति न काचिदनुपपत्तिरिति भावः। तत्र प्रत्यक्षमनुमानं च प्रमाणयति ऊषरशुक्तिकेत्यादिना। अयमर्थः। प्रत्यक्षं तावत् पुरुषा मिथ्याज्ञानहृतेच्छाप्रेरिताः, ऊषरे जलार्थं प्रवर्तन्ते शुक्तिकायां च रजतार्थमिति। ततश्चानुमानं

भवति 'यथा मिथ्याज्ञानमूषरादौ जलादिरहितेऽपि प्रवृत्तिनिमित्तम्, एवं मिथ्याज्ञानमेव द्वैतविषयशून्येऽप्यात्मनि तद्वस्तुकल्पनया तत्र प्रवृत्तिनिमित्तं भवितुमर्हति' इति । ननु मिथ्याज्ञानोत्थाने किं निमित्तमित्यत आह – **आत्मानवबोधमात्रादेवेति** । तत्र दृष्टान्तः 'ऊषरशुक्तिकानवबोधोत्थमिथ्याज्ञानवत्' इति । तदयं वाक्यार्थः । यथा ऊषरशुक्तिकयोर्जलरजतसंबन्धशून्ययोरेव तत्स्वाभाव्यानवबोधादेव मिथ्याज्ञानमुत्तिष्ठति 'जलमिदम्', 'रजतमिदम्' इति च । ततश्च 'हितमिदम्' इति परिकल्प्य तत्र प्रवृत्तिः । उपलक्षणमिदमहितपरिकल्पनस्यापि । "यथा वा रज्ज्वादौ सर्पादिसंबन्धशून्येऽपि तत्स्वाभाव्यानवबोधादेव मिथ्याज्ञानमुत्तिष्ठति सर्पोऽयमिति, ततश्च 'अहितमिदम्' इति परिकल्प्य ततो निवृत्तिः" इत्यपि द्रष्टव्यम् । यथायं दृष्टान्तः, एवमेव निरतिशयसुखहिताव्यतिरिक्तस्वरूपे निर्द्वैतेऽप्यात्मनि तत्स्वाभाव्यानवबोधादेव मिथ्याज्ञानमुत्तिष्ठति हिताहितद्वैतकल्पकम्, ततश्च हितं मे स्यादिति प्रवृत्तिः, अहितं मे मा भूदिति च निवृत्तिः इति ॥

**अत्र प्रत्यक्षादीनां विनियोगे मतान्तरं तद्दूषणं च –**

अत्र 'प्रत्यक्षानुमानागमावष्टम्भात्' इत्यस्य 'आत्मनो निरतिशयसुखहितान्यतिरेकसिद्धेः' इत्यव्यवहितेन संबन्धमिच्छन्ति केचित् । तन्न युक्तम् । आत्मनो निरतिशयसुखरूपत्वस्य प्रत्यक्षाद्याश्रयणेन पूर्वस्मिन् ग्रन्थे साधितत्वाभावात् । ग्रन्थप्रतिपादनशैल्यननुसाराच्च । इयं हि शैली तत्रभवत आचार्यस्य यदयं स्वतः सिद्धमेव नित्यनिरतिशयानन्दस्वरूपत्वमात्मनो वेदान्तेष्वीप्सित इति प्रतिज्ञाय तत्स्फुटीकरणार्थमेव सर्वस्यापि हिताहितप्राप्तिपरिहारार्थस्य कर्मणो मिथ्याज्ञाननिमित्तत्वं प्रदर्शयति । तथा च बाह्यविषये सुखहितबुद्धिरपि असुखाहितबुद्धिवत् मिथ्याज्ञानमेव स्वात्मस्वरूपानवबोधनिमित्तेति मन्यत इत्यवगम्यते । तस्मात् पूर्वापरविरुद्धो ग्रन्थप्रतिपादनशैल्यननुसारी चैवमन्वयः । एवं तु भवति । आत्मनो निरतिशयसुखहितान्यतिरेकसिद्धेः अहितस्य च षड्प्रमाणगोचरीभूताभाववत्, षडेन्द्रियविषयवदेव अत्यन्तमनभिसंबन्धादात्मना । परस्वाभाव्यस्य स्वभावेनैव सुखहितानन्यरूपस्य

नित्यनिर्वृत्तस्य आत्मनोऽनवबोधमात्रादेव हिताहितविकल्पनरूपं हितमिदं मे स्यात् अहितमिदं मे मा भून् – इति यन्मिथ्याज्ञानं तदेवात्र प्रवृत्तिनिमित्तम् ऊषरशुक्तिकाद्यनवबोधोत्थमिथ्याज्ञानवत् इति प्रत्यक्षानुमानागमप्रमाणावष्टम्भात् पूर्वस्मिन् ग्रन्थे निर्धारितमिति । अत्र प्रत्यक्षानुमाने यथोपन्यस्तदृष्टान्तबलात् सिध्यतः । आगमस्तु 'उपायान् भासयतेऽर्कवत्' (१-२९) इत्यनेनैव सिद्धः । तत्र हि शास्त्रं नेच्छां प्रवृत्तिं वा जनयति किं तूपेयभूतस्वर्गपुत्र-पश्वादिकामस्य तत्प्राप्त्युपायं दर्शयति केवलम्–इत्युक्तम् । तदाह–'शास्त्रं च न पदार्थशक्त्याधानकृदिति' इति । न हि शास्त्रं क्रियाकारकफलरूपस्य द्वैतस्य मिथ्याज्ञानपरिकल्पितस्य सत्यत्वमाधातुमीष्टे, कर्तृत्वभोक्तृत्वे प्रवृत्तिनिवृत्ती वा उत्पादयितुं कार्यकरणरहिते आत्मनि । पुरुषार्थोपायांस्तु प्रकाशयति – इत्युक्तम् इत्यभिप्रायः ॥

तदेवमतीतग्रन्थस्य तात्पर्यं सङ्क्षेपेणोक्त्वा इदानीमुत्तरग्रन्थस्य तात्पर्य-माचष्टे–'अथैतस्यैवोत्तरत्र प्रपञ्च आरभ्यते' इति । प्रवृत्तिनिवृत्ती स्वाभाविक-मोहकृते एव; तस्मात् मोहोत्थं कर्म मोहं निवर्तयितुं नालम्, सम्यग्ज्ञानं तु तत्र प्रभवतीत्येतस्यार्थस्य, शास्त्रस्य च पुरुषेच्छाप्रवृत्त्यादिजनकत्वं नास्तीत्ये-तस्यार्थस्य च प्रपञ्चः विवरणम् उत्तरस्मिन् ग्रन्थे भविष्यतीत्यर्थः ॥

शास्त्रं न पुरुषेच्छाजनकम् –

अथ हितसम्प्रेप्साम् अहितजिहासां वा शास्त्रं नाधत्ते इति तावदुपपाद-यति – न **परीप्सामिति** ॥ पर्याप्तुमिच्छा परीप्सा, हातुमिच्छा च जिहासा । ताम् इष्टप्राप्तीच्छाम् अनिष्टपरिहारेच्छां वा पुंसः पुरुषस्य अधिकारिणः शास्त्रं न करोति नोत्पादयति । हिः प्रसिद्ध्यर्थकः । तदेतत् कुतोऽवसीयते ? यस्मात् ते परीप्साजिहासे निजे एव । अविद्यास्वभाव-निबन्धने एव । तद्वा कुतोऽवगम्यते ? इत्यत्रोत्तरम् 'पश्वादावपि दर्शनात्' इति । अत्यन्तासंभावितशास्त्रविज्ञानेष्वपि पशुपक्ष्यादिषु स्वभावत एव तयो-र्दर्शनात् प्रसिद्धमेतत् यदिष्टानिष्टप्राप्तिपरिहारेच्छा न शास्त्रकृता इति– इति

हिशब्दप्रयोगेण विवक्षिता लोकप्रसिद्धिमभिव्यनक्ति । न च पश्वादिषु अविवेकात् प्रवृत्तिनिवृत्तिदर्शनेऽपि कथ विवेकिनां पुरुषाणा तथा व्यवहार इति संभावयाम ? तत्संभावने वा कथ प्रत्यक्षादीना प्रामाण्य न व्याहन्येत ?–इति शङ्क्यम् । *प्रयोजकेच्छाया समानत्वात् । समाना हि सर्वत्र विवेकिषु पुरुषेषु,* अविवेकिषु पश्वादिषु वा प्रवृत्तिनिवृत्तिप्रयोजिका इच्छा । न हि कश्चन विवेक्यपि पुरुष इच्छया अप्रयुक्त प्रवर्तते क्रियायाम्, निवर्तते वा तत । सा च स्वाभाविकी सर्वेषु प्राणिष्विति समान एव पुरुषाणा पश्वादिभिर्व्यवहार इत्यनवद्यम् । प्रत्यक्षादीना च यावदविद्यानिवृत्ति स्वप्नप्रमाणवत् प्रामाण्योपपत्ते । तस्मात् सुखदु खप्राप्तिपरिहारेच्छाकारण तादृशेच्छापूर्वकप्रवृत्तिनिवृत्ति व्यवहारकारण चाविद्यास्वभाव एवेति सिद्धमिति भाव ॥ ३० ॥

( मूलम् )

उक्तं तावदननुबुद्धवस्तुयाथात्म्य एव विधिप्रतिषेधशास्त्रेष्वधिक्रियत इति । अथाधुना विषयस्वभावानुरोधेन प्रवृत्त्यसंभवं वक्तुकाम आह –

लिप्सतेऽज्ञानतो लब्धं कण्ठे चामीकरं यथा ।
वर्जितं च सतो भ्रान्त्या छायायामात्मनो यथा ॥ ३१ ॥

भयान्मोहावनद्धात्मा रक्षः परिजिहीर्षति ।
यथापरिहृतं वस्तु तथा लब्धं च लिप्सते ॥ ३२ ॥

( क्लेशापहारिणी )

उत्तरग्रन्थसंबन्धः –

तदेव प्रवृत्तिनिमित्तपरीक्षणेन सर्वमपि कर्माज्ञाननिमित्तमेवेति निर्धारितम् । ततश्चाज्ञानकृतानर्थनिवृत्तौ न कर्म साधनमित्येतद् व्यवस्थापितम् । इदानीं पुरुषार्थस्वभावविवेचनेनापि तद्व्यवस्थापयितुम् आगामिग्रन्थसन्दर्भं इत्याह – उक्तं तावदिति ॥ अननुबुद्धवस्तुयाथात्म्य एव विधिप्रतिषेध-

शास्त्रेष्वधिक्रियते । 'अनवबोधोत्थमिथ्याज्ञाननिमित्तत्वात् प्रवृत्तिनिवृत्त्योः' इति शेषः । यद्यपि क्रियाकारकफलसंबन्धज्ञानवानेव कर्मस्वधिक्रियते नाज्ञानी, तथाप्यात्मनो नित्यनिवृत्तदुःखरूपत्वसुखहिताव्यतिरेकत्वज्ञानं नैवापेक्ष्यते कर्माधिकारे । ईदृशज्ञानस्य कर्मण्यनुपयोगात्, अधिकारविरोधाच्च । नित्यनिवृत्तदुःखस्वरूपत्वं सुखहिताव्यतिरेकत्वं चाऽऽत्मनो याथात्म्यम्- इति साधूक्तम् 'अनवबुद्धवस्तुयाथात्म्य एवाधिक्रियत' इति । एष तावदतीतानन्तरग्रन्थार्थः । अथोत्तरग्रन्थे किमुच्यते ? इति प्रश्नापाकरणायाह – अथाधुना विषयस्वभावानुरोधेन प्रवृत्त्यसंभवं वक्तुकाम आह – इति । विषयाः प्राप्तव्यपरिहर्तव्यार्थाः ॥

विषयस्वभावविवेचनार्थमेव प्राप्यपरिहार्यार्थौ तावद्विभजते–लिप्सत इत्यादिना । तत्र तावत् प्राप्तमपि प्राप्यं भवति । परिहृतमेव च परिहर्तव्यम् इति सोदाहरणं दर्शयति सार्धश्लोकेन । वस्तुतो लब्धमपि अज्ञानतो लिप्सते कण्ठे चामीकरं यथा । कण्ठस्थमेव स्वर्णभूषणम् नष्टमिति अज्ञानेन परिकल्प्य लब्धुमीहते इत्यर्थः । एवं स्वतो वर्जितमेव भ्रान्त्या परिहर्तुमिच्छति । तत्र दृष्टान्तः । यथा आत्मनश्छायाया स्वतः परिहृतमपि रक्षः राक्षस मोहावनद्धात्मा अज्ञानावृतान्तःकरणः भयात् परिजिहीर्षतीति । अप्राप्तप्राप्यम् अपरिहृतपरिहर्तव्यं तु सुप्रसिद्धमित्याह – 'यच्चापरिहृतं वस्तु' इति । तदपि परिजिहीर्षति । तथा अलब्धं च लिप्सते । न तत्र निदर्शनापेक्षा ; सर्वसंप्रतिपन्नत्वात् । तदित्थं प्राप्यं परिहार्यं च प्रत्येकं द्विविधं भवतीत्यर्थः ॥ ३१ ॥ ३२ ॥

( मूलम् )

तत्रैतेषु चतुर्षु विषयेषु प्राप्तये परिहाराय च विभज्य न्यायः प्रदर्श्यते –

प्राप्यपरिहार्येषु ज्ञात्वोपायाञ्छ्रुतेः पृथक् ।
कृत्वाथ प्राप्नुयात्प्राप्यं तथानिष्टं जहात्यपि ॥ ३३ ॥

अथावशिष्टयोः स्वभावत एव –

परिहृताप्राप्तयोर्बोधाद्धानप्राप्ती न कर्मणा ।
मोहमात्रान्तरायत्वात्क्रियया ते न सिध्यतः ॥ ३४ ॥

( क्लेशापहारिणी )

शास्त्रप्रकाशितोपायविभागः –

तत्रैव स्थिते शास्त्रेण कस्मिन् प्राप्ये परिहार्ये वा कीदृश उपाय प्रकाश्यत इत्यत्रोत्तरत्वेन श्लोकद्वयमानयन् आह – तत्रैतेष्विति ॥ अत्र चतुर्ष्वपि न सर्वत्र समानोपायता भवतीति विभज्यैव वक्तव्य भवतीत्याह – विभज्य न्याय प्रदर्श्यत इति । तत्र अप्राप्तप्राप्तव्यापरिहृतपरिहर्तव्येषु कथ प्राप्तिपरिहारौ इत्येतद्दर्शयति प्राप्तव्येत्यादिना । तत्र उपायान् श्रुतेर्मुखादेव ज्ञात्वा इ वा तत्तदुपायाननुष्ठायैव च अथ अनुष्ठानानन्तर प्राप्य प्राप्नुयात्, तथा अनुष्ठानानन्तरमेव च परिहर्तव्यम् अनिष्ट जह्यात् न तत्राननुष्ठाय प्राप्ति परिहारो वा, नाप्यनुष्ठानसमसमये । देहान्तरगतकालान्तरगतेष्टानिष्टप्राप्ति परिहारविषयत्वात् इच्छाया इति भाव । यथोक्त भाष्यकृद्भिः – 'सर्वथाप्यस्त्यात्मा देहान्तरसंबन्धीत्येव प्रतिपन्नुर्देहान्तरगतेष्टानिष्टप्राप्तिपरि हारोपायविशेषार्थिन तद्विशेषज्ञापनाय कर्मकाण्डमारब्धम्' (बृ भा अव) इति ॥ ३३ ॥

तदितरयो किंस्वभावतेत्यत आह अथावशिष्टयोरिति । 'स्वभावत एव परिहृताप्राप्तयो ' इति श्लोकस्थेन संबन्ध । अक्षराधिक्येऽपि न छन्दो भङ्ग । भुरिगनुष्टुब्लक्षणाक्रान्तत्वात् । यद्यपि 'न्यूनाधिकेनैकेन निचृद्भुरिजौ ' (छ सू ३-५९) इत्येतत्सूत्र वेदाङ्गतया प्रणीतम्, तथापि लोकवेद साधारण लक्षण मन्यत आचार्य इति गम्यते । उत्तरत्रापि तथैव तत्र तत्रानुगमात् ॥

स्वभावत एव परिहृताप्राप्तयो हानप्राप्ती बोधादेव न कर्मणा । कुत ? तयोर्हानप्राप्त्यो, मोहमात्रान्तरायत्वात् । अज्ञान हि केवल तत्र

प्रतिबन्धकम् । तच्च बोधमात्रनिवर्त्यमिति ते हानप्राप्ती नियया कर्मणा न सिध्यत । हेयोपादेयवस्तुस्वभावानुरोधेन हि प्रवृत्तिसमवासमवौ निश्चितव्यौ इति भाव ॥ ३४ ॥

(मूलम्)

कस्मात्पुनरात्मवस्तुयाथात्म्यावबोधमात्रादेवाभिलषित-निरतिशयसुखावाप्तिनिःशेषदुःखनिवृत्ती भवतो न तु कर्मणेति ? उच्यते –

कर्माज्ञानसमुत्थत्वान्नालं मोहापनुत्तये ।
सम्यग्ज्ञानं विरोध्यस्य तामिस्रस्यांशुमानिव ॥ ३५ ॥

(क्लेशापहारिणी)

सम्यग्ज्ञानमेवाज्ञानबाधकं न कर्म –

अत्र शङ्कते कस्मात्पुनरिति ॥ भवतु निरतिशयसुखावाप्तिर्निःशेष दुःखनिवृत्तिश्च मोहान्तरायनाशादेवेति । सोऽप्यन्तरायनाश कर्मणैव कुतो न भवति ? दृष्टं हि लोके मृगतृष्णिकादिसमीपगमनादिना कर्मणा तत्रोदक-भ्रान्तिविनाशः – इति शङ्कितुराशय । शङ्कापरिहाराय श्लोकमवतारयति – उच्यत इति ॥

'कर्माज्ञानसमुत्थत्वात्' इति । यद्यप्युक्तमेवेद प्रागपि नित्य काम्ययोरपि प्रवृत्तिरात्मस्वभावानवबोधजनितमिथ्याज्ञाननिमित्तैवेति, तथापि तदेवेहानूद्यतेऽन्यथिकाशङ्कापरिहारार्थम्–इत्यदोष । कर्म मोहापनुत्तये नाल न पर्याप्तम् । कुत ? यस्मात् अज्ञानसमुत्थत्वात् नाज्ञानविरोधि । सम्यग्ज्ञान तु अस्य मोहस्य विरोधि । अत्र निदर्शन 'तामिस्रस्यांशुमानिव' इति । यथा अंशुमान् भानु प्रकाशस्वभावत्वात् तमो विरुणद्धि एव सम्यग्ज्ञानमपि मोह विरुणद्धि । न हि तमोमात्रलब्धात्मा कश्चिदपि पदार्थस्तमसो विरोधीति युज्यते । दृष्टविरोधात् । समीपगमनादिरूप कर्म तु न साक्षादज्ञानम् अपनुदति, किं तु सम्यग्ज्ञानहेतुत्वेन परम्परयैवेत्यन्यदेतत् – इति भाव ॥ ३५ ॥

( मूलम् )

नन्वात्मज्ञानमप्यविद्योपादानम् । न हि शास्त्रशिष्याचार्याद्यनुपादायाऽऽत्मज्ञानमात्मानं लभत इति । नैष दोषः । यत आत्मज्ञानं हि स्वतःसिद्धपरमार्थात्मवस्तुस्वरूपमात्राश्रयादेवाविद्यातदुत्पन्नकारकग्रामप्रध्वंसि स्वात्मोत्पत्तावेव शास्त्राद्यपेक्षते नोत्पन्नमविद्यानिवृत्तौ । कर्म पुनः स्वात्मोत्पत्तौ उत्पन्नं च । न हि क्रिया कारकनिस्पृहा कल्पकोटिव्यवहितफलदानाय स्वात्मानं बिभर्ति साध्यमानमात्ररूपत्वात् तस्याः । न च क्रिया आत्मज्ञानवत् स्वात्मप्रतिलम्भकाल एव स्वर्गादिफलेन कर्तारं सम्बध्नाति । आत्मज्ञानं पुनः पुरुषार्थसिद्धौ नोत्पद्यमानस्वरूपव्यतिरेकेणान्यद् रूपान्तरं साधनान्तरं वा अपेक्षते । कुत एतत् ? यतः –

बलवद्धि प्रमाणोत्थं सम्यग्ज्ञानं न बाध्यते ।
आकाङ्क्षते न चाप्यन्यद्वाधनं प्रति साधनम् ॥ ३६ ॥

( क्लेशापहारिणी )

ज्ञानाज्ञानयोर्वैषम्ये शङ्का –

'तामिस्रस्याशुमानिव'(१–३५) इत्यत्र विवक्षित दृष्टान्तदार्ष्टान्तिकयो सामान्यमजानन् शङ्कते – नन्विति ॥ यथा हि कर्म स्वोत्पत्तौ अविद्योत्थ कारकग्रामम् अपेक्षते, एवमेव आत्मज्ञानमपि स्वोत्पत्तौ शास्त्रशिष्याचार्यादि भेदम् अज्ञानोत्थम् अपेक्षत एव । तत्र यदुक्तम् 'कर्माज्ञानसमुत्थत्वान्नाल मोहापनुत्तये' (१–३५) इति, तदयुक्तं भाति । न हि शास्त्रादिभेद मज्ञानोत्थम् अनुपादाय अस्वीकृत्य आत्मज्ञानम् आत्मानं लभते । तत् दृनीमेव तु जायते इति प्रसिद्धमेतत् इत्यर्थ । अत आत्मज्ञानमप्यविद्यो पादानम्, अज्ञानसमुत्थमेव । न कश्चिदत्र विशेषं संभावयाम – इति शङ्कावादिनोऽभिप्राय ॥

## परिहारः – ज्ञानं फलदाने निरपेक्षम् –

सिद्धान्ती तु स्वाशयमाविष्कुर्वन् शङ्कां परिहरति – नैष दोष इति । आत्मज्ञानमप्यविद्योपादानमित्येष नैव दोषः । कथम् ? तत्राह यत इति । यत आत्मज्ञानेऽस्त्ययं विशेषः । आत्मज्ञानं हि 'स्वात्मोत्पत्तावेव अज्ञानोत्थशास्त्रादिभेदम् अपेक्षते, नोत्पन्नमपि अविद्यानिवृत्तौ ' इति व्यवहितेन संबन्धः । अत्र यत इत्यारब्धत्वात् हीत्यतिरिच्यते । अथवा प्रसिद्धार्थकोऽयं हिशब्दः । प्रसिद्धं हीदं शास्त्रे आत्मज्ञानं स्वतः सिद्धपरमार्थात्मवस्तुस्वरूपमात्राश्रयादेवाविद्यातदुत्पन्नकारकग्रामनिर्ध्वंसीति इत्यभिप्रायः । न ह्यात्मज्ञानं कर्मवत् स्वव्यापाराय प्रमाणसिद्धकारकाद्याश्रयते, किं तु स्वतः सिद्धात्मवस्तुमात्रमाश्रयते । तत्स्वरूपचैतन्याश्रयेणैव तद्व्याप्तं तदाभासं च सत् व्याप्रियते । स्वतः सिद्धश्चायमात्मा नैव स्वप्रकाशनार्थं ज्ञानव्यापारमपेक्षते, किमर्थं तर्हि, अज्ञानव्यवधाननिवृत्तिमात्रार्थम् । तन्निवृत्तिरेव ह्यात्मप्रकाशनं ज्ञानस्येत्युपचर्यते । अत एव चेदं ज्ञानं परमार्थवस्त्वाश्रयम्, न तु कर्मवदविचारितसिद्धद्वैतवस्त्वाश्रयम् । अपि च ज्ञानं स्वात्मभूतवस्त्वाश्रयम्, न तु कर्मवत् स्वात्मभिन्नवस्त्वाश्रयम् । किं च ज्ञानम् आत्मवस्तुस्वरूपमात्राश्रयं सत् अन्यानपेक्षमेव स्वकार्यं करोति न तु कर्मवत् स्वव्यतिरिक्तकारकापेक्षम् । किं चान्यत् ज्ञानम् अविद्यातदुत्पन्नकारकग्रामप्रध्वंसि, तत्सत्यत्वबुद्ध्यपहारकत्वात्; न तु कर्मवदविद्योत्थकारकग्रामोपजीवि स्वप्राणधारणेऽपि । अतो महदिदं वैधर्म्यं ज्ञानकर्मणोः । तदेवं वैलक्षण्यात् ज्ञानं स्वोत्पत्तिमात्रेणाविद्यां विनाशयति, न च तत्र विनाशने शास्त्रादिभेदमपेक्षते । कर्म तु कारकसाध्यात्मरूपत्वात् स्वोत्पत्तौ कारकग्राममपेक्षते, उत्पन्नमपि चापेक्षते स्वफलदानायेति । किं तर्हि कर्मणो ज्ञानाद् वैलक्षण्यं स्वफलदाने इति ? तत्राह – कर्म पुनरिति । पुनःशब्दो ज्ञानाद् विशेषमाह । तदेव विवृणोति फलस्वभावकथनद्वारेण – न हि क्रियेति । क्रिया कारकनिरपेक्षा नैव स्वात्मानं बिभर्ति नैव चिरं स्थातुमर्हति । साध्यमानमात्ररूपत्वात् तस्याः । न हि सा जातुचिद् वस्तुवत् सिद्धरूपा किं तु कारकसाध्यमात्रस्वरूपा कारकपरतन्त्रस्वरूपा ।

अत स्वाश्रय विना न कथञ्चित् स्थातुमुत्सहत इत्यर्थ । नन्वेवमपि को दोष ? उच्यते । कर्मफलं हि कदाचित् कल्पकोटिकालव्यवहितमपि भवति । तत्तादृश फल स्वयमचिरस्थायिनी क्रिया कथ प्रसवितु प्रभवेत् ? अत एव हि कर्ममीमासका प्राहु – अपूर्वाख्य रूपान्तरमास्थायैव कर्म स्व फल ददातीति । ननु कि कारण कारकापेक्षमेव प्राणधारण क्रियाया काङ्क्षणीयम् ? क्रियापि आत्मज्ञानवदेव उत्पत्तिसमसमयमेव फल दास्यतीत्याशङ्क्योक्तम् – स्वर्गादिफलेनेति । न हि कालव्यवहितेन स्वर्गादिना सम्बन्ध कर्तुं क्रियोत्पत्तिकाले भविष्यतीति चिन्तयितुमपि शक्यमिति भाव ॥

आत्मज्ञानस्यापि नोत्पत्तिमात्रेणाज्ञाननिवर्तकत्वमित्येकदेशिमतम् –

अत्रावसरे केचिदाहुः । आत्मज्ञानमपि निरतिशयसुखावाप्तिनि शेष दुःखपरिहाररूपपुरुषार्थेन नाधिकारिण स्वात्मप्रतिलम्भकाल एव सयुनक्ति, नाप्युत्पन्नमात्रमविद्या निवर्तयितुमलम् । यस्माद् वाक्यजन्य ज्ञानमभ्यासवशात् अवाक्यार्थविज्ञानरूप प्राप्यैवाविद्यानिवर्तनसमर्थ भवति । अथवा यद्यपि वाक्यज्ञानमुत्पन्नमेवाविद्यानिवर्तनसमर्थम्, तथाप्यनादिकालप्रवृत्तत्वादविद्या वासना बलवती पुनरप्युत्थाय दुर्बल ज्ञानमपि बाधते । अतो यावद् दृढतर बोधो न जायते तावत् शास्त्रयुक्त्यभ्यासोऽपेक्ष्यत एव । तथा कर्माणि च पुरुषार्थप्रतिबन्धनिवर्तनद्वारेण सहकारीणि, इत्यतो न युक्तमिद केवलस्य वाक्यजन्यज्ञानस्याभ्यासादिनिरपेक्षस्य स्वोत्पत्तिमात्रेण पुरुषार्थहेतुत्ववर्णनमिति ॥

एकदेशिमतद्वयनिराकरणार्थत्वेनोत्तरश्लोकावतारणम् –

तदेतन्मतद्वय निराकर्तुमुत्तरश्लोकमवतारयति – आत्मज्ञानं पुनरिति । रूपान्तरं साक्षात्काररूपम्, साधनान्तरम् अभ्यासादिरूपम् इत्यर्थ । तत्र एकदेशिन, मध्यस्थस्य वा प्रश्न – 'कुत एतत् ?' इति । अवगम्यते इति शेष । यत यस्माद् 'यत्वद्धि सम्यग्ज्ञानम्,' इति श्लोकार्धेन संबन्ध ॥

बलवद्धीति ॥ यत्तावदुच्यते वाक्यजनितं ज्ञानं नालमविद्यां निवर्तयितुमिति । तदसत् । कुतः ? बलवद्धि तत् अविद्यापेक्षया । कथम् अपौरुषेयवेदान्तवाक्यरूपप्रमाणोत्थत्वात् । अविद्या तु दुर्बला । केवलमविचारितसिद्धत्वादिति भावः । न चैवं कर्मणोऽपि प्रमाणोत्थत्वात् तस्यापि ज्ञाननाशकत्वे शास्त्रस्य व्याहतवचनत्वप्रसङ्गः । उक्तपरिहारत्वात् । उक्तं हि चोदनाशास्त्रं विशिष्टसाध्योपायमात्रम् अवभासयतेऽर्कवत् न तु क्रियाकारकफलात्मकद्वैतस्य सत्यत्वमपि प्रतिपादयति, सम्यग्ज्ञानं तु द्वैतसत्यत्वमात्रमपबाधते न तु साध्यसाधनसंबन्धमपीति । अत उक्तपरिहारत्वान्न व्याहतवचनत्वप्रसङ्ग इति । न हि प्रमाणोत्थं ज्ञानं स्वविषयविषययाविद्यया बाध्यमानं क्वचिद् दृष्टम् ; अविद्याबाधकत्वं तु तस्य नियमेन दृश्यते । यच्चोच्यते सम्यग्ज्ञानमपि कर्मवद् रूपान्तरं साधनान्तरं वा समपेक्षते फलदानायेति । एतदप्यसत् । कुतः ? उक्तहेतोरेव । प्रमाणोत्थं ज्ञानं स्वविषयाविद्यां निराकुर्वदेव हि प्रमितिर्नाम । विप्रतिपिद्धं चेदं बलवती प्रमितिरुत्पन्ना प्रमेयविषया, अविद्या च न बाधितेति । तदेवं प्रमाणोत्थत्वादेव सम्यग्ज्ञानमज्ञानापेक्षया बलवत्, तत एव चाज्ञानबाधकम्, न त्वज्ञानबाध्यमिति ज्ञानान्यनिरपेक्षमेव स्वप्रमेयप्रकाशनसमर्थमिति च सिद्धम् इत्यर्थः ॥ २६ ॥

(मूलम्)

स्वपक्षस्य हेत्ववष्टम्भेन समर्थितत्वान्निराशङ्कमुपसंह्रियते —

तस्माद् दुःखोदधेर्हेतोरज्ञानस्यापनुत्तये ।
सम्यग्ज्ञानं सुपर्याप्तं क्रिया चेन्नोक्तहेतुतः ॥ २७ ॥

(क्लेशापहारिणी)

अज्ञाननिवर्तकं ज्ञानमेवेत्युपसंहारः —

तदेवं 'मुक्तेः क्रियाभिः सिद्धत्वात्' इति पूर्वपक्षं निराकृत्यात्मज्ञानादेव केवलात् परमपुरुषार्थः इत्ययं स्वपक्षः समर्थितः । अतः प्रतिज्ञातार्थ उपसंह्रियत इत्याह — स्वपक्षस्येति ॥

तस्मादिति ॥ दुःखोदधेः सर्वानर्थसागरस्य हेतोः अज्ञानस्य अपनुत्तये निरासाय सम्यग्ज्ञानमेकमेव सुपर्याप्तं पुष्कलं साधनम् । क्रियैव क्रियापि वा तत्र साधनमिति चेत्, न । उक्तहेतुतः । सर्वप्रकारस्यापि कर्मणः स्वासाधारणफलत्वेनैव विधानात्, कस्यापि कर्मणो मोक्षसाधनत्वेनाविहितत्वात्, कर्मप्रवृत्तिमात्रस्य मिथ्याज्ञानपूर्वकत्वात्, मुक्तौ च कर्मकार्यस्य चतुर्विधस्याप्यसंभवात्, नित्यप्राप्तस्य च परमपुरुषार्थस्याज्ञानत एवाप्राप्तत्वेन प्रतिभासात्, अज्ञानस्य चाज्ञानोत्थकर्मणा निवृत्त्ययोगात्, सम्यग्ज्ञानस्य तु केवलस्यैवाज्ञानापनोदनद्वारा मुक्तिहेतुत्वोपपत्तेः, न काचिदपि क्रिया मुक्ति साधनम् – इति समुदितार्थः ॥ ३७ ॥

(मूलम्)

ननु बलवदपि सम्यग्ज्ञानं सदप्रमाणोत्थेनासम्यग्ज्ञानेन बाध्यमानमुपलभामहे ; यत उत्पन्नपरमार्थबोधस्यापि कर्तृत्व-भोक्तृत्वरागद्वेषाद्यनर्थबोधोत्थप्रत्यया आविर्भवन्ति । न ह्यबाधिते सम्यग्ज्ञाने तद्विरुद्धानां प्रत्ययानां संभवोऽस्ति । नैतदेवम् । कुतः ?

बाधितत्वादविद्याया विद्या सा नैव बाध्यते ।
तद्वासना निमित्तत्वं यान्ति विद्यास्मृतेर्ध्रुवम् ॥ ३८ ॥

(क्लेशापहारिणी)

सम्यग्ज्ञानमप्यविद्याबाध्यं भवेदिति शङ्का –

अत्र च वेदान्तवाक्यजन्यस्य ज्ञानस्य प्रमाणोत्पन्नत्वेन बलवत्त्व मज्ञानबाधकत्वं च उक्तम् (१–२६) । स्वतःसिद्धपरमार्थात्मवस्तुस्वरूप मात्राश्रयत्वेनैव तत्र प्रयोजकमित्युक्तम् । अथेदानीम्, यद्यप्यविचारितसिद्ध-द्वैतवस्त्वाश्रयमेव लौकिकं प्रत्यक्षादिज्ञानम्, तथाप्यनादिकालप्रवृत्तत्वात् तद्वासना पुनरप्युदेत्य सम्यग्ज्ञानं बाधिष्यते इति पूर्वपक्षमाशङ्कयति – ननु

बलवदपीति ॥ अप्रमाणोऽर्थेनेति आविचारकत्वेनिरूप्यमाणोऽर्थेनेत्यर्थ । ननु सम्यग्ज्ञानमपि बाध्यत इति कुतोऽवसीयत इत्याशङ्क्याह – यत उत्पन्न परमार्थबोधस्यापीति । वेदान्तवाक्येन इति शेष । अनवबोधोत्था कर्तृत्व भोक्तृत्वरागद्वेषादिप्रत्यया आविर्भवन्ति । दृष्टमिद लोके इत्यभिप्राय । नन्वेवमपि सम्यग्ज्ञान बाधितमिति कुतो निश्चय इत्यत आह – न हीति । अबाधिते सम्यग्ज्ञाने तद्विरुद्धाना भ्रान्तिप्रत्ययाना सभवो नास्ति । दृश्यन्ते च वाक्यावगतपरमार्थस्यापि कर्तृत्वबुद्ध्यादिरूपा मिथ्याप्रत्यया । अतो यथा द्विचन्द्रदर्शनदिग्विपर्यासादय आप्तवचननिनिश्चितचन्द्रैकत्वादितत्त्वाना मप्यनुवर्तन्ते, एवमेव वेदान्तवाक्यावगततत्त्वानामपि द्रढीयोमिथ्याज्ञानसम्स्कार वशात् सम्यग्ज्ञानमपि बाधितमसम्यग्ज्ञानकल्प भवति, तत एव मिथ्या प्रत्ययानुवृत्तिरिति निश्चीयते । तस्मात्तादृशानुवृत्तमिथ्याप्रत्ययविनाशाय सम्यग्ज्ञानपटुसम्स्कारार्थमस्त्यन्यत् किञ्चिदपेक्ष्यमिति भाव । वर्णितशङ्काप नोदाय श्लोकमवतारयति – नैतदेवम् इति ॥

अविद्यातद्वासनाना न कश्चिदपि बाधकत्वम् –

बाधितत्वादिति ॥ बाधिताया पुनरुत्थान बाधकत्व च नैव संभवतीति श्लोकपूर्वार्धार्थ । यद्यपि अविद्यावासना पुनरुद्भवेयु, तथापि तत एव ज्ञानस्मृतेरप्युद्भावयित्र्यो भूत्वा पुनरपि तयैव बाध्येरन् इत्युत्तरार्धार्थ । अयमत्राभिप्राय । सम्यग्ज्ञातेऽपि विषये चेत् अज्ञानानुवृत्ति शङ्क्यते तर्हि ज्ञानानर्थक्यम्, अज्ञानहान प्रयत्नाश्वासश्च सर्वत्रेत्यतिप्रसङ्ग । विद्या विद्ययोर्हि बाध्यबाधकभाव सबन्ध । बाधितायाश्चाविद्याया हेतुरहिताया पुनरुत्थितिर्दुःसंभाव्या, तस्या विद्याबाधकत्व तु सुतरा दु समाव्यम् । पूर्वं हि विद्यमानाप्यविद्या विद्याजन्मनिरोधे नैव शक्ताऽभूत्, जातमात्रया च तया बाधिता । कथ सेदानीं मृता सती विद्याबाधिका भवेत् ? किं चोत्पन्नापि विद्या बाध्यते चेत् तदा विद्याभ्यासस्त्वदभिमत कथङ्कारं मुमुक्षुभि शक्यकरण स्यात् ? यच्चोच्यते कर्तृत्वादयो दोषा विदितपरमार्थ स्यापि पुनराविर्भवन्तीति । अयमप्यदोष । बाधितानामेव प्रत्ययवासनाना

तत्राविर्भावात्। न चाविद्यावासनाना विद्यातो बलवत्त्व शक्यशङ्कम्। बाध्यबाधकयो सकृदेव सम्बन्धात्, अविद्यायाश्च विद्यया पूर्वमेव बाधितत्वात्। अविद्यावासनास्तु जायमाना स्वाक्षिकाभिर्विद्यावासनाभि पुनरपि बाध्यन्त एवेत्युक्तम्। यत् पुनर्द्विचन्द्रदर्शनादिविपर्यासा आसप्तवचनोत्तरमप्यनुवर्तन्त इति। तत्र ब्रूम। युक्ता चन्द्रादीनामनात्मत्वात् वाक्यमात्रेणापरोक्ष्य न भवतीति विपर्यासानुवृत्ति। अत्र पुन प्रागपि वाक्यश्रवणाद् ब्रह्मण श्रोतुरव्यतिरेकान्न कोऽपि हेतुरस्त्यविद्यानाशोत्तरमपि तत्पारोक्ष्ये। न ह्यात्मन स्वात्मा कदापि केनापि व्यवहित – इति वैषम्यम्। तस्मान्नास्त्येव शङ्काकारण विद्या स्वबाधिताविद्यया बाध्यत इतीति। तदेतत् सर्वं ग्रन्थकृद्भिरेव बृहद्वार्तिके (बृ वा ४-४-९१४ ९५८) सविस्तर प्रतिपादितमिति तत्रैवानुसन्धेयम् इत्यल दिष्टदहनप्रयासेन॥ ३८॥

## ९. अविद्यान्वयेन संसारान्वयः

(मूलम्)

'कर्माज्ञानसमुत्थत्वात्' (१-३५) इत्युक्तो हेतुः। तस्य च समर्थन पूर्वमेवाभिहित 'हित संप्रेप्सताम्' (१-२९) इत्यादिना। तदभ्युच्चयार्थम् अविद्यान्वयेन च ससारान्वयं[1] प्रदर्शयिष्यामीत्यत आह –

ब्राह्मण्याद्यात्मके देहे लात्वा नात्मेतिभावनाम्।
श्रुतेः किङ्करतामेति वाङ्मनःकायकर्मसु ॥ ३९ ॥

यस्मात्कर्माज्ञानसमुत्थमेव तस्मात्तन्निवृत्तौ निवर्तत इत्युच्यते –

दग्धाखिलाधिकारश्चेद्ब्रह्मज्ञानाग्निना मुनिः।
वर्तमानः श्रुतेर्मूर्ध्नि नैव स्याद्वेदकिङ्करः ॥ ४० ॥

1 समाराऽन्वयिनमित्यपि पाठ ॥

( क्लेशापहारिणी )

आगामिग्रन्थस्य सम्बन्धमाह – कर्माज्ञानसमुत्थत्वादितीति ॥ कर्म नाज्ञाननिवर्तकम् इति प्रतिज्ञाय तत्र 'अज्ञानसमुत्थत्वात्' इति हेतुरुक्त इत्यर्थ । तस्य चेति । नित्यकाम्ययो शास्त्रविहितत्वात् नाज्ञानसमुत्थत्व मित्याशङ्काया पुरुषार्थोपायप्रदर्शकमात्र शास्त्रम्, न पदार्थशक्त्याधानकृत् – इत्यत सर्वापि कर्मणि प्रवृत्तिरज्ञानोत्थमिथ्याज्ञाननिमित्तेनेति 'हित सम्प्रेप्सताम्' इत्यादिना हेतुसमर्थन पूर्वमेवोक्तमित्यर्थ । किं तर्हीदानीमुच्यते ' तत्राह – तदभ्युच्चयार्थमिति । तस्याज्ञानसमुत्थमिथ्याज्ञानहेतुकस्य कर्मण नियमेन ससारान्वयित्वमस्ति यत, तस्मात् संसारनिवृत्तिलक्षणहेतुत्व न सभवतीति युक्त्यन्तरेणापि समर्थनम् । तदर्थम् । अविद्यान्वयेन संसारान्वयमिति । उपलक्षणमेतत् । अविद्याव्यतिरेकेण ससारव्यतिरेक चेति द्रष्टव्यम् । प्रदर्शयिष्यामीत्यत प्रदर्शयिष्यामीति हेतौ । एतदर्थम् इति यावत् । अत्रेद बोध्यम् । न केवलम् अज्ञानसमुत्थत्व किं तूत्पन्नस्य ससारहेतुभूताविद्यान्वयित्वमपि हेतु अविद्यानिवर्तनासामर्थ्ये । अविद्यान्वये ससारान्वयस्य नान्तरीयकत्वादिति भाव । यत्तदुक्त (सं ३६) ज्ञानम् स्वोत्पत्तिमात्रे अविद्यामपेक्षते, कर्म पुन स्वात्मोत्पत्तौ उत्पन्न च इति, तत्र अविद्यासमुत्थत्व तावत् समर्थितम्, अथेदानीम् उत्पन्नमपि कारका द्यविद्याकार्यमपेक्षते, ततश्च ससारहेतुरवश्य भविता इति द्वितीयो यो हेतुस्तदभ्युच्चयार्थ । न हीह अविद्यान्वयव्यतिरेकाभ्या ससारान्वयव्यतिरेकौ प्रदिदर्शयिषितौ, अतत्प्रकरणत्वात्, किं तर्हि कर्मणोऽविद्यानिवर्तन सामर्थ्याभावे हेतु । अतस्तदेवेह प्रदर्श्यते कर्मण ससारहेतुभूताविद्या न्वयित्वादपि नाविद्यानिवर्तकत्वमस्तीति ॥

अज्ञानान्वये संसारान्वयः –

ब्राह्मण्याद्यात्मक इति ॥ ना पुरुष ब्राह्मण्याद्यात्मके वर्णाश्रमा द्यध्यासवति देहे आत्मेतिभावनाम् आत्मत्वाभिमान लात्वा स्वीकृत्य वाङ्मन कायनिर्वर्त्येषु कर्मसु निमित्तभूतेषु श्रुते किङ्करतामेति । 'अहमधिकारी

श्रुत्या अस्मिन् कर्मणि नियुक्तः' इति बुद्धया तत्तत्कर्मणि प्रवर्तेत इत्यर्थः। अज्ञानोत्थादेव देहाद्यभिमानलक्षणान्मिथ्याज्ञानात् कामपरवशः सन् भृत्यः इव स्वामिना नियुक्त श्रुतिविहितानि कर्माणि कृत्वा तत्तत्फलं भोक्तुमीहते इत्येव अज्ञानान्वयेन संसारान्वयः प्रदर्शित', उत्पन्नस्यापि कर्मणः स्वफलदानायाविद्यापेक्षा दुर्वारा इति प्रदर्शनार्थम् ॥ ३९ ॥

अज्ञानव्यतिरेके संसारव्यतिरेकः –

अथेदानीं व्यतिरेकप्रदर्शनमारभ्यत इत्याह – **यस्मादिति** ॥ तद्व्यावृत्तौ अज्ञाननिवृत्तौ निवर्तते कर्म। ततश्च संसाराभाव इति भावः ॥

**दग्धाखिलेति** ॥ अधिक्रियतेऽनेनेत्यधिकार। कर्तृत्वभोक्तृत्वार्थित्वसमर्थत्वविद्वत्त्वापर्युदस्तत्वाद्यधिकारकारणम्। ब्रह्मज्ञानाग्निना दग्धाः अखिलाधिकारा यस्य स मुनि. ब्रह्मतत्त्वमननशील.। नियोगाविषयब्रह्मात्मत्वदर्शित्वादेव श्रुतेर्मूर्ध्नि सामन्तमूर्ध्नि विन्यस्तचरण इव सार्वभौम. श्रुतिशिरसि वर्तमानः। तत्कारणीभूततत्प्रतिपाद्यसर्वज्ञब्रह्मरूपेणैवावस्थितः इति यावत्। अत एवेदृशो मुनिर्वेदकिङ्करो नैव स्यात्। 'अनेनाह नियुक्त' इति नैव प्रवर्तेत इत्यर्थ। यथोक्तं भाष्यकारैः 'न हि स्वविज्ञानोत्थेन वचसा स्वयं नियुज्यते। नापि बहुवित् स्वामी अविवेकिना भृत्येन' (ऐ. भा. अव) इति। सोऽयमविद्याव्यतिरेकेण ससारव्यतिरेक प्रदर्शित, ज्ञानेनाज्ञाननिवृत्तौ सत्यं कर्माद्यन्यनिरपेक्षैव मुक्तिरिति प्रदर्शनार्थम् ॥ ४० ॥

(मूलम्)

अथेतरो घनतराविद्यापटलसंवीतान्तःकरणोऽङ्गीकृतकर्तृत्वाद्यशेषकर्माधिकारकारणो विधिप्रतिषेधचोदनासंदंशोपदष्टः कर्मसु प्रवर्तमानः –

शुभैः प्राप्नोति देवत्वं निषिद्धैर्नारकीं गतिम्।
उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः ॥ ४१ ॥

आनक्षत्वत्रपर्यन्ते घोरे दुःखोदधौ घटीयन्त्रवदारोहावरोहन्यायेनाधममध्योत्तमसुखदुःखमोहनिष्ठुबफलसंपातदायिनीर्विचित्रयोनीश्चण्डोत्पिञ्जलकवसनवेगाभिहताम्भोधिमध्यवर्तिनुष्कालाघुवत् शुभाशुभव्यामिश्रकर्मवायुसमीरितः—

एवं चंक्रम्यमाणोऽयमविद्याश्रमकर्मभिः ।
पाशितो जायते कामी म्रियते चायुरावृतः　　॥ ४२ ॥

(क्लेशापहारिणी)

उक्तान्वयस्य प्रपञ्चः —

अथैतन्नैव प्रपञ्च आरभ्यते वैराग्यहेतोर्मुमुक्षूणामित्याशयवानाह — अथेतर इति ॥ इतर दाशाखिलाधिकारान्मुनेरन्य घनतरेण अतिनिविडेन अविद्यापटलेन सवीतम् आच्छादितम् अन्त करण यस्य स तथोक्त । यथा पटलावृतनेत्रो वस्तून्यन्यथान्यथा पश्यति, अविद्यमानान्यपि केशमशकादीनि च । एवमविद्यावृतान्त करणनयनत्वान्मिथ्याज्ञानेनाङ्गीकृत कर्तृत्वभोक्तृत्वाद्यशेषकर्माधिकारकारण सन् । अभ्यस्ताधिकारकारणत्वादेव हेतोर्विधिप्रतिषेधचोदनासदशोपदष्ट । सदश आयुधविशेष उभयतोदन्त । विधिचोदना प्रतिषेधचोदना चेत्युभयलक्षणत्वादुभयतोदन्तेन संदशेन उपदष्टो गृहीत । उभयविधचोदनाबद्ध इत्येतत् । स एव कर्मसु प्रवर्तमान किं फलमाप्नोती याह । उत्तरश्लोकेन इति शेष ॥

शुभैरिति ॥ उक्त हि मोक्षधर्मेषु 'शुभैर्लभति देवत्व व्यामिश्रै जन्म मानुषम् । अशुभैश्चाप्यधोजन्म कर्मभिर्लभतेऽवश ॥' (मो ध. ३२९–२०) इति ॥ ४१ ॥

संसारोपवर्णनम् —

अवशत्वमेव विशदयति — आनक्षत्रत्वपर्यन्ते इति ॥ 'योनी' इत्यस्य 'चक्रम्यमाण' इत्यनेन श्लोकस्थेनान्वय । घटीयन्त्रवदारोहावरोह न्यायेनेति । यथा घटीयन्त्रेऽवसक्तो घट आरोहति वाप्या, पुनरप्यवरोहति

तस्यामेव यथापूर्वम्, तद्वदित्यर्थः । आरोहावरोहावेव प्रपञ्चयति – अयमेत्यादिना । तारतम्येन सुखदुःखमोहाना विद्युत इव चपले य सघात अत्यन्तचञ्चलसम्बन्ध, स दातु शील यासा ता विचित्रयोनी देवनरतिर्यगाद्या भ्रम्यमाण । योनीना वैचित्र्ये हेतुमाह–शुभाशुभव्यामिश्रकर्मवायुसमीरित इति । कर्मप्रेरित एव तत्तत्फलभोगार्थं विचित्रा योनी पर्यायेण प्राप्नोतीत्यर्थ । चक्रमणे दृष्टान्त – चण्ड उत्पिञ्जलक आकुलीभूतश्च य श्वसनो वायु, तस्य वेगेन अभिहतस्य अम्भोनिधेर्मध्ये वर्तमान शुष्कालाबु यथा भ्रमीति तथा–इत्यर्थ । एव भ्रमत्रयम् अविद्यया, तत्कृतकामेन, कामप्रेरितकर्मभिश्च, पाशितो बद्ध सन् अमुत्रावृत एव जायते म्रियते च । तत्र हेतुमभर्पक विशेषण 'कामी' इति । तथा हि श्रुति 'कामान् य कामयते मन्यमान स कामभिर्जायते तत्र तत्र' (मु ३–२–२) इति । एतेनाविद्यैव कामकर्मद्वारा सप्तृतेर्बीजम् – इत्युक्त भवति ॥ ४२ ॥

( मूलम् )

यथोक्तेऽर्थ आदरविधानाय प्रमाणोपन्यासः –

श्रुतिश्चेमं जगादार्थं कामस्य विनिवृत्तये ।
तन्मूला संसृतिर्यस्मात्तन्नाशोऽज्ञानहानतः ॥ ४३ ॥

का न्वसौ श्रुतिरिति चेत् –

यदा सर्वे प्रमुच्यन्त इति न्विति च वाजिनः ।
कामबन्धनमेवेदं व्यासोऽप्याह पदे पदे ॥ ४४ ॥

( क्लेशापहारिणा )

उत्तार्धे प्रमाणोदाहरणम् –

यथोक्तेऽर्थे श्रुतिस्मृतिप्रमाणमुदाह्रियते श्लोकद्वयेन । तदाह – यथोक्त इति ॥ श्रुतिश्चेममिति ॥ यस्मात् काममूला ससृति, तन्नाशश्च तद्धेतुभूताज्ञाननाशतो भवति, तस्मात् कामस्य विनिवृत्तये श्रुतिश्च इममर्थं कामादेव संसरति काममोक्षाच्च विमुच्यते इत्याह – इति श्लोकार्थ ॥ ४३ ॥

का त्वसौ श्रुतिरिति चेत् । तत्रोत्तरमुत्तरश्लोकेनोच्यत इति शेष. ॥

यदा सर्वे इति ॥ 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥' (बृ. ४-४-७), 'प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मण इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' (बृ. ४-४-६)–इति च वाजिन । आमनन्तीति शेष । तत्र हि श्रुत्या कामान्वयव्यतिरेकाभ्या संसारान्वयव्यतिरेकौ प्रदर्शितौ । तथा स्मृतावप्युक्तमित्याह – कामबन्धन-मेवैकमिति । 'कामबन्धनमेवेद नान्यदस्तीह बन्धनम् । कामबन्धनमुक्तो हि ब्रह्मभूयाय कल्पते' (मो. ध. २५१-७) इति पूर्ण वाक्यम् । इदं सर्वेषा जनाना प्रत्यक्षतोऽनुभूयमानं बन्धनं कामकृतबन्धनमेव । एतद्व्यतिरेकेण नास्तीह ससारे बन्धनकारणम् । यस्मात् कामबन्धनान्मुक्त एव ब्रह्मभावं गन्तु समर्थो भवतीत्यन्वयव्यतिरेकाभ्या दृष्टं कामस्यैव बन्धनत्वमिति व्यासवाक्याभिप्राय । 'व्यासोऽप्याह पदे पदे' इत्यनेन । 'एता बुद्धि समास्थाय मद्भिर्निर्वेदमागत । सर्वान् कामान् परित्यज्य प्राप ब्रह्म महत्सुखम् ॥' (मो ध. १७९-५७) इत्यादिव्यासवचनजातं ग्राह्यम् । अतोऽविद्यान्वये कामकर्मद्वारा ससारान्वय, तद्व्यतिरेके च ससारव्यतिरेकः इति यत् प्रतिज्ञातम् (१-२९), तत् सप्रमाणकमित्यभिप्राय. ॥ ४४ ॥

## १०. कर्मणां परम्परया मोक्षहेतुत्वम्

(मूलम्)

एष संसारपन्था व्याख्यातः । अथेदानीं तद्व्यावृत्तये कर्माण्यारादुपकारकत्वेन यथा मोक्षहेतुतां प्रतिपद्यन्ते तथा अभिधीयते –

तस्यैवं दुःखतप्तस्य कथञ्चित्पुण्यशीलनात् ।
नित्येहाक्षालितधियो वैराग्यं जायते हृदि ॥ ४५ ॥

कीदृग्वैराग्यमुत्पद्यत इति ? उच्यते –

नरकाद्वीर्यथाऽस्याभूत्तथा काम्यफलादपि ।
यथार्थदर्शनात्तस्मान्नित्यं कर्म चिकीर्षति ॥ ४६ ॥

एवं नित्यनैमित्तिककर्मानुष्ठानेन –

शुध्यमानं तु तच्चित्तमीश्वरार्पितकर्मभिः ।
वैराग्यं ब्रह्मलोकादौ व्यनक्त्यथ सुनिर्मलम् ॥ ४७ ॥

( क्लेशापहारिणी )

उत्तरग्रन्थसंबन्धः –

कर्म संसारकारणम् इत्युक्तम् । तन्नाशाय ज्ञानमेव साक्षात्साधनम् इति च । अत कर्मणा मोक्षे सर्वथा उपयोगाभाव इति प्राप्ते तेषां तत्राप्युपयोगप्रकारं वक्तुमयमारम्भ इत्याह – एष संसारपन्था इति । समासान्तविधेरनित्यत्वात् पन्था इति प्रयोगो मर्षणीय । अविद्याहेतो काम , कामात् कर्म, तत फलभोगार्थं देहधारणम् इत्येष मार्गः संसाराय । 'न स तत्पदमाप्नोति संसारं चाधिगच्छति' (का १–३–७) इति श्रुते । अथेदानीं तद्व्यावृत्तये संसारमार्गविनिवृत्तये यद्यपि कर्माणि न साक्षात् प्रभवन्ति । तथापि आराद् परम्परया तद्धेतुभूतज्ञानोत्पादनद्वारेण यथा मोक्षहेतुतामपि प्रतिपद्यन्ते प्राप्नुवन्ति तथा अभिधीयते । उत्तरग्रन्थे इति शेष ॥

कर्मणा चित्तशुद्धिद्वारेण वैराग्यजनकत्वम् –

कथमारादुपकारकत्वम् ? तत्राह – तस्यैवमिति । तस्य कामिन एव वर्णितप्रकारेण दुःखतप्तस्य कथञ्चित् दैवात् पुण्यशीलनात् शास्त्रोक्तपुण्यकर्मानुष्ठानात् नित्येहाक्षालितधिय नित्यकर्मानुष्ठानेन क्षालिता निर्मलीकृता धीर्यस्य तस्य तत एव हृदि वैराग्यमुपजायते इत्यर्थ । ततश्च वक्ष्यमाणेन क्रमेण मोक्षोपायानुष्ठानात् परम्परया मुक्तिहेतुत्वं कर्मणामिति भाव ॥ ४५ ॥

उत्कटवैराग्यमेव संसारव्यावृत्तिहेतुरिति प्रदर्शयन् काम्यकर्मफलवैरस्य तावत् समनन्तरश्लोकेनोच्यत इत्याह – कीदृग्वैराग्यमिति ॥

**नरकादिति** । प्रतिषिद्धकर्मसेवाफलान्नरकाद् भीभिय यथास्य पुरा अभूत्, तत एव भिया प्रतिषिद्धत्यागपूर्वकं काम्ये कर्मणि प्रावर्तत तत्र शोभनत्वबुद्ध्या । एवमेव इदानीं काम्यफलादपि भीर्भवति । कुतः ? यथार्थदर्शनात् । तस्य सातिशयत्वक्षयिष्णुत्वादिदोषवत्त्वदर्शनात् इत्यर्थः । यद्यपि काम्यफलस्य स्वर्गादेरदृष्टस्य कालान्तरभाविनः इह याथात्म्यं न साक्षाद्द्रष्टुं शक्यम् । तथापि शास्त्रदृष्टिमवलम्ब्य 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते' (छा ८–१–६) इत्यादि न्यायोपबृंहितश्रुतिबलान्निश्चेतुं शक्यत एवेति सूक्तं 'यथार्थदर्शनात्' इति । यत एव काम्यफलादपि भीर्जाता, तस्मात् नित्यं कर्म चिकीर्षति । कर्तुमिच्छति । तत्रैव यत्नवान् भवतीत्यर्थः ॥ ४६ ॥

तत्र नित्यस्य कर्मणः फलान्तरमप्यस्तीति मोक्षोपयोगित्वं कथमित्याकाङ्क्षापरिहारायोत्तरः श्लोकः । तमवतारयति – एवम् इत्यादिना । 'नित्यं कर्म चिकीर्षति' इत्यत्र नित्यग्रहणं प्रदर्शनार्थमित्याशयेन प्राह – नित्यनैमित्तिककर्मानुष्ठानेनेति ॥

एवं काम्यनिषिद्धवर्जनपुरःसरं नित्यनैमित्तिकानुष्ठानत एव किं वैराग्यमुपजायते ? न । अन्यदपि कर्तव्यमस्तीत्याह – शुध्यमानं त्विति । सप्तार्थः श्लोकः । यद्यपि वर्णाश्रमविहितानां कर्मणां सम्यगनुष्ठितानां स्वर्गप्राप्तिः फलं स्वभावतः 'स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय' (गौ ध २–२–२९) इत्यादिस्मृतिभ्यः, वर्णिनामाश्रमिणां च लोकफलभेददर्शकपुराणवाक्येभ्यश्च, तथापि तेषामेव कर्मणामीश्वराराधनत्वेनोपयुक्तानां चित्तशुद्धिवैराग्यजननेन ज्ञानयोग्यतारूपं फलान्तरमत्रोच्यत इति न विरोधः । अत्र च 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ ४–४–२२) इत्यादिकाः श्रुतयः, 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् । एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानीति

मे पार्थ निश्चितं मतमुत्तमम् ॥' (गी. १८-५, ६), 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धं विन्दति मानवः ॥' (गी. १८-४६) इत्यादिस्मृतयश्च प्रमाणम् । यद्यपि च पूर्वत्र (१-२९) निषिद्धयादृच्छिकयोरिव काम्यनित्ययोरपि मिथ्याज्ञाननिमित्तकप्रवृत्तिविषयत्व मभिहितम्, तथाप्यविद्यादशायामेव नित्यनैमित्तिककर्मणोर्ज्ञानोत्पत्तिहेतुत्वं कथयितुमिह वैराग्यादिजनकत्वं प्रदर्श्यत इत्यविरोधः ॥ ४७ ॥

(मूलम्)

यस्माद् रजस्तमोमलोपसंसृष्टमेव चित्तं कामबडिशेनाऽऽकृष्य विषयदुरन्तसूनास्थानेषु निक्षिप्यते, तस्मान्नित्यनैमित्तिककर्मानुष्ठानपरिमार्जनेनापविद्धरजस्तमोमलं प्रसन्नमनाकुलं संमार्जितस्फटिकशिलाकल्पं बाह्यविषयहेतुकेन च रागद्वेषारम्भकेनातिप्रबलबडिशेनानाकृष्यमाणं विधूताक्षेपकल्मषं प्रत्यगात्रप्रवणं चित्तदर्पणमवतिष्ठते । अत इदमभिधीयते –

च्युत्थितादोषकामेभ्यो यदा धीरवतिष्ठते ।
तदैव प्रत्यगात्मानं स्वयमेवाविविक्षति ॥ ४८ ॥

(क्लेशापहारिणी)

नैष्काम्यस्य ज्ञानोत्पत्तौ हेतुत्वम् –

कामप्रयुक्त कर्मभिः संसरतीत्युक्तम् । नित्यनैमित्तिकानुष्ठानेन विशुद्धसत्त्वस्य तु चित्त प्रज्ञालोकादावपि नैष्काम्यं ध्यनक्तीति च । अथास्य नैष्काम्यस्य ज्ञानोत्पत्तावुपयोगं दर्शयितुमुत्तरग्रन्थ इत्युपपत्तिपूर्वकं दर्शयति – यस्मादित्यादिना । स्वभावतश्चित्तं स्वच्छमपि, संसारिषु न सत्त्वप्रधान भवति, किं तु रजस्तमोभ्याम् उपसंसृष्टम् । कलुषीकृतमित्येतत् । एवं कलुषितमेव चित्तं कामबडिशेन आकृष्यते विषयदुरन्तसूनास्थानेषु निक्षिप्यते च । बडिशं मत्स्यवेधनसाधनम् । सूनास्थानानि वधस्थानानि । यथा बडिशेनाऽऽकृष्य मत्स्यः सूनास्थानेषु निक्षिप्यते, एवं समलविशेषं चित्तं

कामेनाऽऽकृष्य अनर्थकरेषु बहिर्विषयेषु दुरन्तेषु दु खावसानेषु निक्षिप्यते । तत्रश्च जन्मादिससारप्रबन्धो नान्तरीयक इत्यर्थ । एव मलिनमेव चित्त ससारमार्गभवति यस्मात्, तस्मात् नित्यनैमित्तिककर्मानुष्ठानरूपेण परिमार्जनेन क्षालनेन अपनिद्धरजस्तमोमलम् अपनीतकल्मष सत् प्रसन्न भवति । अनाकुलमचञ्चल च भवति । प्रसादत्वे निदर्शनम् संमार्जितस्फटिकशिला-कल्पमिति । यथा स्फटिकशिला स्वभावत एव स्वच्छा सती सम्यक् क्षालनेन स्वच्छतरा भाति विगतरजआदिकल्मषा, तद्वत् चित्तमपि स्वच्छतरम् आत्मग्रहणयोग्य भवतीति भाव । स्मर्यते हि 'योगिन कर्म कुर्वन्ति सङ्ग त्यक्त्वात्मशुद्धये' (गी ५-११) इति । अनाकुलत्वे हेतु दर्शयति — बाह्यविषयहेतुकेनेति । यावत् हि तमोनिमित्त विषययाथात्म्यादर्शनरूप मल रजोनिमित्त चाञ्चल्य च चित्ते तिष्ठति, तावत् कामवडिशेनाऽऽकृष्यत इति युक्तम् । अत्र कामवडिशेनेति प्रदर्शनार्थमुक्तम्, यतो विषय द्विषन्नपि तत्परिहारार्थं प्रवर्तत एव । तदाह — रागद्वेषात्मकेनेति । इन्द्रियाणा ग्रहत्व जीवस्य वशीकरणात्, विषयाणा चातिग्रहत्व ग्रहाणामिन्द्रियाणामपि वशीकरणात् । 'अष्टौ ग्रहा अष्टावतिग्रहा' (बृ ३-२-१) इत्यादिश्रुत्या प्रपञ्चित ह्येतत् । तत्र तु 'मनो वै ग्रह स कामेनातिग्राहेण गृहीतो मनसा हि कामान् कामयते' (बृ ३-२-७) इत्येतावदुक्तम् । तुल्यन्यायेन [illegible] 'मनसा हि द्वेष्यान् द्वेष्टि' इत्यपि द्रष्टव्यम् इत्यभिसधायाह — रागद्वेषात्मकेनाति ग्रहवडिशेनेति । यदा पुनश्चित्त रजस्तमोमलवियुक्त जात तदा नैव राग द्वेषाभ्यामाकृष्यते बहि, किं तु विधूताशेषकल्मषत्वात् प्रसन्नत्वात्प्रवणम् अन्त स्थितात्ममात्राभिमुख बाह्यपराङ्मुख चेत्यर्थ । चित्तदर्पणम् इति रूपक निर्मलत्वेनाऽऽत्मग्रहणसामर्थ्यद्योतनार्थम्, अवतिष्ठते इति चाचाञ्चल्येन तन्निष्ठायोग्यत्वद्योतनार्थम् इत्यवधेयम । एतावत्पर्यन्त वर्णितेऽर्थे श्लोक इत्याह — अत इति ॥

व्युत्थितेति ॥ यदा धी अशेषकामेभ्यो व्युत्थिता अवतिष्ठते । तदैव स्वयमेव कारणान्तरमनपेक्ष्य प्रत्यगात्मानम् आविविशति प्रवेष्टुमिच्छति ।

आत्मविविदिषासंपन्ना भवतीत्यर्थः । यद्यपि 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥' (का. २-३-१४) इति सर्वकामप्रमोक्षो मुक्तलक्षणत्वेनैवाभिहितः श्रुत्या, स्मृत्या च 'प्रजहाति यदा कामान्' (गी. २-५५) इत्यादिकया, तथापीह स एव यत्नसाध्यत्वात् मुमुक्षोः साधनत्वेन प्रदर्शित इत्यविरोधः ॥ ४८ ॥

(मूलम्)

अतःपरम् अवसिताधिकाराणि कर्माणि प्रत्यक्प्रवणत्वमूर्तौ कृतसंप्रत्तिकानि चरितार्थानि सन्ति –

प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः ।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥ ४९ ॥

(क्लेशापहारिणी)

प्रत्यक्प्रवणचित्तस्य संन्यास एवाधिकारः –

यदैवं प्रत्यक्प्रवणता संजाता तत परं कर्मसंन्यास एव कर्तव्य इत्याह – अतःपरमिति । चरितार्थानि सन्ति 'अस्तमायान्ति' इति श्लोकस्थेन संबन्धः । यद्यपि 'कृतार्थानि' इत्येतदपि श्लोकमध्ये पठ्यते, तथापि 'कृतसंप्रत्तिकानि' इत्येतदन्तं हेतुवचनं तेनैव संबन्धनीयमिति स्पष्टीकरणार्थं 'चरितार्थानि सन्ति' इत्यधिकं संबन्धोक्तावित्यदोषः । संप्रत्तिर्नाम पुत्राय स्वव्यापाराणां संप्रदानम्, तस्यैव तत्करणे नियोजनम् । यदा पिता मरणकालमात्मनः संनिहितं मन्यते, प्रव्रजिष्यन् वा भवति, तदा पुत्रमाहूयाऽऽह – 'एतावन्तं कालं यद्यद् वैदिकं कर्म मम कर्तव्यमासीत् तत् सर्वम् इत ऊर्ध्वं त्वयैव कर्तव्यम्' इति । सेयं संप्रत्तिः बृहदारण्यके 'अथातः संप्रत्तिः' (बृ. १-५-१६) इत्यादिनोपदिष्टा । तदालम्ब्याह- अवसिताधिकाराणि समाप्तकर्तव्यानि स्वाश्रये कर्तरि कृत्याभावात् प्रत्यक्प्रवणत्वमूर्तौ कृतसंप्रत्तिकानीति । इदमुक्तं भवति । प्रत्यक्प्रवणत्वमेव मुमुक्षुकर्मणां मुख्यं कार्यम् । तत ऊर्ध्वं यत् कर्तव्यं ज्ञानजननं तत् प्रत्यक्प्रवणतैनैव

निर्वर्त्यत इति प्रत्यक्प्रवणतारूपावान्तरव्यापारद्वारैव तानि ज्ञानोपचितिहेतुत्वं प्रतिपद्यन्त इति ॥

प्रत्यक्प्रवणतामिति । सुगमं श्लोकार्थं । अभिप्रेत त्विदम् । कर्मण कार्यं चित्तशुद्धिवैराग्यप्रत्यक्प्रवणताजननपर्यन्तमेव । यदा तु प्रत्यक्प्रवणता जाता तदा कर्मसन्यास एव कर्तव्य इति । 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' (जा ४) इति श्रुते ॥ ४९ ॥

(मूलम्)

यतो नित्यकर्मानुष्ठानस्यैष महिमा –

तस्मान्मुमुक्षुभिः कार्यमात्मज्ञानाभिलाषिभिः ।
नित्यं नैमित्तिकं कर्म सदैवाऽऽत्मविशुद्धये ॥ ५० ॥

(क्लेशापहारिणी)

उक्तार्थोपसंहारः –

नित्यनैमित्तिककर्मणा सङ्गफलत्यागपूर्वकम् ईश्वरार्पणबुद्ध्या मुमुक्षुभि रवश्यकर्तव्यतामुक्तामुपसंहर्तुमुत्तर श्लोक इत्याह – यत इति ॥

तस्मादिति । स्पष्टार्थ श्लोक । 'धर्मान्न प्रमदितव्यम्' (तै १-१-११), 'न त्याज्य कार्यमेव तत्' (गी १८-५), 'सङ्ग त्यक्त्वाऽऽत्म शुद्धये' (गी ५-११) – इत्यादिश्रुतिस्मृतयोऽत्रानुसंधेया ॥ ५० ॥

(मूलम्)

यथोक्तेऽर्थे सर्वज्ञवचनं प्रमाणम् –

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शम एवेति च स्मृतिः ॥ ५१ ॥

(क्लेशापहारिणी)

कर्मानुष्ठानतत्संन्यासयोः प्रमाणम् –

कर्मणा बुद्धे प्रत्यक्प्रवणत्वजन्मन प्रागनुष्ठेयत्वं तत पर सन्यसनीयत्वमित्यत्र भगवदुक्तिं प्रमाणयति – यथोक्तेऽर्थ इति ॥

आरुरुक्षोरिति । ज्ञानसाधन ध्यानयोगमारुरुक्षो , तदनुष्ठानसामर्थ्य प्राप्तिपर्यन्त ईश्वरार्पणबुद्ध्या अनुष्ठित नित्य नैमित्तिक च कर्म कारण तत्साधनमुच्यतेऽभियुक्तै । तस्यैव योगारूढस्य योगानुष्ठानसमर्थस्य तु शम , उपशम । कर्मसंन्यास एवेत्यर्थ । कारणमुच्यते मुक्ति प्रतीति गीतास्मृति अस्मदुक्तार्थमेवाऽऽह इत्यर्थ ॥ ५१ ॥

(मूलम्)

नित्यकर्मानुष्ठानाद्धर्मोत्पत्तिः, धर्मोत्पत्तेः पापहानिः, ततश्चित्तशुद्धिः, ततः संसारयाथात्म्यावबोधः, ततो वैराग्यम्, ततो मुमुक्षुत्वम्, ततस्तदुपायपर्येषणम्, ततः सर्वकर्मतत्साधनसंन्यासः, ततो योगाभ्यासः, ततश्चित्तस्य प्रत्यक्प्रवणता, ततस्तत्त्वमस्यादिवाक्यार्थपरिज्ञानम्, ततोऽविद्योच्छेदः, ततश्च स्वात्मन्येवावस्थानम् ' ब्रह्मैव सन् ब्रह्माप्येति ' (बृ॰ ४–४–६), ' विमुक्तश्च विमुच्यते ' (का॰ २–२–१) इति –

पारम्पर्येण कर्मैवं स्यादविद्यानिवृत्तये ।
ज्ञानवन्नाविरोधित्वात् कर्माविद्या निरस्यति ॥ ५२ ॥

(क्लेशापहारिणी)

कर्मणां परम्परया मोक्षदायित्वे क्रमः –

कर्मणां येन पारम्पर्येण मोक्षहेतुत्व प्रतिज्ञातम् । तदुत्तरश्लोके उपसंह्रियते । तदेव च पारम्पर्यमत्र संक्षेपोक्तौ निन्यस्यते साधनसोपानक्रम ज्ञापनार्थं नित्यकर्मानुष्ठानादित्यादिना । (१) नित्यकर्मानुष्ठानात् धर्मोत्पत्ति पुण्यनिष्पत्ति । (२) तदुत्पत्तेश्च पापहानि । (३) ततश्च चित्त शुद्धि । (४) चित्तशुद्धौ तत संसारयाथात्म्यावबोध । संसारस्य याथात्म्य दुःखमयत्वादिदोषवत्त्वम् । तस्यावबोधो ज्ञानम् । यदर्थम् ईश्वरगीतासु भगवान्

अमानित्वादिज्ञानसाधनानुक्रमणप्रसङ्गेनाऽऽह — 'जन्ममृत्युजराव्याधिदुःख दोषानुदर्शनम्' (गी १३–८) इति । (५) ततो वैराग्य यदुपदर्शित 'वैराग्य ब्रह्मलोकादौ' (१–४७) इति । (६) ततो मुमुक्षुत्वम् एकान्तेन मोक्षेच्छा वरत्वम् । (७) ततस्तदुपायपर्येषणं मोक्षसाधनान्वेषण यदप्युपदर्शित 'तदैव प्रत्यगात्मान स्वयमेव प्रविविक्षति' (१–४८) इति । (८) तत कर्म तत्साधनसन्न्यास । सर्वाणि अग्निहोत्रादीनि गृहस्थ प्रति चोदितानि कर्माणि । तत्साधनानि च यज्ञोपवीतादीनि । तेषा सन्यासो विधिवत्त्याग । (९) ततो योगाभ्यास प्रत्यगात्मध्यानम् । (१०) ततश्चित्तस्य प्रत्यक्प्रवणता या पूर्वमुपदर्शिता "प्रत्यक्प्रवणता बुद्धे" (१–४९) इत्यत्र । (११) तत तत्त्वमस्यादिवाक्यार्थज्ञानम् । श्रवणादिपूर्वकम् इति शेष । (१२) ततोऽ विद्योच्छेद । (१३) तत स्वात्मन्येवावस्थानम् इति । अविद्योच्छेद अविचारितसिद्धद्वैतप्रतिभानशोभनाशोभनाध्यासरागद्वेषकर्मधर्माधर्मोपचयदेहो पादानदुःखरूपसर्वानर्थपरम्पराया परमहेतुभूतस्य आत्मानवबोधस्य नाश । आत्मन्यवस्थान प्रत्यक्तमिनसर्वदुःखे आगमापायरहितसुखस्वभावे स्वस्वरूपे ऽवस्थानम् इत्यर्थ । यद्यप्यविद्योच्छेदो न ज्ञानादतिरिक्त । तदुच्छेदाद्वा नात्मन्यवस्थानमतिरिक्तम् । यथोक्त स्वयमेवाचार्येणान्यत्र 'न चाविद्या समुच्छित्तिर्ज्ञानोत्पत्त्यतिरेकत' (बृ वा २–४–१९५) इति । 'ऐकात्म्या ज्ञानवि ध्वस्त्यतिरेकेण नेष्यते । ऐकात्म्यविज्ञानफल प्राप्तमेव हि तत्त्वत ॥' (बृ वा २–४–२३५) इति च । तथापि प्राप्तप्राप्ति परिहृतपरिहारश्चैव- क्रमेण भवत इति प्रतिपत्तिक्रम एवात्र प्रदर्शितो न कालकृतक्रम इति सन्तोष्टव्यम् ॥

### योगाभ्यासोऽत्र निदिध्यासनादन्यः —

केचित्तु 'योगाभ्यास' इति श्रवणमनननिदिध्यासनादीनामनुष्ठानम् इति व्याचक्षते । विवेचयन्ति च 'अत्र चित्तस्य प्रत्यक्प्रवणता नाम प्रत्यगात्म न्येवाप्रयत्नेनावस्थानम्, कर्मसंन्यासहेतुत्वेन पूर्वोदिता प्रत्यक्प्रवणत प्रत्यगात्मविविदिषामात्ररूपा' इति । तदेतत्त ग्रन्थकृता हृदयस्थम्

उत्पाद्यमिति । क्रियाफलमुत्पाद्यादिचतुर्विधेष्वन्यतमम् । मुक्तिस्तु नैवम् । स्वात्मन्यवस्थानं हि मुक्तिरित्युपपादितम् । न हि सा घटस्वर्गादिवत् कर्मणा समुत्पादयितव्या । नित्यसिद्धत्वात् । तथा नाऽऽप्या ग्रामादिवत् । साधकस्वरूपाव्यतिरिक्तत्वादेव नित्याप्तत्वात् । न च स्वरूपाव्यतिरिक्तापि ग्रीवानद्धार्धकादिवदाप्या भवेदिति शङ्कनीयम् । कालदेशादिविशेषरहितत्वात्, निर्विकारात्मस्वरूपत्वाच्च । अत एव न विकार्या । नापि संस्कार्या । आत्मनः कर्मसाधनद्रव्यत्वाभावात्, नित्यनिर्विकारत्वात्, नित्यशुद्धत्वे सति दोषापनयनगुणाधानरूपसंस्कारानपेक्षत्वाच्च । तदेवं कर्मकार्यस्य सर्वथा दुःसमास्थरत्वात्, संमानितस्य चाज्ञानोच्छेदेनाऽऽप्यत्वस्य कर्मानपेक्षत्वात्, तस्या मुक्तेः कर्म न साधनं भवितुमर्हतीत्यभिप्रायः ॥ ५३ ॥

## ११. ज्ञानस्य मोक्षं प्रति निरपेक्षसाधनत्वम्

( मूलम् )

एवं तावत् केवलं कर्म साक्षादविद्यापनुत्तये न पर्याप्तमिति प्रदर्शितम् । मुक्तौ च मुमुक्षुज्ञानतद्विषयस्वाभाव्यानुरोधेन सर्वप्रकारस्यापि कर्मणोऽसंभव उक्तो 'हितं संप्रेप्सताम्'(१-२९) इत्यादिना । यादृशश्चाऽऽरादुपकारकत्वेन ज्ञानोत्पत्तौ कर्मणां समुच्चयः संभवति तथा प्रतिपादितम् । अविद्योच्छित्तौ तु ज्ञानस्यैवासाधारणं साधकतमत्वं नान्यस्य प्रधानभूतस्य गुणभूतस्य च – इत्येतदधुनोच्यते । तत्र ज्ञानं गुणभूतं नाशहेतुरित्येतदाह –

संनिपत्य न च ज्ञानं कर्माज्ञानं निरस्यति ।
साध्यसाधनभावत्वादेककालानवस्थितेः

( क्लेशापहारिणी )

**अतीतग्रन्थोक्तार्थसंग्रहः –**

वृत्तवर्तिष्यमाणयोः संबन्धकथनाय वृत्तमनुद्रवति – **एवं तावदिति ।** स्वयमेवाविद्या-केवलं ज्ञाननिरपेक्षं कर्म साक्षादविद्यापनुत्तये न पर्याप्तम् । मुक्तौ च सर्वप्रकार-निवर्तनासमर्थम् इति प्रपञ्चितं विस्तरेण प्रतिपादितम् । मुक्तौ च सर्वप्रकार-स्यापि नित्यनैमित्तिकादिभेदभिन्नस्य कर्मणः साधनत्वासंभव उक्तः मुमुक्षु-ज्ञानतद्विषयस्वाभाव्यानुरोधेन । मुमुक्षुस्वभावस्तावत्, ईश्वरार्पितनित्यनैमित्तिक-कर्मानुष्ठानेन लब्धचित्तशुद्धिवैराग्यत्वात् प्रत्यङ्मात्रप्रवणान्तःकरणत्वम् । ज्ञानस्वभावश्च परमार्थात्मवस्त्वाश्रितत्वं स्वोत्पत्तिमात्रेणैवाविद्यानिरसनसमर्थत्वम्, प्रमाणोत्थत्वादविद्यातद्वासनाभ्यामशक्यबाधनत्वं चेति । ज्ञानविषयस्या-ऽऽत्मनश्च स्वभावो नित्यनिवृत्तदुःखत्वम्, नित्यसुखाव्यतिरिक्तत्वं स्वत सिद्धत्वं चेति । तदेवमेतेषां मुमुक्षु ज्ञान-तद्विषयाणां स्वाभाव्यस्यानुरोधेन तत्स्वभाव-मनुसृत्यैव विचारणेन, अविद्यासमुच्छित्तिं विहाय नास्त्यन्यदपेक्षितव्यं मुक्तये इत्यवगम्यते । अतोऽविद्यासमुत्थस्य कर्मणः सर्वविधस्याप्यसंभव इत्युक्तं 'हितं संप्रेप्सता' (१-२९) इत्यादिना गतेन ग्रन्थेनेति वाक्यार्थः । **यादृशः यादृशश्चेति ।** ज्ञानोत्पत्तौ आरादुपकारकत्वेन चित्तशुद्ध्याद्युत्पादनक्रमेण यादृशः कर्मणां समुच्चयः संभवति । यथेति शेषः । कर्माविकारापेक्षितकर्तृत्वाद्यध्या-रोपणसहिष्णुमिथ्याज्ञानेनैव हि कर्मणां समुच्चयः संभवतीति वर्णितं प्राक् । तदीदृशः समुच्चयो यथा ज्ञानोत्पत्तौ हेतुत्वेन संभवति तथा प्रतिपादितम् इत्यर्थः । सोऽयं वृत्तग्रन्थभागे प्रतिपादितोऽर्थः ॥

**आगामिग्रन्थार्थः –**

अथेदानीं वर्तिष्यमाणेन ग्रन्थभागेन किं विवक्ष्यत इति ? तदाह – **अविद्योच्छित्तौ त्विति ।** तुशब्दः कार्यविषयाद् वैलक्षण्यद्योतनार्थः । यद्यप्युत्पाद्यादिलक्षणे कार्ये जनयितव्ये अन्यदपि कर्म तत्समुच्चितम् उपासना-त्मकं ज्ञानं वा साधकं भवेत्, तथापि अविद्योच्छित्तौ तदकिञ्चित्करमिति भावः । अत्र तु लब्धात्मस्वभावस्याऽऽत्मज्ञानस्यैव असाधारणं साधकत्वम् । लब्धः प्राप्तः आत्मस्वभावः आत्मनो याथात्म्यं क्रियाकारकफलजातानन्तर्भावित्वं

नित्यसिद्धत्वं चेत्येतद्रूपं येन तदिदम् आत्मज्ञानं लब्धात्मस्वभावम् । तस्य यथावस्थितात्मवस्तुज्ञापकस्येत्यर्थः । न ह्यनीदृशेन अविद्यासमुत्थितेन, अविद्याश्रयेणैव च प्राणधारणसमर्थेन कर्मणा तत्समुच्चितेन ज्ञानेन वा अविद्यासमुच्छित्तिः शक्यसाधनेति वस्तुतत्त्वस्यैवाऽऽत्मज्ञानस्य असाधारण मनितरसाधारणं तत्र साधकत्वमिति युक्तम् इति भावः । 'लब्धात्मलाभस्य' इति पाठस्तु नात्र सङ्गतार्थः । न ह्युत्तरग्रन्थे ज्ञानमुत्पन्नमात्रमेव अविद्यासमुच्छेदे न कारकान्तरमपेक्षत इति प्रतिपादयिष्यते, किं तर्हि ज्ञानकर्मसमुच्चयनिरासमात्रं क्रियत इति । अत एवेत्थं लब्धात्मस्वभावस्यैव ज्ञानस्याविद्यासमुच्छित्तौ साधकतमत्वम् । यत्सत्यं कर्म तत्समुच्चितमुपासनात्मकं ज्ञानं वा चित्तशुद्धिज्ञानयोग्यताज्ञानोत्पत्तिद्वारेण परम्परया अविद्यासमुच्छित्तावपि साधकं भवतीति, तथापि तु तत्र साक्षात्साधनत्वं तस्यैव वस्तुतत्त्वात्मज्ञानस्येति भावेन 'साधकतमत्वम्' इति तमब्ग्रहणम् । तमिमम् आत्मज्ञानस्यैवेत्येवकारेण विवक्षितम् अन्ययोगव्यवच्छेदं कण्ठरवेणाऽऽह – नान्यस्य प्रधानभूतस्य गुणभूतस्य वेति । अन्यस्य, कर्मसाहचर्यसहस्य पुष्पवत्तत्स्वरूपस्य ज्ञानस्येत्यर्थः । तच्च साहचर्यं ज्ञानस्य प्रधानभूतस्य स्वाङ्गभूतेन कर्मणा वा स्यात्, गुणभूतस्य स्वयमङ्गभूतस्य अङ्गिना कर्मणा वा स्यात् । उभयथापि तस्य ज्ञानस्य नाविद्यासमुच्छित्तौ साधकतमत्वमस्तीत्यभिप्रायः । उपलक्षणमिदम् । समप्रधानयोर्ज्ञानकर्मणोरपि नाविद्यासमुच्छेदप्रभुत्वम् – इत्यपि द्रष्टव्यम् । एवं च सर्वानर्थनिवृत्ति अपरतन्त्रनिरतिशयसुखावाप्तिश्चेत्ये तदुभयरूपाया मुक्तेरविद्यातत्कार्यनिवृत्तिमात्रसाध्यत्वात्, अविद्यानिवृत्तेश्च कर्मेण समुच्चितज्ञानयोरन्यतरेणाप्यशक्यसाधनत्वात्, यथावस्थितात्मस्वभावानुगुणमात्मज्ञानमेव मुमुक्षुभिरेष्टव्यमित्येतद्धुनोच्यते इत्यभिप्रायः ॥

उत्तरश्लोकसम्बन्धः –

साम्प्रतमुत्तरश्लोकनिषयमाह – तत्रेत्यादिना । प्रतिपिपादयिषितेषु मध्ये ज्ञानं गुणभूतं कर्माङ्गभूतं सत् कर्मसमुच्चितम् अविद्योच्छित्तिहेतुरित्येतत् तावदाद्येऽर्थः ॥

अत्रेत्थं पूर्ववादिशङ्का द्रष्टव्या । नन्वस्तु वस्तुतन्त्रस्याऽऽत्मज्ञानस्यैव असाधारणं साधकत्वमविद्याविनाशे इति, अस्तु च ज्ञानान्तरस्य प्रधानस्य गुणभूतस्य वा कर्मसहकृतस्य न तत्र तादृशं साधकत्वं समस्तीति ; तथापि तस्यैवाऽऽत्मज्ञानस्य भवदभिमतस्य कर्मसहकारित्वं भवेदिति युज्यते । अन्यथा हि चोदनाशास्त्रम् अप्रमाणमिति निष्कारणं कल्पितं स्यादिति । अतो ज्ञानमज्ञाननिरस्करणे कर्तव्ये कर्मणो गुणभूतमेव व्याप्रियत इति कल्प्यताम् । अथवा ज्ञानकर्मणोः समप्रधानतैव स्यात् तत्र । अथवा पुनरस्तु प्रधानमेव तदिदं ज्ञानं गुणभूतमेव कर्म स्वफलसिद्धावपेक्षत इति । न च कर्मणः सहकारोऽत्र केन द्वारेणेति नैव संभाव्यत इति शङ्क्यम् । चोदनान्यथानुपपत्त्यैव केनचिददृष्टेन द्वारेण शास्त्रचोदितं कर्म शास्त्रोपदिष्टज्ञानसहकारि भवतीति हि नासंभावितकल्पनमिदमिति ॥

अत्रोत्तरम् । अविमृश्यैव कर्मज्ञानयोः स्वाभाव्यमिमं ज्ञानकर्मसमुच्चयम् उत्प्रेक्षते भवान् । यतः सुविमृष्टे कर्मज्ञानयोः स्वाभाव्ये सर्वथापि तयोः साहचर्यं न घटते । कथम् ? तत्र प्रकारत्रये भवदुद्भाविते ज्ञानं कर्मगुणभूतं सत्स्वफलसाधकं भवितुमर्हति न वा इत्येतदेव तावद्विचार्यताम् इति समनन्तरश्लोकावतरणिका ॥

ज्ञानं न कर्माङ्गम् –

संनिपत्येति । न च इति चोऽवधारणे । ज्ञानं संनिपत्य कर्म हि प्राप्य नैव अज्ञानं निरस्यति । केवलमेव निरस्यतीत्यर्थः । तत्र हेतुः साध्यसाधनभावत्वादिति । कर्म हि परम्परया ज्ञानसाधनमित्युक्तम् ; ज्ञानस्यान्तरङ्गभूता बुद्धेः प्रत्यक्प्रवणतामुत्पाद्य स्वयमस्तं यातीति च (१-४९) । अत एवं साध्यसाधनभावत्वात् तयोरेककालानवस्थितेः । स्वसाध्येन ज्ञानेन सह परम्परया साधनभूतस्य कर्मणः समकालमवस्थातुमशक्तत्वात् इत्यर्थः । न हि साध्यं ज्ञानं प्रति साधनभूतस्य कर्मणोऽङ्गित्वमवकल्पते । साधनानुष्ठानकाले स्वरूपस्यैवाभावात् इत्यभिप्रायः । न हि समकालानवस्थितयोः समुच्चयः स्वप्नेऽपि संभावयितुं शक्यत इति भावः ॥ ५४ ॥

( मूलम् )

समप्रधानयोरप्यसमत्र एव –

> बाध्यबाधकभावाच्च पञ्चास्योरणयोरिव ।
> एकदेशानवस्थानान्न समुच्चयता तयोः ॥ ५५ ॥

( क्लेशापहारिणी )

ज्ञानकर्मणोः समप्राधान्येनापि न समुच्चयः –

तदेव ज्ञानस्य गुणभाव व्युदस्य कर्मणा समप्राधान्यमपि निराचष्टे – समप्रधानयोरपीति । उक्तहेतोरेव समकालानवस्थिते समप्रधानतयापि समुच्चयासम्भवस्य शक्यसाधनत्वेऽपि प्रकारान्तरेणापि तत्साधयितुमुत्तरश्लोक इत्यभिप्राय ॥

बाध्यबाधकभावाच्चेति । पञ्चास्य सिंह, उरणो मेष । तयोरिव बाध्यबाधकभावाच्च तयो सहत्यैककार्योत्पादकत्वानुपपत्ति । एव तम प्रकाश वदेकदेशानवस्थानात्, एकस्मिन्नेव पुरुषे युगपत्स्थातुमशक्यत्वाच्च, तयो ज्ञानकर्मणो न समुच्चयता न समप्रधानतया समुच्चयो घटत इत्यर्थ । अय च हेतु सर्वविधसमुच्चयासंभवेऽप्यनुसधेय ॥ ५५ ॥

( मूलम् )

कुतो बाध्यबाधकभावः ? यस्मात् –

> अयथावस्त्वविद्या स्याद् विद्या तस्या विरोधिनी ।
> समुच्चयस्तयोरेवं रविशार्वरयोरिव ॥ ५६ ॥

( क्लेशापहारिणी )

ज्ञानकर्मणोर्बाध्यबाधकभावोपपत्तिः –

बाध्यबाधकभाव एव आक्षिप्य समाधीयत उत्तरश्लोके । तदाह – कुत इति ? कुतो बाध्यबाधकभाव कर्मज्ञानयो ? न हि ज्ञान सिंह इव

मेषमाक्रम्य कर्म व्यापादयति । किं च दृष्टान्ते मेषस्य यावद् वध्यत्वं तावदेकदेशस्थितिरपि सिंहेनावकल्पत एवेति यावत्तावदपि ज्ञानकर्मणो-र्बाध्यबाधकभावे सहावस्थितिरपि त्वदनिष्टा प्रसज्येत् इति शङ्कितुर्भावः । अतः स्वाशयाविष्करणेन सर्वशङ्कानिरासार्थमाह बाध्यबाधकभावोपपत्तिं समनन्तरश्लोके । तदाह – यस्मादिति ॥

अयथावस्त्विति । वस्त्वनतिक्रम्य यथावस्तु । यथावस्तु वर्तमानं न भवति यथा तथा इति अयथावस्तु । वस्तुस्वाभाव्यमननुरुध्यानैवाविद्या अन्यथा सन्तमात्मानमन्यथा प्रतिपद्यत इत्यर्थः । विद्या तु यथास्थितात्म-वस्त्वनुसारिणीति तस्या अविद्याया विरोधिनी । विरोधित्वमेव कीदृशमिति दृष्टान्तादानेन विशदयति – रविशार्वरयोरिवेति । प्रकाशरूपस्य रवेः, चक्षुर्वृत्तिनिरोधकस्य शार्वरस्य तमसश्चेव बाध्यबाधकभाववतोः परस्परविरहेणैव स्वात्मस्थितिं लभमानयोः कथं वा समुच्चयो घटेतेति भावः ॥ ५६ ॥

( मूलम् )

तस्मादकारकब्रह्मात्मनि परिसमाप्तावबोधस्य अशेषकर्म-चोदनानाम् अचोद्यस्वाभाव्यात् कुण्ठता । कथम् ? तदभि-धीयते –

बृहस्पतिसवे यद्वत् क्षत्रियो न प्रवर्तते ।
ब्राह्मणत्वाद्यहंमानी विप्रो वा क्षत्रकर्मणि ॥ ५७ ॥

( क्लेशापहारिणी )

ज्ञानिनो विधिनिषेधागोचरत्वम् –

तस्मात् संजाते ज्ञाने सुतरां न कर्मसु प्रवृत्तिः संभवतीत्याह – तस्मादिति । उक्तरीत्या ज्ञानकर्मणोः सहभावानुपपत्तेरित्यर्थः 'अकारक-ब्रह्मात्मनि' इति प्रदर्शनार्थम् । क्रियाकारकफलसंसर्गरहितेऽद्वितीये ब्रह्मात्म-नीत्यर्थः । परिसमाप्तः विश्रान्तः अवबोधो ज्ञानं यस्य तादृशज्ञानिन इत्यर्थः ।

तस्य विषये अशेषकर्मचोदनानां विधिनिषेधरूपाणां कुण्ठता । घनतरशिलायां प्रयुक्तस्य खड्गस्येव निर्व्यापारतेत्यर्थ । कुत ? अचोद्यस्वाभाव्यात् तस्य । अनियोज्यस्यभावत्वादित्यर्थ । कथं कुण्ठतेति पृच्छायां कर्माधिकारनिवृत्त्यैवेति प्रदर्शयितुमुत्तरश्लोक इत्याह – **कथम् ? तदभिधीयत इति ॥**

**बृहस्पतिसव इति ।** बृहस्पतिसवे ब्राह्मणस्यैवाधिकार । तत्र क्षत्रियो न प्रवर्तते । तत्कुत ? तस्य ब्राह्मणत्वाद्यहमानाभावात् । तथा ब्राह्मणत्वादिषु अधिकारकारणेषु अहमानी विप्र क्षत्रकर्मणि राजसूयादौ न प्रवर्तते । क्षत्रियत्वाद्यहमानित्वाभावादेवेति भाव । यद्वद् ब्राह्मण क्षत्रिय कर्मणि न प्रवर्तते, क्षत्रियो वा ब्राह्मणकर्मणि तत्र तत्राधिकृतत्वबुद्ध्यभावात् तस्य तस्य । एवमत्रापीति भाव ॥ ५७ ॥

( मूलम् )

यथायं दृष्टान्त एवं दार्ष्टान्तिकोऽपीत्येतदाह –

**विदेहो वीतसन्देहो नेतिनेत्यवबोधितः ।**
**देहाद्यनात्मदृक् तद्वत्क्रिया वीक्षतेऽपि न ॥ ५८ ॥**

( क्लेशापहारिणी )

समनन्तरश्लोके दार्ष्टान्तिकं समर्थ्यत इत्याह – **यथायमिति ॥**
**विदेह इति ।** विदेह मिथ्याप्रत्ययनिमित्तदेहरहित । वीतसंदेह विगत सर्वसंशय । 'छिद्यन्ते सर्वसंशया ' (मु २–२–८) इति श्रुते । 'नेति नेति ' (बृ २–३–६) इति श्रुत्या सर्वानात्मविकल्पापह्नवेन अज्ञान निद्राया प्रबोधित । अद्वयात्माहमिति निश्चितज्ञानवान् इति यावत् । देहाद्यनात्मदृक् देहादावसत्कल्पे आत्माभिमानदृष्ट्यो यस्मात्, अहमशरीर एवेति निश्चयवांश्च, तस्मात् देहाद्यभिमान्यधिकारिकीं क्रियां न वीक्षतेऽपि । न हि 'अशरीरोऽहमपेतब्रह्मक्षत्रादिभेदोऽद्वितीयात्मा' इति बुद्धि कर्माधिकार कारणं भवेदिति भाव ॥ ५८ ॥

( मूलम् )

तस्यार्थस्याविष्करणार्थमुदाहरणम् –

मृत्स्नेभके यथेभत्वं शिशुरध्यस्य वल्गति ।
अध्यस्याऽऽत्मनि देहादीन्मूढस्तद्वद्विचेष्टते ॥ ५९ ॥

( क्लेशापहारिणी )

अज्ञस्यैव कर्मण्यधिकार इत्यत्र दृष्टान्तः –

विदेहत्वान्न कर्म वीक्षते ज्ञानीत्युक्तम् । तद्विपर्ययेणाज्ञानी देहाभिमानवत्त्वादेव कर्मणि प्रवर्तत इति व्यतिरेकमुखेनापीममेवार्थं विशदयितुमनन्तरः श्लोक इत्याह – तस्यार्थस्येति ॥

मृत्स्नेभक इति । इभत्वशून्येऽपि मृत्स्नेभके मृन्निर्मितकलभाकारविशेषे इभत्वं सत्यगजत्वमध्यस्य भ्रान्त्या अध्यारोप्य शिशुर्बालो वल्गति गच्छति सत्यगज इवाचरति यथा तद्वदेव मूढः आत्मज्ञानशून्यः आत्मनि देहादिरहितेऽपि देहादीनध्यस्य 'अहं देही' इति मिथ्याभिनिवेशेन निमित्तेन कामेन विचेष्टते कर्म करोतीत्यर्थः ॥ ५९ ॥

( मूलम् )

न च वयं ज्ञानकर्मणोः सर्वत्रैव समुच्चयं प्रत्याचक्ष्महे । यत्र प्रयोज्यप्रयोजकभावो ज्ञानकर्मणोः, तत्र नास्मत्पित्रापि शक्यते निवारयितुम् । तत्र विभागप्रदर्शनाय उदाहरणं प्रदर्श्यते –

स्थाणुं चोरधियाऽऽलाय भीतो यद्वत्पलायते ।
बुद्ध्यादिभिस्तथाऽऽत्मानं भ्रान्तोऽध्यारोप्य चेष्टते ॥ ६० ॥

एवं यत्र यत्र ज्ञानकर्मणोः प्रयोज्यप्रयोजकभावः, तत्र सर्वत्रायं न्यायः । यत्र तु न समकालं नापि क्रमेणोपपद्यते समुच्चयः, स विषय उच्यते –

स्थाणोः सतत्त्वविज्ञानं यथा नाङ्गं पलायने ।
आत्मनस्तत्त्वविज्ञानं तद्वन्नाङ्गं क्रियाविधौ ॥ ६१ ॥

( क्लेशापहारिणी )

भ्रान्तिज्ञानमेव प्रवृत्त्यङ्गम्, न तत्त्वज्ञानम् –

अज्ञानविरोधितत्त्वविज्ञानव्यतिरिक्तमुपासनादिरूपं ज्ञानमप्यस्ति यत्कर्मणा समुच्चयं सहत एव । आत्मतत्त्वविज्ञानं तु नैव समुच्चयसहमित्येतावदत्रोच्यत इति प्रदर्शयितुमुत्तरश्लोक इत्याह – न च वयमिति । कर्म प्रयोज्यं ज्ञानं च प्रयोजकम्–इति यत्र प्रयोज्यप्रयोजकभावः, हेतुहेतुमद्भावः । तत्र समुच्चयो न केनापि शक्यते निवारयितुम् । तत्र विभागप्रदर्शनाय 'अत्र प्रयोज्यप्रयोजकभावो विद्यते, अत्र तु न' इति विभज्य प्रदर्शयितुम् उदाहरणमानीयते समनन्तरश्लोके इत्यर्थः ॥

स्थाणुमिति । यद्वत् स्थाणुं चोरधिया भ्रान्त्या आलाय गृहीत्वा तत कल्पितचोराद्भीतः पलायते, तथा बुद्ध्यादि धीभिरात्मानमालाय चेष्टते । यथा दृष्टान्ते स्थाणौ चोरत्वमध्यारोप्य पलायते, तथा भ्रान्त एव दार्ष्टान्तिके ऽप्यात्मनि बुद्ध्यादिरूपत्वमध्यारोप्य चेष्टते कर्म करोति रागद्वेषादिप्रेरितः सन्नित्यर्थः । भ्रान्तिज्ञानमेव सर्वत्र कर्मणा समुच्चीयते । न तु सम्यग्ज्ञानम् इति वाक्यार्थः । यद्यपि दृष्टान्ते स्थाणौ ज्ञेये ज्ञेयस्यैव चोरत्वस्याध्यारोपः क्रियते ज्ञात्रा, आत्मनि तु ज्ञातर्येव ज्ञेयानां बुद्ध्यादीनामध्यारोप इति वैषम्यमस्ति, तथापि देहस्य ज्ञेयभूतस्यैव धर्मा जरामरणादयो ज्ञातर्यपि आत्मन्यध्यारोप्यन्त इति सर्वैरात्मवादिभिरभ्युपगमात् स्थाणुचोरदृष्टान्तो न विषमः । यद्यपि च न कोऽपि जातु 'अहं बुद्धिः', 'अहमिन्द्रियम्', 'अहं देहः'– इति व्यवहरति भ्रान्त्यापि, यथा दृष्टान्ते 'अयं चोरः' इति – तथापि 'अहमिच्छामि', 'अहं सशये', 'अहं निश्चिनोमि', 'अहं पश्यामि', 'अहं शृणोमि', 'अहं गच्छामि', 'अहं तिष्ठामि' – इति सर्वत्र अनात्मधर्मानात्मना संसृज्यैव व्यवहारदर्शनात्, अत्रापि भ्रान्त्याऽनात्मधर्मानध्यारोप्यैव चेष्टते इति युक्तमध्यवसातुमिति न विषम उपन्यास इति ध्येयम् ॥ ६० ॥

तदेवं भ्रान्तिज्ञानस्यैव सर्वत्र समुच्चयार्थत्वमिति सोदाहरणमुपपाद्य सम्यग्ज्ञानस्य तु न कुत्रापि कर्मणा समुच्चयोऽस्तीति प्रदर्शयितुं श्लोकान्तरमित्याह – एवमिति ॥

तत्रोदाहरणं स्थाणोरिति । स्थाणोः सतत्त्वं स्थाणुतत्त्वमेव । तस्य विज्ञाने 'स्थाणुरेवायं न पुरुषः' इति निश्चयरूपम् । तद्यथा पलायने नाङ्गं भवति, प्रत्युत भीतिहेतुभूतमिथ्याज्ञानविरोधित्वात् पलायननिरोधकमेव भवति । तद्वत् आत्मनोऽपि तत्त्वविज्ञानं 'अहमस्म्यद्वितीयः कूटस्थ आत्मा' इति निश्चयरूपं क्रियाविषौ कर्मानुष्ठाने नाङ्गं भवति प्रत्युत सर्वकर्मनिरोधकमेव भवतीत्यर्थः । यद्यपि स्थाण्वादिविज्ञानान्यपि प्रवृत्त्यङ्गान्येव, प्रमितेऽर्थे हानोपादानादेस्तन्मूलत्वात्; तथापि यया भ्रान्त्या यत्र प्रवृत्तिरासीत्, तस्या भ्रान्तेः सम्यग्ज्ञानेन नाशे सति न पुनस्तत्प्रयोज्या प्रवृत्तिर्भवतीत्येतावदत्र विवक्षितमित्यदोषः ॥ ६१ ॥

( मूलम् )

यस्माद् गुणत्वैतत्सामान्यम् –

यद्धि यस्यानुरोधेन स्वभावमनुवर्तते ।
तत्तस्य गुणभूतं स्यान्न प्रधानाद्गुणो यतः ॥ ६२ ॥

यस्मात् –

कर्मप्रकरणाकाङ्क्षि ज्ञानं कर्मगुणो भवेत् ।
यद्धि प्रकरणे यस्य तत्तदङ्गं प्रचक्षते ॥ ६३ ॥

स्वरूपलाभमात्रेण यत्त्वविद्यां निहन्ति नः ।
न तदङ्गं प्रधानं वा ज्ञानं स्यात् कर्मणः क्वचित् ॥ ६४ ॥

समुच्चयपक्षवादिनापि अवश्यमेतदभ्युपगन्तव्यम् । यस्मात् –

अज्ञानमनिराकुर्वज्ज्ञानमेव न सिध्यति ।
विपक्षकारकग्रामं ज्ञानं कर्म न ढौकते ॥ ६५ ॥

( क्लेशापहारिणी )

आत्मज्ञानस्य कर्माङ्गत्वे हेत्वन्तरोपन्यासः –

तत्त्वज्ञाने क्रियाया नाङ्गं भवतीत्यत्र युक्त्यन्तरं समर्थयत्युत्तरः श्लोकः। तदाह – यस्मादिति ॥

यद्धीति । यद् यस्याविरोधि, तदविरोधेन तत्स्वभावमप्यनुवर्तते, तदेव तस्य गुणभूतं स्यात्, तदङ्गं भवेत् । गुणस्यैव स्वभावो यत्प्रधानोपकारित्वम् इति यावत् । कस्मात् ? यत यत्कारणं गुणो न प्रधानात् प्रधानमत्येति । मुख्यबाधकमिति यावत् । न हि प्रधानविघातकृद् गुणो नाम । आत्मज्ञानं तु क्रियाकारकफलविभागज्ञानविघातकमेवेति न क्रियाया अङ्गं भवितुमर्हतीत्यभिप्राय. ॥ ६२ ॥

उक्तार्थमेव विशदयत्यागामिश्लोकद्वयमित्याह – यस्मादिति । कर्मप्रकरणाकाङ्क्षीति । यत् कर्मप्रकरणम् आकाङ्क्षते तत् ज्ञानं कर्मगुणो भवेत् । यद्धि कर्मप्रकरणे विधीयते यथा आज्यावेक्षणादि, यच्च कर्मप्रयुक्तमेव भवति, तदेव कर्मगुणो भवेत्, नान्यत् । कुत. ? यस्य प्रकरणे यत् पठ्यते तदेव तदङ्गं भवतीति प्रचक्षते कथयन्ति कर्ममीमांसका । इदं त्वात्मज्ञानं न कर्मप्रकरणे पठितम् । न वा कर्माधिकृतस्यैवाधिकारोऽत्र । न चास्य कर्मणि विनियोजकं प्रमाणमुपलभामहे । प्रमाणाभावेऽपि प्रकरणान्तरस्थज्ञानस्य कर्माङ्गत्वोपगमे तु सर्वस्यापि वेदविहितस्य सर्वकर्माङ्गता प्रसज्येत । अतोऽपि ज्ञानं न कर्माङ्गमित्यभिप्राय ॥

एतेन इदमपि प्रत्युक्तं यदाहु कर्ममीमांसका – आत्मज्ञानं संयोगपृथक्त्वेन क्रत्वर्थपुरुषार्थत्वेन ज्ञायते । तेन विना परलोकफलेषु कर्मसु प्रवृत्तिनिवृत्त्यसम्भवात् । न च ज्ञानविधानेन कर्मसंबन्धकारणम् । प्रत्याश्रमवर्णनियतानि नित्यनैमित्तिककर्माण्यपि पूर्वकृतदुरितक्षयार्थम् अकरणनिमित्तानागतप्रत्यवायपरिहारार्थं च कर्तव्यानि (त.वा. १–३–२७) इति च । न हि वयं तादृशं ज्ञानं प्रवृत्त्यङ्गं कर्माविरुद्धं समुच्चयानर्हमिति प्रत्याचक्ष्महे । यत्तु आत्मवस्तुबोधनमात्रपर्यवसायि स्वप्रकरणस्थं कर्माधिकारनिवर्तकं

कर्महेत्वविद्यानिहन्तृत्वात् तादृशे ज्ञाने न संभवति कथमपि कर्मसाङ्गत्यम् इत्येतावद् प्रतिपादयामः । तादृग्ज्ञानवतस्तु नित्यकर्म प्रत्यवायपरिहारार्थं स्यादिति शङ्का हि स्वप्नेऽपि न संभाव्येति ॥ ६३ ॥

ननु ज्ञानं कर्मप्रकरणमनाकाङ्क्षमाणमपि कर्माङ्गतां किं न भजते ? न हि ज्ञानमभ्यासादिकं विना स्वकार्यमज्ञाननिवृत्तिं सम्पादयितुमलम् । तेन यथा कर्मज्ञानं स्वोत्पत्त्युत्तरकालं कर्मानुष्ठानमपेक्षते, एवमिदमप्यात्मज्ञानम् अभ्यासं नित्यकर्मानुष्ठानं चापेक्षत इत्येवंनीत्या कर्माङ्गं भवेदित्याशङ्क्य 'आकाङ्क्षते न चाप्यन्यत्' (१–३६) इति पूर्वोक्तं स्मारयन् परिहरति – 'स्वरूपलाभमात्रेण' इति । अविद्याहानिर्नाम नाऽऽत्मज्ञानोत्पत्तिव्यतिरिक्ता । अतोऽज्ञानकृतकर्मसाहचर्यमेव नास्ति ज्ञानस्य, कुतस्तत्राङ्गभावेन प्रधानभावेन वा समुच्चयप्रतीक्षा – इत्यभिप्रायः ॥ ६४ ॥

ननु ज्ञानस्योत्पत्तिमात्रेणाज्ञानविनाशकत्वमस्माकं न समतम् । तत्राऽऽह – समुच्चयपक्षवादिनामपीति ॥ कुत एतदित्यत्रोत्तरत्वेन श्लोकमवतारयति – यस्मादिति ॥

अज्ञानमिति । अज्ञानबाधकत्वमेव ज्ञानत्वमिति सर्वसप्रतिपन्नमेतद्, अन्यथा कर्मादिज्ञानोदयेऽपि तदज्ञानानुवृत्तेस्तदनुष्ठानाभावप्रसङ्गात् । तस्मात् अद्वितीयात्मज्ञानमपि विपक्षकारकग्रामम् अविद्योत्थकारकसमूहरूपं द्वैतं विनाशयदेवोत्पद्यत इति बलादापतति । तादृशं च ज्ञानं कारकापेक्षं कर्म न ढौकते न स्पृशति । तथा च यस्य यत्साहचर्यमेव नास्ति कुतस्तस्य तेन समुचित्यानुष्ठानसंकथेति युक्तमेवोक्तमिति भाव ॥ ६५ ॥

(मूलम्)

इदं चापरं कारणं ज्ञानकर्मणोः समुच्चयनिबर्हि –

हेतुस्वरूपकार्याणि प्रकाशतमसोरिव ।
विरोधीनि ततो नास्ति साङ्गत्यं ज्ञानकर्मणोः ॥ ६६ ॥

( क्लेशापहारिणी )

ज्ञानकर्मणोस्त्रेधा विरोधः –

समुच्चयासंभवे हेत्वन्तरमुपन्यसितुं श्लोकान्तरमित्याह – इदं चेति । हेतुस्वरूपकार्याणीति । कर्मणो हेतुरज्ञानं रागद्वेषौ च, ज्ञानस्य तु वस्तुयाथात्म्यानुसारि प्रमाणम् ; कर्मणः स्वरूपं वस्तुतत्त्वानवबोधिका प्रवृत्तिनिवृत्तिरूपा, ज्ञानस्य तु वस्तुप्रकाशनमात्रम् , कर्मणः कार्यमुत्पाद्यविकार्यादि चतुर्विधम्, ज्ञानस्य तूत्पत्त्यादिरहितकूटस्थस्वरूपेऽवस्थापनम् । तदेवं ज्ञानकर्मणोर्हेतुस्वरूपकार्याणि परस्परेण विरुध्यन्ते । ततस्तयोः साङ्गत्यमेव नास्ति विरुद्धस्वभावयोस्तमःप्रकाशयोरिवेति दूरे सर्वथा तयोः समुच्चयस्येत्यर्थः ॥ ६६ ॥

## १२. एकदेशिसंमतसमुच्चयनिरासः

( सूत्रम् )

एवमुपसंहृते केचित् स्वसंप्रदायबलावष्टम्भादाहुः । यदेतद् वेदान्तवाक्यात् 'अहं ब्रह्म' इति विज्ञानं समुत्पद्यते तन्नैव स्वोत्पत्तिमात्रेण अज्ञानं निरस्यति । किं तर्हि, अहन्यहनि द्राघीयसा कालेनोपासीनस्य सतो भावनोपचयात्, निःशेषमज्ञानम् अपगच्छति । 'देवो भूत्वा देवानप्येति '(बृ.४-१-२) इति श्रुतेः–इति । अपरे तु ब्रुवते । वेदान्तवाक्यजनितम् 'अहं ब्रह्म' इति विज्ञानम् संसर्गात्मकत्वात्, आत्मवस्तुयाथात्म्यावगाहि न भवति । किं तर्हि, एतदेव गङ्गास्रोतोवत् सततमभ्यस्यतोऽन्यदेव वस्तुयाथात्म्यविषयं विज्ञानान्तरम् उत्पद्यते । तदेवाशेषाज्ञानतिमिरोत्सारि, 'विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः '

(बृ ४-४-२०) इति श्रुतेः – इति । अस्य पक्षद्वयस्य निवृत्तये इदमभिधीयते –

सकृत्प्रवृत्त्या मृद्गाति क्रियाकारकरूपभृत् ।
अज्ञानमागमज्ञानं साङ्गत्यं नास्त्यतोऽन्ययोः　　॥ ६७ ॥

( क्लेशापहारिणी )

एकदेशिमतद्वयम् –

आत्मज्ञानस्य कर्मणा समुच्चय सर्वथा नास्तीत्युक्तमसहमाना अद्वैतिवेदान्तिन एव केचिदत्र प्रत्यवतिष्ठन्त इत्याह – एवमुपसहृत इति । एव ज्ञानोत्पत्तिमात्रेणाविद्यासमुच्छित्तिरिति उपसहारे कृते तदमृष्यन्त केचिद् वेदान्त्येकदेशिन स्वसप्रदायारम्भात्, स्वसंप्रदाय स्वस्य गुरुपरम्परया प्राप्त उपदेश, तद्बल श्रयादेव केवलात्, वक्ष्यमाणरीत्या आहुरित्यर्थ । एतेन तेषा स्वसप्रदाय एव बलम्, न तु श्रुतियुक्त्यनुभवबलमसीत्युक्त भवति ॥

भावनासञ्चयवादिना मतम् –

तत्र भावनोपचयवादिन प्राहु । यदेतद् वेदान्तवाक्यात् 'अह ब्रह्मास्मि' इति विज्ञान समुत्पद्यते, तन्नैव स्वोत्पत्तिमात्रेणाज्ञान निरस्यति । सामान्यात्मकत्वात्, परोक्षात्मकत्वाच्च वाक्यजन्यज्ञानस्य – इति शेष । कीदृश तर्हि ज्ञानमज्ञाननिरासीति पृच्छति – कि तर्हीति । उत्तरमाह – अहन्यहनीति । सत्कारपूर्वक द्राघीयसा कालेन दीर्घतरेण कालेन आमरण कालम् उपासीनस्य निरन्तर ध्यायमानस्य सत साधकस्य भावनोपचयाद् ध्यानसञ्चयात् नि शेषमज्ञानमपगच्छति । यथाहुस्तन्त्रान्तरीया – 'स तु दीर्घकालादरनैरन्तर्यसत्कारासेवितो दृढभूमि ' (यो सू १-१४) इति । ज्ञानस्य भावनासञ्चयात् साक्षात्काररूपत्व भवति, तेनैव चाज्ञान विलाप्य साधको ब्रह्मसायुज्य गच्छति – इति तेषामभिप्राय । किमर्थादेतदवसीयते इति चेदत्राहु –'देवो भूत्वा देवानप्येति' (बृ ४-१-२) इति श्रुतेरिति । देवो भूत्वा भावनाबलादुपास्यदेव साक्षात्कृत्य 'अहमेव स' इति, देवानप्येति देहपातानन्तरमुपास्यदेवताभाव प्राप्नोति–इति श्रुतेरथ पूर्वपक्षमभिमत इति ॥

अवाक्यार्थज्ञानवादिनां मतम् –

अपरे तु वादिन स्वसंप्रदायबलात् वाक्यजन्यज्ञानेन उत्पन्नमात्रेणा भ्यस्तेन वा, नैवाज्ञान विनश्यतीति मन्यमाना एव ब्रुवते – वेदान्तवाक्य जनितम् अह ब्रह्मेति विज्ञानम् आत्मवस्तुयाथात्म्यावगाह्येव न भवति। आत्मतत्त्व नैवावबोधयतीत्यर्थ । कुत ? संसर्गात्मकत्वात् वाक्यजन्यज्ञानस्य। 'नीलमुत्पलम्' इत्यादिवाक्यजन्यज्ञानवत् इति शेष । नीलपदार्थोत्पल पदार्थयो ससर्गमेव हि 'नीलमुत्पलम्' इति वाक्यमभिधत्ते। एवमेव वेदान्त वाक्यमपि ससृष्टमेवार्थमभिधातु शक्नोति। वाक्यत्वात्। आत्मा तु सर्वथा विभागरहित इति न तस्मिन् विभक्तपदार्थसंसर्गग्राहिवाक्यजन्यज्ञानविषयता संभवतीति भाव । कीदृश तर्हि ज्ञानम् आत्मयाथात्म्यावगाहीति प्रश्न मुत्थाप्योत्तरमाहु – किं तर्हीत्यादिना। एतदेव वाक्यार्थज्ञान गङ्गाह्रोतोवत् सततमभ्यस्यत, साधकस्य वाक्यजन्यज्ञानादन्यदेव विज्ञानमुत्पद्यते अवाक्या र्थात्मकम् असंसर्गबोधकम् इत्यर्थ । एतच्च 'संसर्ग एव वाक्यार्थ' इति मीमांसकमतेनोक्तमिति ध्येयम् । तदेव संसर्गविधुरतत्त्वबोधक यद् विज्ञा नान्तरमुत्पद्यते, तदेवाशेषाज्ञानतिमिरोत्सारि । पूर्वो पक्ष तु वाक्यजन्यज्ञान यद्यपि तिमिरमज्ञानमुत्सादयति, तथापि निरवशेष नोत्सादयति ससर्गावबोधक त्वादिति भाव । प्रथमपक्षावलम्बिना भावनोपचयवादिना मते वाक्यार्थज्ञान नाज्ञाननिरासि। किं तूपासनानुष्ठानप्रयोजकमेव तत्। अत्र पुन संसर्ग-बोधकत्वान्निरवशेषतया नाज्ञाननिरासीति विशेष । कस्मात् पुन प्रमाणादे-तदवगम्यते ? तत्राहु – 'विज्ञाय प्रज्ञा कुर्वीत ब्राह्मण' (बृ ४ ४ २१) इति श्रुतेरिति। तमेव धीरो विवेकी विज्ञाय वाक्येन तस्य सासृष्टरूपत्वमादौ ज्ञात्वा प्रज्ञा कुर्वीत ज्ञानाभ्यासबलेनासंसृष्टत्वावगाहिसाक्षात्काररूपा प्रज्ञा मुत्पादयेत् इति पूर्वपक्ष्यभिप्रेत श्रुत्यर्थ । य पुन शास्त्रप्रमाणक ब्रह्मेति प्रवाद, स तु शास्त्रस्य प्रज्ञाजनकज्ञानजनकत्वेनोपचारात्। अथवा प्रज्ञैव शास्त्रकार्यम्, संसर्गज्ञान तु न वस्तुत शास्त्रज्ञानमित्यभिप्रायेण ब्रह्मण शास्त्रप्रमाणकत्वमुच्यत इत्यदोष – इति पूर्वपक्षिणामभिमान ॥

समुच्चयवादिवेदान्तिखण्डनायोत्तरः श्लोकः —

तदेव वाक्यज्ञानानन्तरमुपासनानुष्ठानात् साक्षात्कारद्वारेण विदेह मोक्षप्राप्तिरिति पक्षम्, वाक्यज्ञानाभ्यासादेव विशिष्टां प्रज्ञां संपाद्य ततोऽज्ञान निरस्यत साधकस्य इहैव मोक्ष इति पक्ष चोपन्यस्य उक्तपक्षद्वयनिरासायोत्तर श्लोकप्रवृत्तिरिति मत्वाऽऽह — अस्य पक्षद्वयस्येति । उपलक्षणमेतत् । सर्वेषामपि वाक्यज्ञानानन्तरमनुष्ठेयशेषसद्भाववादिना परिहाराय चेति द्रष्टव्यम् । प्रसङ्ख्यानवादस्यापि निरसिष्यमाणत्वादुत्तरत्र । अन्येषामप्येतत्सजातीयवादिनां बृहद्वार्तिके निरस्तत्वाच्च । तस्मात् अस्य पक्षद्वयस्य वाक्यज्ञानात्परमपि कर्तृत्वानुवृत्त्यभ्युपगमदूषितस्य निवृत्तये परिहाराय इदम् उत्तरश्लोकस्य खण्डनम् अभिधीयते इत्यर्थः ॥

'सकृत्प्रवृत्त्या' इति । आगमज्ञानं वेदान्तागमजनितं ज्ञानं सकृत्प्रवृत्त्या एकवारं विषयप्रकाशनरूपव्यापारेणैवोत्पन्नमात्रम् अभ्यासादिक मनपेक्ष्यैवेत्यर्थः । क्रियाकारकरूपभृत् क्रियायाः कारकाणां च रूपं बिभर्तीति क्रियाकारकरूपभृत् । क्रियाकारकवेषं धारयत् — अज्ञानमेव हि क्रियादिरूपेण प्रथते-तदज्ञानं स्वोत्पत्तिमात्रेण ज्ञानं गृह्णाति नाशयति । अतोऽनयो, ज्ञानकर्मणो साहृत्य साहचर्यं नास्ति । आम्नायते हि कर्माधिकारहेतो क्रियाकारकफललक्षणस्य सर्वस्यापि भेदस्याविद्याकृतस्य विद्यया स्वरूपोप मर्दनम् । 'यत्र वा अस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्केन कं जिघ्रेत्' (बृ २-४-१४) इत्यादि । अतो ज्ञानाभ्यासदशाया ज्ञानकर्मसमुच्चय इत्येतन्मिथ्यैव । यतोऽनयोर्ज्ञानाज्ञानयो न कदाचिदपि साहृत्य संभवति । अज्ञानकृतकर्मणा ज्ञानस्य साहृत्य चिन्तितुमपि न शक्यम् । 'अज्ञानमनिराकुर्वत् ज्ञानमेव न सिध्यति' (१-६५) इत्युक्तयुक्तेर्योधकाभावादिति भाव ।

'विज्ञाय प्रज्ञां कुर्वीत' इति श्रुत्यर्थस्तु वाक्योत्थविज्ञानेनैवाऽऽत्मज्ञानरूपां प्रज्ञां संपादयेदिति, शास्त्राचार्यमतिरूपविज्ञानेन स्वात्मप्रत्ययरूपां प्रज्ञां संपादयेदिति वा, पदार्थबोधरूपेण विज्ञानेन वाक्यार्थबोधरूपां प्रज्ञां संपादयेदिति वा, प्रज्ञां कुर्वीतेति यत् तत् तमेव विज्ञायेति वा, अन्यथा वा,

बृहद्वार्तिकोपदर्शितदिशा सिद्धान्ताविरोधेन ग्राह्य । यत्तूच्यते वाक्यज्ञान नोत्पत्तिमात्रेणाज्ञान निरस्यतीति, तत्र वाक्यजन्य ज्ञानमप्रमाण तदभ्यासस्तु प्रमाणजनकमिति शोभनमभिहितम् । श्रुतहान्यश्रुतकल्पनालक्षणश्च स्फुटो दोषोऽत्र पक्षद्वयेऽपि । यदपि संसर्गात्मकमेव वाक्यजन्य ज्ञानमिति, तदपि ग्रन्थकृद्भिरेव निषेत्स्यते तृतीयाध्याय इत्यलमतिप्रपञ्चेन ॥ ६७ ॥

## १३. द्वैताद्वैतब्रह्मवादिनां मतेऽपि समुच्चयानुपपत्तिः

(मूलम्)

एवं तावदनानात्वे ब्रह्मणि ज्ञानकर्मणोः समुच्चयो निराकृतः । अथाधुना पक्षान्तराभ्युपगमेनापि प्रत्यवस्थाने पूर्ववदनाश्वासो यथा तथा अभिधीयते –

अनुत्सारितनानात्वं ब्रह्म यस्यापि वादिनः ।
तन्मतेनापि दुःसाध्यो ज्ञानकर्मसमुच्चयः ॥ ६८ ॥

(क्लेशापहारिणी)

दूषणार्थं नानारसब्रह्मवादावतारः –

अतीतागामिनोर्ग्रन्थभागयोर्यद्यपि ज्ञानकर्मसमुच्चयनिराकरणमेक एवार्थ, तथापि पूर्वपक्षिणामभ्युपगमभेदेन पृथक्समालोचनमित्याह – एवं तावदिति । एकरसं ब्रह्माभ्युपगच्छता ज्ञानकर्मसमुच्चयवादो निराकृत । अथाधुना पक्षान्तराभ्युपगमेनापि नानारसब्रह्मवादाङ्गीकारेणापि प्रत्यवस्थाने प्रतिवादितया पूर्वपक्षिणा अवलम्ब्यमाने तत्रापि पूर्ववदेव समुच्चये अनाश्वास एव असंभावनैव यथा भवति तथोत्तरग्रन्थे अभिधीयते इत्यर्थ ॥

अनुत्सारितेति । यस्यापि वादिनो मते ब्रह्म अनुत्सारितनानात्वम् अप्रत्यस्तमितवैचित्र्य वृक्षसमुद्रादिवदेकानेकात्मकमेव, तस्य मतेनापि ज्ञान कर्मसमुच्चयो दुःसाध्य एवेति प्रतिज्ञा, उपपादन तु समनन्तरग्रन्थे ॥ ६८ ॥

(मूलम्)

तस्य विभागोक्तिर्दूषणविभागप्रज्ञप्तये –

ब्रह्माऽऽत्मा वा भवेत्तस्य यदि वानात्मरूपकम् –
आत्मानाप्तिर्भवेन्मोहादितरस्याप्यनात्मनः ॥ ६९ ॥

तत्र यदि तावद्ब्रह्मत्वेनैव वृत्तेन ब्रह्म प्राप्तम्, आत्मस्वाभाव्यात्, केवलम् आत्मनोमोहापिधानमात्रमेव अनाप्तिनिमित्तम्, तस्मिन् पक्षे –

मोहापिधानभङ्गाय नैव कर्माणि कारणम् ।
ज्ञानेनैव फलावाप्तेस्तत्र कर्म निरर्थकम् ॥ ७० ॥

अनात्मरूपके तु ब्रह्मणि न कर्म साधनभावं प्रतिपद्यते नापि ज्ञानं कर्मसमुच्चितमसमुच्चितं वा । यस्मात्, अन्यत्वं स्वत एव साधकस्य, ब्रह्मणोऽपि अन्यत्वं स्वत एव सिद्धम् । तत्रैवम् –

अन्यस्यान्यात्मताप्राप्तौ न कश्चिद्धेतुसंभवः ।
तस्मिन् सत्यपि ना नष्टः परात्मानं प्रपद्यते ॥ ७१ ॥

(क्लेशापहारिणी)

नानारसब्रह्मवादस्य त्रेधा विकल्पः –

प्रतिज्ञातमर्थं समर्थयितुं नानारसब्रह्मवादस्त्रेधा विकल्प्य दूषयिष्यत इत्याह – तस्येति । विभागोक्तिः, त्रेधा विभज्य वचनम् । दूषणविभाग प्रज्ञप्तये एकैकस्मिन् पक्षे विद्यमानं दूषणं विभज्य ज्ञापयितुमित्यर्थः ॥

विभागमेवाऽऽह – ब्रह्मात्मा वेत्यादिना । तस्य मते ब्रह्म साधकस्य आत्मा वा भवेत्, यदि वा अनात्मरूपकम् । उभयथापि न समुच्चयेन ब्रह्मप्राप्तिः स्यात् इति शेषः । तत्र हेतुः – आत्मानाप्तिरित्यादिना समर्प्यते । यद्यात्मैव नानारसं ब्रह्म साधकस्य, तदा तदनाप्तिर्मोहादेव न वस्तुतः । न हि

वस्तुत स्वात्मैव स्वात्मनो व्यवहित इति शक्य कल्पयितुम् इति भाव । तथा इतरस्यापि अनात्मन स्वस्मादन्यस्य ब्रह्मणोऽपि, अनाप्तिर्मोहादेव – इत्यनुपद्यते । न हि अनात्मता कदापि प्राप्या स्यात् केनचिदपि येन तदनाप्ति परमार्थो भवेदित्यभिप्राय । 'इतरस्याप्यताऽऽत्मन' इति पाठे तु इतरस्य स्वत एवान्यस्य आत्मन परमात्मनो ब्रह्मण आप्यता मोहादित्यर्थ । आत्मन सकाशादितरस्य ब्रह्मात्मन आप्यता मोहादेव स्यादिति व्याख्येयम् ॥ ६९ ॥

अज्ञानमात्रव्यवहिते ब्रह्मणि, न समुच्चयः –

अस्तु मोहादेवानाप्तत्वमेकस्मिन् पक्षे, मोहादेव चाप्यत्वमितरस्मिंश्च इति । का नो हानिरिति ? अत आह – तत्रेति । तत्रैतयो पक्षयोर्मध्ये वास्तवेनैव वृत्तेन वस्तुस्वभावेनैव ब्रह्म प्राप्तम्, आत्मस्वाभाव्यात् साधकस्यात्मस्वरूपत्वात् । आसुरमोहापिधानमात्रम् – असुरसबन्धी दम्भदर्पकामक्रोधलोभादिकृतो यो मोह स एव केवल नान्यत् अपिधान तिरोधायक स्वरूपभूतस्य ब्रह्मण । तादृशापिधानमेव ब्रह्मणोऽनाप्तौ निमित्तम्, अज्ञानादेव तु केवलाद् ब्रह्म नाप्तमिति बुद्धि, इति पक्षो यदि स्वीक्रियते तस्मिन् प्रथमे पक्षे इत्यर्थ । 'ज्ञानेनैव फलावाप्ते' इत्यनेन श्लोकस्थेनास्य संबन्ध । सुगमार्थ श्लोक ॥ ७० ॥

अनात्मब्रह्म नैवाप्यम् –

प्रथमपक्षे कर्मणो निरर्थकत्वान्न समुच्चयसिद्धिरित्युक्तम् । अथ द्वितीयपक्षेऽपि तदसिद्धि वक्तुमाह – अनात्मरूपके त्विति । तस्मिन् पक्षे ब्रह्मप्राप्तौ न कर्म साधनम् । न केवल ज्ञानम्, न वा कर्मज्ञानसमुच्चय – इति कथ ज्ञायते ? तत्राह – यस्मादिति । अन्यत्व साधकस्य ब्रह्मण सकाशात् स्वत एव सिद्धम्, ब्रह्मणोऽपि साधकादन्यत्व स्वत एव सिद्धम् । ततोऽनेन साधकेन तदन्यस्य ब्रह्मण प्राप्यता मोहादेवेति विज्ञायत इति भाव । नन्वन्यत्वेऽपि कथमनाप्यत्व ब्रह्मण ? आप्यते हि ग्रामादिरन्योऽन्येन

चैत्रेण – इति शङ्कोत्तरत्वेन श्लोकमवतारयति – तत्रैवमिति । तस्मिन् पक्षे एवं वर्णितेन प्रकारेण परस्परान्यत्वे स्वतःसिद्धे सतीत्यर्थः ॥

अन्यस्येति । ब्रह्मण आप्तिर्नाम ब्रह्मात्मताप्राप्तिः, न तु मामादिप्राप्तिवत् तत्संयोगः । तथा हि श्रुतिः 'ब्रह्मविदाप्नोति परम्' (तै. २-१) इत्यनेन तुल्यवत् 'ब्रह्मैव सन् ब्रह्माप्येति' (बृ. ४-४-६), 'ब्रह्म वेद ब्रह्मैव भवति' (मुं. ३-२-९) – इति ब्रह्मण्यप्ययं ब्रह्मात्मतां चाह । अतः साध्वमिहितं कर्मादिकं नैव साधनं ब्रह्मप्राप्ताविति – इति भावः । न ह्यन्यस्यान्यात्मताप्राप्तौ कश्चिद् हेतुः संभवति । अन्यथा घटः पटात्मतामप्याप्नुयात्, शिलोच्चयोऽपि समुद्रात्मताम् – इति सर्वव्यवहारलोपप्रसङ्ग इति भावः ॥

अन्यस्यान्यात्मताप्राप्तौ न कश्चिद् हेतुसंभव इत्युक्तम् । तदयुक्तम् । यतः शास्त्रोक्तसाधनानुष्ठानात् अन्यस्याप्यन्यात्मता भवति । अन्यथा साधनविधानानुपपत्तेः शास्त्रस्यैवाप्रामाण्यापातात् इत्याशङ्क्याह – तस्मिन् इति । अयं भावः । न तावच्छास्त्रं वस्तुनोऽविद्यमानशक्त्याधानकृत्, किं तु संभाव्यमानपुरुषार्थोपायप्रदर्शकम् । न चान्यस्यान्यात्मता संभाविनी । अतो यदि नामान्यस्यान्यात्मताप्राप्तिबोधकाभासं शास्त्रमस्ति ततस्तदन्यथैव नेयमिति । अथाङ्गीकृत्यापि ब्रूमः । तस्मिन् हेतौ शास्त्रोक्ते सत्यपि ना पुरुषः, नष्टः मृतेरूर्ध्वमेव परात्मानं प्रपद्यत इत्यवगन्तव्यम् । न हि स्वरूपस्याविनाशेऽपि संसारदशायां परमात्मभावप्राप्तिर्भविष्यतीति कथञ्चन युज्येत – इति भावः ॥ ७१ ॥

(मूलम्)

अपरस्मिंस्तु पक्षे –

परमात्मानुकूलेन ज्ञानाभ्यासेन दुःखिनः ।
द्वैतिनोऽपि विमुच्येरन् न परात्मविरोधिना ॥ ७२ ॥

( क्लेशापहारिणी )

**द्वितीयपक्षे न समुच्चयः –**

अस्तु तर्हि यथोक्त एव पक्ष 'देवो भूत्वा देवानप्येति' (बृ ४-१-२), 'एतद्ब्रह्मैतमित प्रेत्याभिसंभवितास्मि' (छा ३-१४-४)–इत्यादि श्रुतिभ्य । इह जन्मनि तदात्मसाक्षात्कार कृत्वा देहपातादूर्ध्वं तद्रूपप्राप्त्युपपत्ते इत्याशङ्क्याह – **अपरस्मिंस्त्विति** । अन्यस्यान्यरूपताप्राप्तिर्मृतेरूर्ध्वमिति द्वितीयस्मिन् पक्षे इत्यर्थ ॥

यद्यप्यत्र साधनविधि सभवति, तथापि न समुच्चयो घटत इत्यभिप्रायेणाह – **परमात्मानुकूलेनेति** । 'अहमस्मि नानारसं ब्रह्म' इत्युपासनमत्र ज्ञानाभ्यास । तादृशाभ्यास परमात्मानुकूल, तेनैव तत्प्राप्त्युपपत्ते । 'यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेत प्रेत्य भवति' (छा ३-१४-१) इति श्रुते – इति भाव । न तु कर्मानुष्ठानेन परात्मविरोधिना । न हि तत्तदनुकूलम् । न हि ससारित्वबुद्धिर्मुक्त्यनुगुणा भवति, प्रत्युत मुक्तिविरुद्धमेव फलमारभते । उक्त च पूर्वम् उत्पाद्यादिचतुर्विधान्यतममेव कर्मण कार्यमिति । तथा च कर्मारब्धमुत्पत्त्यादिमत्वादनित्यमेव भवेत् , न तु नित्यमिति मुक्तिविरोध्येव कर्म । एव द्वैतिनोऽपि अन्योऽसौ साधको ब्रह्म चान्यत्, शास्त्रविहितमुक्तिसाधनानुष्ठानेन च साधको ब्रह्मात्मता प्राप्नोति मृतेरूर्ध्वम् इति ये वदन्ति, तेऽपि ज्ञानाभ्यासेन कथञ्चिद् विमुच्येरन् नाम, न तु परात्मप्राप्तिविरोधिना कर्मणा । तथा च न परस्परविरोधिनो साधनयो समुच्चयसभव इत्याशय । अय चाभ्युपगमवाद । वस्तुतस्तु अन्यस्यान्यात्मताप्राप्तेरसंभवात् साधकाद्ब्रह्म नान्यत् किं तु संसारदशायामप्यात्मैव तस्य । यस्तु मन्दाधिकारी प्रागिव तत्त्व ज्ञातु समर्थ , त प्रत्येवोपासना विधीयते, अविद्यादृष्ट्या आपेक्षिकमुक्तिप्राप्त्यर्थम्, ज्ञानद्वारा क्रममुक्त्यर्थं वा इत्युपासनाफलमपि मुक्तिरित्युपचर्यत इति रहस्यम् । तदेतत् सर्वमभिसंधायैव 'तस्मिन् सत्यपि ना नष्ट परात्मान प्रपद्यत' इत्युक्तमिति ध्येयम् ॥ ७२ ॥

( मूलम् )

इतरस्मिंस्तु पक्षे विधेरेवानवकाशत्वम् । कथम् ?

समस्तव्यस्तभूतस्य ब्रह्मण्येवावतिष्ठतः ।
ब्रूत कर्मणि को हेतुः सर्वानन्यत्वदर्शिनः ॥ ७३ ॥

सर्वकर्मनिमित्तसंभवासंभवाभ्यां सर्वकर्मसङ्करश्च प्राप्नोति । यस्मात् –

सर्वजात्यादिमत्त्वेऽस्य नितरां द्वैत्वसंभवः ।
विशेषं ह्यनुपादाय कर्म नैव प्रवर्तते ॥ ७४ ॥

स्याद्विधिरध्यात्माभिमानादिति चेत् । नैवम् । यस्मात् –

न चाध्यात्माभिमानोऽपि विदुषोऽस्त्यासुरत्वतः ।
विदुषोऽप्यासुरश्चेत्स्यान्निष्फलं ब्रह्मदर्शनम् ॥ ७५ ॥

अज्ञानकार्यत्वान्न समकालं नापि क्रमेण ज्ञानकर्मणोर्वस्तु-वस्तुतन्त्रत्वात् सङ्गतिरस्तीत्येवं निराकृतोऽपि काशं कुशं वा अवलम्ब्याऽऽह –

अथाध्यात्मं पुनर्यायादाश्रितो मूढतां भवेत् ।
स करोत्येव कर्माणि को ह्यज्ञं विनिवारयेत् ॥ ७६ ॥

सिद्धत्वाच्च न साध्यम् । यतः –

सामान्येतररूपाभ्यां कर्माऽऽत्मैवास्य योगिनः ।
निरधामोऽन्त्यागवचनान्न नियोगमपेक्षते ॥ ७७ ॥

( क्लेशापहारिणी )

अत्र प्रत्यगात्मभूतमेव साधकस्येति पक्षे न विधिः –

अथ संसारदशायामपि नानारसब्रह्म आत्मत्वमेवोपगम्यते, तदानीं तु प्राप्तमेव तदिति तत्प्राप्त्यर्थं किमपि साधनं नापेक्षितमिति समुच्चयस्य

सुतरामसंभव इत्याह – **इतरस्मिंस्तु पक्षे इति** । ज्ञानस्य कर्मणो वा निर्विरेवानवकाशत्वमिति कथम् ? इति प्रश्नप्रत्योत्तरत्वेन श्लोकमवतारयति – **कथमिति** ॥ 'मोहापिधानभङ्गाय' (१–७०) इत्यत्र मुमुक्षोर्ज्ञानकर्मसमुच्चयो न सभवतीत्युक्तम् । इह पुनर्ज्ञानेनावाप्तब्रह्मात्मभावस्य समुच्चयासभव उच्यत इत्यपौनरुक्त्यम् ॥

**समस्तव्यस्तभूतस्येति** । एकं चानेकं च ब्रह्म वृक्षसमुद्रादिवदिति नानारसब्रह्मवादिनो मतम् । तथाविधब्रह्मभावमापन्नस्य ब्रह्मण्येवावतिष्ठत, ब्रह्मणः सकाशाद्देशतः कालतो वा अव्यवहितस्य, कर्मणि को हेतुः ? किं हि फलं हेतूकृत्याय कर्मणि प्रवर्तताम् ? न ह्यस्योत्पाद्याद्यन्यतममवशिष्यत इत्यभिप्रायः । न च ब्रह्मभिन्नोऽर्थः कश्चन सपादनीयोऽस्तीति कल्प्यम् । कुतः ? तत्र हेतुगर्भं विशेषणम् 'सर्वानन्यत्वदर्शिन' इति । समस्तव्यस्तभूतं हि नाम सामान्यविशेषात्मकम् । तच्च ब्रह्म सामान्यरूपतया सर्वेणानन्यदेव । तद्रूपश्चाय जीवन्मुक्त इति सकलक्रियाकारकफलरूपेणावतिष्ठते । अतो न निश्चिदस्य कर्मणा प्राप्तव्यमस्तीत्यभिप्रायः । 'कर्मणि को हेतुः' इत्युपलक्षणम् । 'ज्ञाने वा' इत्यपि द्रष्टव्यम् । ज्ञानेनाप्यवाप्यस्य कस्यचिदर्थस्याभावात् । अत एव संबन्धग्रन्थे (१–७३) 'विधेरेवानवकाशत्वम्' इत्युक्तमिति ध्येयम् ॥ ७३ ॥

**ब्रह्मभूतस्यापि कर्माभ्युपगमे सर्वकर्मसङ्करः –**

विदुषोऽपि कर्माभ्युपगमे दोषान्तरमप्यापतती याह – **सर्वकर्मनिमित्तेति** ॥

**सर्वजात्यादिमत्त्वेऽस्येति** । संबन्धोक्तिमनुसृत्य विभज्य व्याख्येयः श्लोकार्थः । कथम् ? समस्तव्यस्तब्रह्मभूतत्वादस्य सर्वजात्याश्रमादिकर्मनिमित्तासंभवे नितरां कर्मणि हेत्वसभवः । कुत इत्यत आह – **विशेषमिति** । विशेषं ब्राह्मण्यादिकम् अनुपादाय नैव कर्म प्रवर्तते । बृहस्पतिसवराजसूयादिषु व्यवस्थया प्रवृत्तिर्नैव संभवति । सर्वजात्यादिकर्मनिमित्तसभवे तु सर्वकर्मसङ्कर

प्राप्नोति सर्वः सर्वस्मिन् कर्मण्यधिकारी स्यात् । सर्वानित्यब्रह्मस्वरूपत्वात् । न च सर्वेषु कर्मसु युगपत्प्रवृत्तिरस्तीत्यतोऽपि नितरां कर्मणि हेत्वसंभवः इत्यभिप्रायः ॥ ७४ ॥

ज्ञानिनो नैव शरीराद्यभिमानोऽस्ति –

ज्ञानिनो न कस्मिंश्चित्कर्मणि नियमेन प्रवृत्तिरित्येतदसहमानः कथञ्चित् कर्माधिकारं संभावयिष्यन्नाह – स्यादिति । अध्यात्माभिमानात्, जीवन्मुक्तस्यापि स्वशरीरादिविशेषाभिमानादित्यर्थः । उत्तरं वदञ्छ्लोकमवतारयति – 'नैवम् । यतः' इति ।

न चेति । स्पष्टार्थः श्लोकः ॥ ७५ ॥

पूर्ववादी स्वपक्षस्य सर्वथापि निरस्तत्वात् तत्समर्थने निराशः सन् असंभावितमप्युपक्षिपतीत्याह – अज्ञानकार्यत्वादिति । ज्ञानं वस्तुतन्त्रम्, यथाप्रमाणं यथावस्तु च जायमानत्वात् । न पुरुषतन्त्रम्, कर्तुमकर्तुमन्यथा वा कर्तुमशक्यत्वात् । कर्म तु अवस्तुतन्त्रं पुरुषतन्त्रमेव तु । अनुष्ठातुः स्वेच्छयैव तत्र प्रवृत्तेः । तस्य च कर्मणोऽज्ञानकार्यत्वात् न कर्मज्ञानसमुच्चयः संभवतीति 'अयथावस्तुविद्या स्याद्विद्या तस्या विरोधिनी' (१-५६) इत्यत्रैव निराकृतोऽपि पूर्वपक्षी अगाधे जलाशये निपातितोऽपि जीविताशया काशं कुशं वा अवलम्ब्य उन्मङ्क्तुं प्रयतमान इव, अत्रावसरे प्रशिथिलमपि कञ्चित्तर्कमवलम्ब्य आह शङ्कते इत्यर्थः । 'यथाध्यात्मं पुनर्यायात्' इत्याह इति श्लोकपादेन संबन्धः । अथवा दुर्बलमपि तर्कमवलम्ब्य पूर्वपक्षिद्वारेण शङ्कयित्वा आह प्रत्याह – इति सर्वेणापि श्लोकेन संबन्धः ॥

अथेति । अथशब्दः पक्षान्तरोपन्यासे । यदि ज्ञानेन समस्तव्यस्तब्रह्मभूतोऽपि विद्वान् पुनरपि पूर्ववत् अध्यात्मं शरीरादिपरिच्छेदाभिमानं यायात् प्राप्नुयात् इत्यसंभाव्यमानमपि संभाव्य प्रत्यवतिष्ठसे चेत् इत्यर्थः । तर्हि मूढताम् आश्रितो भवेत् । ज्ञानित्वमपि जह्यात् इत्यर्थः । अस्तु तदपीति वदन्तमुपहसति ॥ इति । स मूढत्वमाश्रितः कर्म करोत्येव । मौढ्यमेव हि

प्रवृत्तिकारणमिति वय ब्रूमहे । को ह्यत्र विनिवारयेत् ? अज्ञो हि काम प्रयुक्त, न ह कोऽपि विनिवर्तयितुं शक्नुयात् 'निग्रह कि करिष्यति ?' (गी ३-३३) इति भगवद्वचनात् इति भाव' । न ह्यत्र कर्म करोतीत्येतावता ज्ञानकर्मसमुच्चय उपपादितो भवेदिति वाक्यार्थ । वस्तुतस्तु ज्ञान्यपि सन् पुनरप्यध्यात्माभिमान धत्त इत्युपहास्यमेतदिति हृदयम् ॥ ७६ ॥

नानारसब्रह्मभूयं गतस्य कर्म न नियोगसाध्यम् –

क्रियाकारकफलरूपनानारसब्रह्मात्मनैव स्थितत्वाद्विदुष, कर्मविध्य नवकाश इत्याह – सिद्धत्वाच्चेति । कर्मण सिद्धत्वात् स्वरूपभूतत्वादेव च न नियोगेन तस्य साध्यत्वमित्यर्थ ॥

सामान्येतरेति । ब्रह्म हि सामान्यविशेषरूपेणावतिष्ठत इति हि मत पूर्ववादिन । तद्भावेनैव तिष्ठतोऽस्य योगिनो ज्ञानिन कर्म सामान्य तद्विशेषो वा आत्मैव स्वरूपमेवेति न नियोगार्हम् । तत्र दृष्टान्त – निश्श्वासोच्छ्वासवदिति । तस्मात् विदुष आत्मभूतत्वादेव यथा निश्श्वासोच्छ्वासौ पुरुषे स्वभावत एव प्रवर्तेते इति न नियोगमपेक्षेते, एवमस्य कर्म स्वभाव एवेति न नियोगमपेक्षत इत्यर्थ ॥ ७७ ॥

( मूलम् )

अस्तु तर्हि भिन्नाभिन्नात्मक ब्रह्म । तथा च सति ज्ञान-कर्मणी सभवतः । भेदाभेदविषयत्वात् तयोः । तत्र तावदयं पक्ष एव न सभवति । किं कारणम् ? न हि भिन्नोऽयम् इत्यभेदबुद्धिमनिराकृत्य भेदबुद्धिः पदार्थमालिङ्गते । एवं ह्यनभ्युपगमे भिन्नाभिन्नपदार्थयोरलौकिकत्व प्रसज्येत । अथ निष्प्रमाणकमप्याश्रीयते, तदापि उभयपक्षाभ्युपगमात् अभेद-पक्षे दुःखि ब्रह्म स्यात् । अत आह –

भिन्नाभिन्नं विशेषैश्चेद्दुःखि स्याद्ब्रह्म ते ध्रुवम् ।
अशेषदुःखिता च स्याददृष्टो ब्रह्माऽऽत्मवेदिनाम् ॥ ७८ ॥

( क्लेशापहारिणी )

ब्रह्मणो भिन्नाभिन्नत्वमसंभावितम् –

एवं तावन्नानारसब्रह्मवादी न समुच्चयेऽधिक्रियते यदि ब्रह्म तस्मात् साधकाद्भिन्नम्, यदि वाऽभिन्नम् भवतु स मुमुक्षुर्जीवन्मुक्तो वा – इत्युपपादितम्। अथ तृतीयं विकल्पमनूद्य निराकरोति – अस्तु तर्हीति। नन्वस्मिन् पक्षे पूर्वोक्तपक्षद्वयदोषाः समुच्चित्य प्रादुः ष्युरित्याशङ्क्याऽऽह – तथा च सतीति। अभेदमाश्रित्य ज्ञानम्, भेदं चाश्रित्य कर्म – इत्युभयमपि सगच्छत इत्यभिप्रायः। परिहरति – तत्रेति। एवमेव ब्रह्म साधकाद्भिन्नमभिन्नं चेति वचो न युक्तिमत्। कुतः? लोकेऽपि कुत्रापि भिन्नाभिन्नत्वस्यानुपलब्धेः। असंभवाच्च। कथमसंभव इति? तत्राऽऽह – न हीति। भेदाभेदौ हि परस्परप्रतिद्वन्द्विनौ। यदि तावत् कश्चन पदार्थः कस्माचिद्भिन्नः, तर्हि न स तत एवाभिन्नो भवितुमर्हतीति। नन्वयुक्तमिदम्। कार्यस्य कारणाद् भिन्नाभिन्नत्वदर्शनात्। एवं गुणगुणिजातिव्यक्त्यादीनामपि भेदाभेदावनुभूयेते तत्कथं दृष्टेऽप्यनुपपत्तिः शङ्क्यत इति? नैवम्। भेदबुद्धिर्हि तावदभेदबुद्धिं निराकृत्यैव प्रवर्तत इति सर्वसंप्रतिपन्नमेतत्। एतदनभ्युपगच्छतो हि भेदबुद्धिर्नामाभेदबुद्धिरेवेत्यापद्यते। ततश्च भेदाभेदाविति वचनव्यक्त्या द्विवारमभेद एवोक्तो भवेत्। भेदाभेदशब्दौ वा न लोकसिद्धार्थवाचिनौ स्यातामित्याह – एवं हीति। कार्यकारणादिस्थले तु कार्यादीनां प्रातीतिको भेदः, परमार्थतस्तु कारणादिसकाशादभेद एवेत्यन्यदेतत्। तथा च श्रुतिः 'मृत्तिकेत्येव सत्यम्' (छा ६-१-४) इति। अतो निष्प्रमाणकमिदमुच्यते साधकाद्भिन्नाभिन्नात्मकं ब्रह्मेति। अस्तु लोके भिन्नाभिन्नपदार्थो नास्त्येवेति। ब्रह्मणि तु शास्त्रबलाद् भिन्नाभिन्नत्वाश्रयणे को दोषः? इति वदन्तं प्रत्याह अथेति। निष्प्रमाणकं प्रत्यक्षादिप्रमाणरहितमित्यर्थः। शास्त्रमप्यसंभावितं भिन्नाभिन्नलक्षणमेकं वस्तु नावगमयितुमलम्। पुरुषार्थतत्साधनप्रकाशनपरत्वेन शास्त्रस्याविद्यमानपदार्थशक्त्याधानसामर्थ्याभावादित्युक्तम्। अथाप्यभ्युपगम्य निष्प्रमाणकं भिन्नाभिन्नं ब्रूते, तदापीति। तस्मिन् पक्षे उभयपक्षाभ्युपगमात्। अभेदपक्षे नानारसं ब्रह्म

साधकादभिन्नमिति पक्षे ब्रह्म दु:खि स्यात् । अत आह – 'मूरकृत्' इति शेष । यद्यपि नैष्कर्म्यसिद्धिकृदपि स्वयमेव, तथापि सम्बन्धोक्तिकारत्वेन स्वस्मिन्नौपाधिक भेद प्रकल्प्येद वचनमिति मन्तव्यम् ॥

संभवित्वेनाभ्युपगतेऽपि भेदाभेदवादे दोषः –

**भिन्नाभिन्नमिति ।** सामान्यविशेषात्मक ब्रह्म विशेषैर्जीवैर्भिन्नाभिन्न मिति चेदभ्युपगम्यते, तर्हि ब्रह्मणो जीवानतिरेकाद् ब्रह्म दुःख्यपि ध्रुव स्यात् । किञ्च बद्धस्य जीवस्य स्वाश्रितदुःखमात्रानुभव, मुक्तस्य तु ब्रह्मात्मना सर्वजीवाभेदात् अशेषदुःखिता च भवतीत्यहो प्रज्ञा आत्मवेदिनाम्, यस्या प्रज्ञाया महिम्ना ते बन्धकालदुःखातिशायिदुःखभाजो भवन्ती युपहास ॥ ७८ ॥

## १४. समुच्चयनिरासोपसंहारः

(मूलम्)

तस्मात् सम्यगेवाभिहितं न ज्ञानकर्मणोः समुच्चय इत्युपसंह्रियते –

तमोऽङ्गत्वं यथा भानोरग्नेः शीताङ्गता यथा ।<br>
वारिणश्चोष्णता[1] यद्वज्ज्ञानस्यैवं क्रियाङ्गता ॥ ७९ ॥

(क्लेशापहारिणी)

प्रकरणोपसहारः –

तदेवमद्वैतिमतेन द्वैताद्वैतिमतेन वा सर्वथापि ज्ञानकर्मसमुच्चयो न घटत इति परमप्रकृतमुपसहरति – **तस्मादिति ।** ये त्वधुनातनवेदान्तिनो वदन्ति – जीवाना सदा ब्रह्मण सकाशाद्भिन्नानामेव सता मुक्तौ स्वभूतसुखानु भूतिर्भविष्यतीति । तेषा सुख नैज चेद् बन्धदशायामपि तेन भाव्यम् । स्वभावस्यापाये हेत्वभावात् । अतोऽज्ञानेनैव तस्यानभिव्यक्तिरिति ज्ञानेनैव

1 'तोयस्योष्णाङ्गता' इति पाठ कल्पित कैश्चित् स्यात्प्रक्रमभङ्गवारणार्थम् ॥

तदभिव्यक्तिरित्यायातम् । तत्र किं कर्मणेति प्रष्टव्यास्ते । अथ स्वभूतमपि सुखं केनचिदावृतं सन्नावभासते बन्धकाले ध्यानकर्मभ्यां तु प्रतिबन्धकीभूतावरणनाशादभिव्यज्यत इत्युच्यते, तदापि स्वीयस्यैव चित्प्रकाशस्य विषयभूतमावरणं किमिति 'इदमित्थम्' इत्येवं न भासते बन्धदशायामिति वक्तव्यं भवति । चित्प्रकाशस्याप्यावरणं ब्रुवन्तम् एवमेव निराकुर्यात् । अथैतद्दोषपरिजिहीर्षया आवरणमपि मिथ्याज्ञानकृतमिति यदि ब्रूयात्, तर्हि ज्ञानमेवालम् अज्ञानोच्छित्तये कृतं कर्मणेति समुच्चयानुपपत्तिः । यापि कल्पना परमेश्वर एव यथोक्तं जीवानां स्वरूपभूतं सुखं स्वेच्छया आवारयति, तैराराधितस्तु आवरणम् अपाकरोतीति, तत्र यः परमेश्वरः शक्तोऽपि पूर्वम् आवरणेनाच्छादयति स्म स पुनरपि तथैव न करोतीति कैव प्रत्याशा ? अपि च जीवान् अविद्यया प्रच्छाद्यापि सन्तुष्यतः परमेश्वरस्य कथं नाम न नैर्घृण्यम्—इत्यादिदोषाः स्फुटा एवेत्यलमतिप्रपञ्चेन ॥

तमोऽङ्गत्वम् इति । स्पष्टार्थः श्लोकः ॥ ७९ ॥

## १५. पूर्वपक्षोक्तिखण्डनम्

(मूलम्)

यथोक्तोपपत्तिबलेनैव पूर्वपक्षस्योत्सारितत्वात्, वक्तव्यं नावशेषितमित्यतः प्रतिपत्तिकर्मवत् पूर्वपक्षपरिहाराय यत्किञ्चिद् वक्तव्यम् इत्यत इदमभिधीयते —

मुक्तेः क्रियाभिः सिद्धत्वादित्याद्यनुचितं वचः ।
यद्भाणि तदन्याय्यं यथा तदधुनोच्यते ॥ ८० ॥

(इष्टसाधिनी)

पूर्वपक्षयुक्तिनिरासप्रतिज्ञा —

कर्मणां केवलानां ज्ञानमनुविधानां वा न मुक्तिहेतुत्वमित्युपपत्तिबलेनैव प्रतिपादितम् ; ज्ञानादेव तु केवलादज्ञानोच्छित्तिरिति च । तत्र

यद्यप्येतावतैव प्रतिज्ञातार्थः सिध्यति, तथापि पूर्वपक्षोक्तिखण्डनायोत्तरो ग्रन्थभाग इत्याह — यथोक्तेति । प्रतिपत्तिकर्मवत् स्वयं प्राप्तत्यागस्य कृष्णविषाणस्य 'स कृष्णविषाणां च मेखलां च चात्वाले प्रास्यति' (शत. ब्रा. ४-४-१-२) इति विधिवचनवशाच्चात्वाले त्याग इव, उपपत्तिबलेन खण्डितमपि पूर्वपक्षं तदुक्तिनिरासेनापि खण्डयित्वा तस्यात्यन्तमेव निस्सारतां प्रदर्श्य तत्परिहारायेदानीं प्रयत्यत इत्यर्थः ॥

मुक्तेरिति । स्पष्टो ग्रन्थः ॥ ८० ॥

(मूलम्)

योऽयं काम्यानां प्रतिषिद्धानां च त्यागः प्रतिज्ञायते सा प्रतिज्ञा तावन्न शक्यतेऽनुष्ठातुम् । किं कारणम् ? कर्मणो हि निर्वृत्तात्मनो द्वाभ्यां प्रकाराभ्यां निवृत्तिः संभवति । आरब्धस्य फलस्योपभोगेन, अनारब्धफलस्य अशुभस्य (च)[1] प्रायश्चित्तैरिति । तृतीयोऽपि त्यागप्रकारोऽकर्त्रात्मावबोधात् । न त्वात्मज्ञानानभ्युपगमाद् भवता नाभ्युपगम्यते । तत्र यान्यनुपभुक्तफलानि अनारब्धफलानि, तानि ईश्वरेणापि केनचिदपि न शक्यन्ते परित्यक्तुम् । अथारब्धफलानि त्यज्यन्ते तान्यपि न शक्यन्ते त्यक्तुम् । किं कारणम् ? निर्वृत्तेः[2] । अनिर्वृत्तं हि चिकीर्षितं कर्म शक्यते त्यक्तुम् । प्रवृत्तिनिवृत्ती प्रति कर्तुः स्वातन्त्र्यात् । निर्वृत्ते तु कर्मणि तदसंभवात् दुरनुष्ठेयः प्रतिज्ञातार्थः । अशक्यप्रतिज्ञानाच्च । न च शक्यते प्रतिज्ञातुं 'यावज्जीवं काम्यानि प्रतिषिद्धानि च कर्माणि न करिष्यामि' इति । सुनिपुणानामपि सूक्ष्मापराधदर्शनात् । प्रमाणाभावाच्च । न च प्रमाणमस्ति मोक्षकामो नित्यनैमित्तिके कर्मणी कुर्यात्,

1. अत्र चकार एवोऽपेक्षितोऽपि मुद्रितपुस्तकेषु न दृश्यते ॥
2. 'अनिर्वृत्तेः' इत्यसाधुः पाठः ॥

काम्यप्रतिषिद्धे च वर्जयेत्, आरब्धफले चोपभोगेन क्षपयेत् — इति । आनन्त्याच्च । न चोपचितानां कर्मणाम् इयत्ता अस्ति । संसारस्यानादित्वात् । न च काम्यैः प्रतिषिद्धैर्वा तेषां निवृत्तिरस्ति । शुद्ध्यशुद्धिसाम्ये सत्यविरोधात् इति । अत आह —

> न कृत्स्नकाम्यसंत्यागोऽनन्तत्वात् कर्तुमिष्यते ।
> निषिद्धकर्मणश्चेह[1] व्यतीतानन्तजन्मसु ॥ ८१ ॥

स्यान्मतम्, व्यतीतानन्तजन्मोपात्तानां कर्मणाम् —

> क्षयो नित्येन तेषां चेत्प्रायश्चित्तैर्यथैनसः ।
> निष्फलत्वाच्च नित्येन काम्यादेर्विनिवारणम् ॥ ८२ ॥

प्रमाणाभावाच्च । कथम् ?

> पापापनुत्तये वाक्यात् प्रायश्चित्तं यथा तथा ।
> गम्यते काम्यहानार्थं नित्यं कर्म न वास्यतः ॥ ८३ ॥

( क्लेशापहारिणी )

काम्यनिषिद्धकर्मणोरशेषतस्त्यागानुपपत्तिः —

काम्यनिषिद्धयोस्त्यागात्, नित्यनैमित्तिकयोश्चानुष्ठानात् प्रारब्धकर्मणश्च फलोपभोगेन क्षपणात् अयत्नसिद्धो मोक्ष — इति हि पूर्व पक्ष । तत्र त्यागस्तावदनुष्ठातुं न शक्यत इत्याह — योऽयमिति । तत्र हेतुमाह प्रश्नपूर्वकम् — किं कारणम् ? कर्मणो हीत्यादि । निर्वृत्तात्मन निष्पन्नरूपस्य द्वाभ्यां प्रकाराभ्यां निवृत्ति सम्भवति । आरब्धफलस्योपभोगेन क्षय, अनारब्धफलस्याशुभस्य च प्रायश्चित्तैरिति । इयमपि कर्मणो निवृत्तिस्तात्कालिकी, न त्वात्यन्तिकीति ज्ञेयम् । उपभुक्तानां वासनाबीजानावापात् पुनरपि कर्माङ्कुरावकाशसत्त्वात् । प्रायश्चित्तैर्दोषक्षपणेऽपि कर्मत्वाविशेषेणाविद्यातत्कर्तृत्व

---

1 'कर्मणश्चेतु' पा

पुरस्तृत्येव प्रवृत्तत्वात् कर्तृत्वशक्तेरनपहारात्, सति कर्तृत्वे कर्मोद्भवनिवारण कारणाभावात्। यस्तु तृतीय प्रकारोऽकर्त्रात्मज्ञानाद् भवति ॥ आत्यन्तिक । अज्ञाननिमित्तस्य कर्मणोऽज्ञाननाशे शेषानुपपत्ते । एव तृतीयोऽपि प्रकारो यद्यप्यस्ति कर्मनिवृत्ते, तथापि न स प्रकारो भवता कर्मवादिना नाभ्युपगम्यते। तत्र एवमवशिष्टे कर्मणो निवृत्तिप्रकारद्वये, यान्यनुपभुक्तफलान्यनारब्धफलानि सञ्चितानि, तान्यनुपस्थितत्वादेव न शक्यन्ते परित्यक्तुम्, ईश्वरेणापि स्वतन्त्रेणापि। न ह्यनुपस्थितो रोगो भिषज्यते सुनिपुणेनापि वैद्येनेति भाव । अथारब्धफलानि त्यक्ष्यन्ते इत्युच्यते, तान्यपि न शक्यन्ते त्यक्तुम् । अत्राशङ्कते किं कारणम् ? इति । उत्तरमाह निर्वृत्तेः । निष्पत्तेरित्यर्थ । निष्पन्न हि कृतमेवेति न तस्य त्यागे स्वातन्त्र्यमस्ति कर्तुं । अथ लब्ध स्वरूपाणां भोगादेव सर्वेषा क्षय क्रियते क्रमेणेति। तदप्यशक्यप्रतिज्ञानम्। न ह्यनन्ताना सञ्चितकर्मणा स्वस्वकाले निष्पत्स्यमानफलानां कल्पकोटिभि रप्युपभोगेन क्षयो भविता। न चाऽऽगामिकर्मणा प्रतिबन्धोऽस्ति येन सर्वकर्मक्षये प्रत्याशा स्यादित्याह– अशक्यप्रतिज्ञानाच्चेति। तदेव विवृणोति– न च शक्यत इति । किमिति न शक्यते ? तत्राह – सुनिपुणानामपीति। तथा च पौराणिका प्राहु – युधिष्ठिरस्यापि नरकदर्शन बभूव, अणीमाण्डव्य स्यापि शूलारोपणम् – इत्यादि । अपि चैष मुक्तिसाधनप्रकारो न शास्त्रोक्त, कि तु त्वयैवाभ्यूहित इत्याह – प्रमाणाभावाच्चेति । नित्यनैमित्तिकयो र्मोक्षार्थत्व नास्तीति पूर्वमेवोक्तम् 'नाश्नोति मोक्षद कर्म' (२७) इति। इह तु कर्मक्षयप्रकारेऽपि शास्त्रप्रमाणमपह्नूयत इति विशेष । किञ्च यद्यपि केषाञ्चित् सञ्चिताना कर्मणा प्रायश्चित्तादिभिस्त्याग संभवेत्, तथाप्यानन्त्यात् कर्मणाम् अशेषतस्त्यागो न सम्भवतीत्याह – न चेति । एकैकस्यापि कर्मणोऽनेकजन्मप्रदानसामर्थ्यं स्मर्यते । जन्मनि जन्मनि चामितवानि कर्माणि क्रियन्ते। तत्र कथ प्रायश्चित्तेनोपभोगेन वा सर्वेषा क्षय शक्यते संभावयितुमिति भाव । न च कर्मानन्त्ये प्रमाणाभाव । अनेकजन्मान्तर सञ्चितानामनारब्धफलाना सद्भावस्य श्रुतिस्मृतिभ्यामवगमादित्यपि द्रष्टव्यम्।

यथोक्तं संबन्धवार्तिके 'तत शेषेण वचनात्तथा तत्र इहेष्यत । अनारब्ध फलेहाना गम्यते सस्थितिरतात ॥' (स वा ९५) इति। किञ्चान्यत्–काम्यै कृतै काम्यानामुपचय एव स्याच्च नाश, तथा प्रतिषिद्धैश्च प्रतिषिद्धानाम् इत्याह – न च काम्यैरिति। तदेतत्सर्वमभिसधायोत्तरश्लोकप्रवृत्तिरित्याह – अत आहेति – तस्मादाह ग्रन्थकृत् इति शेष । 'इत्याह' इति पाठे तु इत्यभिसधायाह इत्यर्थ ॥

न कृत्स्नेति । व्यतीतानन्तजन्मसु कृतस्य कृत्स्नस्याशेषस्य काम्यस्य निषिद्धकर्मणश्च सत्यागो न कर्तुमिष्यते, अनन्तत्वात् इति योजना । कृत्स्नस सत्याग इति पदद्वयमर्थतो 'निषिद्धकर्मणश्च' इत्यनेनापि सबध्यते योग्य त्वादिति ध्येयम् ॥ ८१ ॥

नित्यकर्मणा काम्यनिषिद्धयोर्न क्षयः –

अनन्तानामपि काम्याना निषिद्धाना च नित्यकर्मणैव क्षय स्यात्, यथा इहजन्मकृताना प्रतिषिद्धाना प्रायश्चित्तैरित्याशङ्क्य परिहरति – साम्प्रतम् इति ॥

क्षयो नित्येनेति । यथा एनस पापस्य प्रायश्चित्ते क्षय, एव तेषाम् अनन्तजन्मोपात्तानामपि काम्यनिषिद्धाना नित्येन क्षय इति चेत्, न नित्येन काम्यादे काम्यनिषिद्धयोर्विनिवारण संभवति । निष्फलत्वात् । नित्य कर्म निष्फलम् इति भवद्भिरङ्गीकारादित्यर्थ । मया च नित्यानामपि स्वासाधारणफलवत्त्वाभ्युपगमादित्यपि द्रष्टव्यम् । यथोक्त संबन्धवार्तिके 'आत्रे निमित्त इत्यादि व्यापस्तम्बस्मृतेर्वच । फलवत्त्व समाचष्टे नित्यानामपि कर्मणाम्' (सं वा ९७) इति ॥ ८२ ॥

नित्यकर्मणा काम्यनिषिद्धयो प्रहाणिरित्येतन्न केवल भवत प्रतिज्ञा हानिप्रसञ्जकम्, अपि तु निष्प्रमाणकमपीत्याह – प्रमाणाभावाचेति ॥

पापापनुत्तय इति । काम्यहानार्थमित्युपलक्षणम्, निषिद्धहानार्थ मित्यपि द्रष्टव्यम् । 'कर्मणा पितृलोक' (बृ १–५–१६), 'सर्वे एते पुण्यलोका भवन्ति' (छां २–२३–१) इत्यादिभि श्रुतिभि नित्यानां कर्मणा कार्यान्तरार्थत्वावगमात् ॥ ८३ ॥

( मूलम् )

अथापि स्यात्, काम्यैरेव काम्यानां पूर्वजन्मोपचितानां क्षयो भविष्यतीति । तन्न । यतः –

पाप्मनां पाप्मभिर्नास्ति यथैवेह निराक्रिया ।
काम्यैरपि तथा नास्ति काम्यानामविरोधतः　　॥ ८४ ॥

( क्लेशापहारिणी )

काम्यैः काम्यानां न नाशः –

अश्ममश्मेन शाम्यतीति न्यायेन काम्यैरेव काम्यानां कर्मणां नाशोऽस्त्विति पक्षान्तरमुत्थाप्य पराकरोति – अथापि स्यादिति ॥

निषिद्धानां निषिद्धैर्नाशस्तावदतिदवीयस्त्वेन न निराकार्यः । न हि पङ्कं पङ्कलेपेन क्षालयन्तीति । एवं काम्यैः शुद्धैरनुष्ठितैः पुण्यातिशय एव भवेत्, न पुण्यनाशः शुद्धिसाम्यात् । नन्वेतत् 'न च काम्यः' इति संबन्धोक्तावेवोक्तम् । बाढम् । इत एव चाकृष्य तत्रोक्तमित्यदोषः ॥ ८४ ॥

( मूलम् )

एवं तावत्, 'मुक्तेः क्रियाभिः सिद्धत्वात्' (१-९) इति निराकृतम् । अथ, आत्मज्ञानस्य सद्भावे प्रमाणासंभव उक्तः । तत्परिहारायाह –

श्रुतयः स्मृतिभिः साकमानन्त्यात् कामिनामिह ।
विदधत्युरुयत्नेन कर्मातो बहुकामदम्　　॥ ८५ ॥

न च बाहुल्यं प्रामाण्ये कारणभावं प्रतिपद्यते । अत आह –

प्रामाण्याय न बाहुल्यं न ह्येकत्र प्रमाणताम् ।
वस्तुन्यटन्ति मानानि त्वेकत्रैकस्य मानता　　॥ ८६ ॥

यत्तूक्तं 'यत्नतो वीक्षमाणोऽपि' (१-१५) इति, तत्रापि भवत एवापराधः । कस्मात् ? यतः -

परीक्ष्य लोकानित्याद्या आत्मज्ञानविधायिनीः ।
नैष्कर्म्यप्रवणाः साध्वीः श्रुतीः किं न शृणोषि ताः ॥ ८७ ॥

( क्लेशापहारिणी )

कर्मविधिबाहुल्यादेव कर्म मुक्तिसाधनमित्ययुक्तम् -

उत्तरमन्थसम्बन्धमाह - एवं तावदित्यादिना । तत्र सर्वासु श्रुतिषु स्मृतिषु च कर्मैव विहितं यत्नपूर्वकम् । अतः कर्मैव मुक्तिसाधनम् इत्यत्र शास्त्रतात्पर्यं समाम्यत इत्यत, आत्मज्ञानस्य सद्भावे प्रमाणं न समाम्यत इति यदुक्तं तन्निराचष्टे समनन्तरश्लोक इत्याह - अथेति ॥ श्रुत्यादीनामपि यत्नाधिक्यदर्शनं तावत् न कर्मण एव मोक्षं प्रति पुष्कलकारणत्वे युक्तिः । तथान्यथाप्युपपद्यमानत्वात् इत्याह - श्रुतयः इति ॥ कामिनामानन्त्यात् कामानामप्यानन्त्यम् । कामावाप्तये च कर्माणि विधीयन्ते । स प्रधानोपाय-त्वात् । न चैतावता कर्मणो मोक्षसाधनत्वं ज्ञानस्य तदसाधनत्वं वा समाम्यत इति भाव ॥ ८५ ॥

ननु बहूनि कर्मवाक्यानि । अत एव समाम्यते कर्मणः साधनत्व मित्युक्तम् । तत्राह - न चेति । 'अत आह' इति पूर्ववद्व्याख्येयम् ॥

प्रामाण्यायेति । प्रमाणस्य हि प्रामाण्यं स्वत एव । तत्रैकस्य प्रमाणस्यान्यापेक्षा निमतिशयायां भवेत् ? न ह्येकस्मिन् वस्तुनि प्रमेये बहूनि मानानि प्रमाणतामर्हन्ति प्रामाण्यं प्राप्नुवन्ति । किं त्वेकत्र प्रमेये एकमेव मानमिति स्थितिः । यत्तु प्रमाणसंप्लववादिनः प्राहुः -'प्रमाणान्यनेकान्यपि प्रमेयमभिसंप्लवन्ते कदाचित् । तद्यथा 'अमुत्राग्निः' इत्याप्तोपदेशात् अग्निं प्रत्याहितप्रत्ययो लौकिकः तं देशं गच्छति । प्रत्यासीदन् पुनर्धूमविशेषेण धूमाद्रित्वेन व्यवस्थितं हुतभुजं प्रतिपद्यते । आसन्नतरस्तु इदानीम् .

वस्तुतन्त्रमेव। तच्च स्वोत्पत्तिमात्रेण सकलानर्थहेतोरज्ञानस्योत्सारि विनाशकम्। तावतैव च मुक्तिहेतुरिति नाभ्यासापेक्षमिति पूर्वमेव (१-६७) समावेदित मित्यर्थ ॥

ज्ञानविध्यङ्गीकारेऽपि नापूर्वविधिः –

अथ प्रौढिवादेन विधिमङ्गीकृत्यापि तस्यापूर्वविधित्व निराकरोति – **विध्यभ्युपगमेऽपीति**। अपिशब्दस्यायमर्थ। 'नेद यदिदमुपासते' (के ५), 'न दृष्टेर्द्रष्टार पश्ये' (बृ ३-४-२)-इत्यादय श्रुतयो ब्रह्मण परमार्थत एव उपासनाविषयत्व द्रष्टव्यत्व च निषेधन्ति। अतो न विध्यर्था उदाहृता श्रुतय। अथापि त्वत्परितोषार्थं विधिरभ्युपगन्तव्य, तर्हि नायमपूर्वविधि रग्निहोत्रादिविधिवत्। अत्यन्तमप्राप्त्यभावादिति ब्रूम इति ॥

कीदृशस्तर्हि विधि ? तत्राह – **नियमः परिसङ्ख्या इति**। एव ह्यपूर्वनियमपरिसङ्ख्याविधीनां लक्षणभेदो वर्णित 'विधिरत्यन्तमप्राप्ते नियम पाक्षिके सति। तत्र चान्यत्र च प्राप्ते परिसङ्ख्येति कीर्त्यते' (त वा १-२ ३४, पृ १५२) इति। यदा ह्यात्मस्वरूपविज्ञानेन देहाद्यात्माभिमान रूपमज्ञान निवृत्तम्, तदा विषयध्यानाद्यसंभवादात्मचिन्तैव भवति। तस्मात् तस्मिन् पक्षे न विधातव्यमुपासनम्। प्राप्तत्वात्। तथापि प्रारब्धकर्मवशाद् यदा शरीरस्थितिहेतुषु कर्मसु प्रवृत्तिर्भवति तदा ज्ञानदौर्बल्यमपि प्राप्तम्। अतोऽस्मिन् पक्षे आत्मविज्ञानसन्ततिर्नियन्तव्या भवतीति नियमविधि स्यात्। अत्र च 'आत्मेत्येवोपासीत', 'आत्मा वा' इति चावधारणशब्दोऽनुकूलो भवति। अथवा आत्मदर्शनवत् अनात्मदर्शनस्यापि सत्त्वात्, 'अनात्मा न द्रष्टव्य' इति परिसंख्यानार्थं विधि स्त्रीक्रियताम्। तदेव यतो नियम परिसंख्या वापि विध्यर्थो भवेत्, अत अनात्मादर्शनेनैव परात्मान-मुपास्महे। न तत्रापूर्वविधिरपेक्षित। प्राप्तत्वादेवेति भाव। अत्र विध्यभ्युपगमो विधिवादस्य दौर्बल्यसिद्ध्यर्थमेव न तु वस्तुवृत्तेन विधि संभवतीति न प्रसर्तव्यम्। आत्मोपासनस्य हि नात्यन्तमप्राप्ति। न वा पक्षे प्राप्ति, नाप्यात्मानात्मनोरुपासनस्य तुल्यवत् प्राप्ति। न हि बाह्यविषयसंबन्धे

तदसम्बन्धे वा चित्तस्य प्रत्यगात्मसंसर्गः कदापि विच्छिद्यते । अत एव बृहद्वार्तिके नियमपरिसंख्याविधिपक्षौ विस्तरेण निराकृतौ (बृ वा १-४-९२१ प्रभृति ९३१ पर्यन्तम्, २-४-१४६) इत्येते । तस्माद्विधिपक्ष दौर्बल्यार्थमेवात्राभ्युपगमवाद इत्यलमतिविस्तरेण ॥ ८८ ॥

(मूलम्)

यच्चोक्तं 'विश्रामो नान्यतोऽस्ति नः' (१-१५) इति तदपि निद्रातुरचेतसा त्वया स्वप्नायमानेन प्रलपितम् । किं कारणम् ? न हि वयं प्रमाणबलेन ऐकात्म्यं प्रतिपद्यामहे । ऐकात्म्यस्य स्वत एवानुभवमात्रात्मकत्वात् । अत एव सर्वप्रमाणानवतारासंभवं वक्ष्यति । प्रमाणव्यवसायाश्च अनुभवमात्राश्रयत्वात् । अत आह –

वाक्यैकगम्यं यद्वस्तु नान्यस्मात् तत्र विश्वसेत् ।
नाप्रमेये स्वतःसिद्धेऽविश्वासः कथमात्मनि ॥ ८९ ॥

यदप्युक्तम् 'अन्तरेण विधिम्' (१ १६) इति, तदप्यबुद्धिपूर्वकमिव नः प्रतिभाति । यस्मात् कालान्तरफलदायिषु कर्मसु एतद् घटते । आत्मलाभकाल एव फलदायिनि त्वात्मज्ञाने नैतत् समञ्जसम् इत्याह –

ज्ञानात्फले ह्यवाप्तेऽस्मिन् प्रत्यक्षे भवघातिनि ।
उपकाराय तच्चेति न न्याय्य भाति नो वचः ॥ ९० ॥

(क्लेशापहारिणी)

आत्मनि प्रमाणापेक्षा, अविश्वासो वा न संभवति –

तदेवमात्मज्ञाने शास्त्रप्रामाण्य दर्शितम् । तच्च शास्त्रम् अज्ञाननिवर्तन मुखेनैव प्रमाणमात्मनि, नाज्ञातज्ञापनेनेति स्फुटीकरणार्थं 'विधिं विना

वस्तुतन्त्रमेव। तच्च स्वोत्पत्तिमात्रेण सकलानर्थहेतोरज्ञानस्योत्सारि विनाशकम्। तावतैव च मुक्तिहेतुरिति नाभ्यासापेक्षमिति पूर्वमेव (१-६७) समावेदित मित्यर्थः॥

ज्ञानविध्यङ्गीकारेऽपि नापूर्वविधिः –

अथ प्रौढिवादेन विधिमङ्गीकृत्यापि तस्यापूर्वविधित्वं निराकरोति – विध्यभ्युपगमेऽपीति। अपिशब्दस्यायमर्थः। 'नेदं यदिदमुपासते' (के ५), 'न दृष्टेर्द्रष्टारं पश्येः' (बृ ३-४-२)-इत्यादयः श्रुतयो ब्रह्मणः परमार्थत एव उपासनाविषयत्वं द्रष्टव्यत्वं च निषेधन्ति। अतो न विध्यर्था उदाहृता श्रुतयः। अथापि त्वत्परितोषार्थं विधिरभ्युपगन्तव्यः, तर्हि नायमपूर्वविधि रग्निहोत्रादिविधिवत्। अत्यन्तमप्राप्त्यभावादिति ब्रूम इति॥

कीदृशस्तर्हि विधिः? तत्राह – नियमः परिसङ्ख्या इति। एवं ह्यपूर्वनियमपरिसङ्ख्याविधीनां लक्षणभेदो वर्णितः 'विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्ते परिसङ्ख्येति कीर्त्यते' (त. वा १-२-३४, पृ १५२) इति। यदा ह्यात्मस्वरूपविज्ञानेन देहाद्यात्माभिमान रूपमज्ञानं निवृत्तम्, तदा विषयध्यानाद्यसंभवादात्मचिन्तैव भवति। तस्मात् तस्मिन् पक्षे न विधातव्यमुपासनम्। प्राप्तत्वात्। तथापि प्रारब्धकर्मवशाद् यदा शरीरस्थितिहेतुषु कर्मसु प्रवृत्तिर्भवति तदा ज्ञानदौर्बल्यमपि प्राप्तम्। अतोऽस्मिन् पक्षे आत्मविज्ञानसन्ततिर्नियन्तव्या भवतीति नियमविधिः स्यात्। अत्र च 'आत्मेत्येवोपासीत', 'आत्मा वा' इति चावधारणशब्दोऽनुकूलो भवति। अथवा आत्मदर्शनवत् अनात्मदर्शनस्यापि सत्त्वात्, 'अनात्मा न द्रष्टव्यः' इति परिसंख्यानार्थं विधिः स्वीक्रियताम्। तदेव यतो नियमः परिसङ्ख्या वापि विध्यर्थो भवेत्, अतः अनात्मादर्शनेनैव परात्मानमुपास्महे। न तत्रापूर्वविधिरपेक्षितः। प्राप्तत्वादेवेति भावः। अत्र विध्यभ्युपगमो विधिवादस्य दौर्बल्यसिद्ध्यर्थमेव न तु वस्तुवृत्तेन विधिः समवतीति न प्रसर्तव्यम्। आत्मोपासनस्य हि नात्यन्तमप्राप्तिः। न वा पक्षे प्राप्तिः, नाप्यात्मानात्मनोरुपासनस्य तुल्यवत् प्राप्तिः। न हि बाह्यविषयसंनन्धे

तदसम्बन्धे वा चित्तस्य प्रत्यगात्मसम्बन्धः कदापि विच्छिद्यते । अत एव बृहद्वार्तिके नियमपरिसंख्याविधिपक्षौ विस्तरेण निराकृतौ (बृ. वा १-४-९२१ प्रभृति ९३१ पर्यन्तम्, २-४-१४६) इत्येते । तस्माद्विधिपक्ष दौर्बल्यार्थमेवात्राभ्युपगमवाद इत्यलमतिविस्तरेण ॥ ८८ ॥

( मूलम् )

यच्चोक्तं 'विश्वासो नान्यतोऽस्ति नः' (१-१५) इति तदपि निद्रातुरचेतसा त्वया स्वपायमानेन प्रलपितम् । किं कारणम् ? न हि वयं प्रमाणबलेन ऐकात्म्यं प्रतिपद्यामहे । ऐकात्म्यस्य स्वत एवानुभवमात्रात्मकत्वात् । अत एव सर्वप्रमाणावतारासंभवं वक्ष्यति । प्रमाणव्यवस्थायाश्च अनुभवमात्राश्रयत्वात् । अत आह –

वाक्यैकगम्यं यद्वस्तु नान्यस्मात् तत्र विश्वसेत् ।
नाप्रमेये स्वतःसिद्धेऽविश्वासः कथमात्मनि ॥ ८९ ॥

यदप्युक्तम् 'अन्तरेण विधिम्' (१-१६) इति, तदप्यबुद्धिपूर्वकमिव नः प्रतिभाति । यस्मात् कालान्तरफलदायिषु कर्मसु एतद् घटते । आत्मलाभकाल एव फलदायिनि त्वात्मज्ञाने नैतत् समञ्जसम् इत्याह –

ज्ञानात्फले ह्यवाप्तेऽस्मिन् प्रत्यक्षे भवघातिनि ।
उपकाराय तन्नेति न न्याय्यं भाति नो वचः ॥ ९० ॥

( क्लेशापहारिणी )

आत्मनि प्रमाणापेक्षा, अविश्वासो वा न संभवति –

तदेवमात्मज्ञाने शास्त्रप्रामाण्यं दर्शितम् । तच्च शास्त्रम् अज्ञाननिवर्तनमुखेनैव प्रमाणमात्मनि, नाज्ञातज्ञापनेनेति स्फुटीकरणार्थं 'विधिं विना

निष्प्रमाणकमर्थं न विश्वसिमो वयम्' इति पूर्वपक्षयुक्तिं प्रति उत्तरत्वेन आगामि ग्रन्थमवतारयति – यच्चोक्तमिति । यदप्युक्तं श्रुतिस्मृतिभ्यामन्यत्रास्माकं विश्वासो नास्तीति (१५), तदप्यज्ञाननिद्राग्रस्तचित्तेन त्वया स्वप्नायमानेन मिथ्यादर्शनव्यग्रेण यत्किञ्चित् प्रलपितम्, न तु विवेकपूर्वकमुक्तमित्यर्थः । अभिप्रायं विवृण्वन् प्रश्नमवतारयति–किं कारणमिति । ऐकात्म्यस्य हि अनुभवमात्र स्वरूपम् । अतो न तस्य प्रमाणबलेन सिद्धिं ब्रूमः । अत एव मूलकृद् द्वितीयाध्याये सर्वप्रमाणानामप्यात्मन्यवतारासंभव इति वक्ष्यति । कथं वक्ष्यतीत्याह 'प्रमाणव्यवस्थाश्रये'ति । प्रमाणसिद्धेरपीत्यर्थः । अनुभवमात्राश्रयत्वात्, अनुभवस्वरूपात्माश्रयणेनैव स्वरूपलाभादित्यर्थः । 'यतो राद्धिः प्रमाणानां स कथं तैः प्रसिध्यति' (२–३७) इति श्लोकार्थपरामर्शोऽयम् ॥

वाक्यैकगम्यमिति । यद्वस्तु धर्माधर्मादिकं वाक्यैकगम्यं केवलं श्रुत्यादिवाक्यप्रमाणादेव ज्ञातव्यम्, तत्र वस्तुनि विषये श्रुत्यादिवाक्याद् अन्यस्मात् प्रमाणान्तरात् न विश्वसेत् श्रद्दध्यात् । अप्रमेये तु स्वात्मनि न तथा । कुतः ? प्रमाणापेक्षाभावादेव । कथं तदप्रमेयस्य वस्तुनः सिद्धिः ? तत्रोत्तरं 'स्वतःसिद्धेः' इति । न हि प्रमाणतः कादाचित्कसिद्धावेव वस्तु सिद्धं भवतीति नियमः, येन प्रमाणापेक्षयैव सिद्धिरपेक्ष्या भवेत् । आत्मा तु स्वतः सिद्ध इति तस्मिन् कथमविश्वासः ? स्वतःसिद्धत्वादेव हि नान्यापेक्षा भवति, नाप्यविश्वासः । 'आत्मनि' इति च साभिप्रायो निर्देशः । विश्वासो ऽविश्वासो वा आत्मनोऽन्यत्र हि संभवति, न त्वात्मनि । अविश्वसितुरप्यात्मत्वात्, इत्यभिप्रायः ॥ ८९ ॥

ज्ञानस्य निष्फलत्वोक्तिरनुभवविरुद्धा –

नन्वेवमपि विधिमन्तरेण ज्ञाने प्रवृत्तिर्व्यर्थेत्युक्तम् । तत्र कः परिहार इति ? तदेतदनूद्य परिहरति – यदप्युक्तमिति । आत्मनस्तावत् स्वात्मनि न प्रवर्तकप्रमाणापेक्षा । आत्मत्वादेव । न चात्मज्ञाने विधिः संभवतीत्युक्तम् । अथाऽऽत्मज्ञाने विध्यभावात् प्रयोजनाभावश्चोद्यते, तत्राह – तदपीत्यादि ॥

ज्ञानादिति । आत्मज्ञानात्, भवघातिनि अज्ञाननिवृत्तिद्वारेण संसारनाशके अस्मिन् फले प्रत्यक्षे सत्यपि तज्ज्ञानं नोपकाराय निष्फलम् इति वचः। नः अस्माकं न न्याय्यं भाति । भुजिमाध्यायां तृप्तावनुभूयमानायामेव तामपह्नुवान इवानुभवापलापी भवान् कथमुपादेयवचनः स्यात् ? – इति भावः ॥ ९० ॥

( मूलम् )

यदपि जैमिनीयं वचनम् उद्धाटयसि तदपि तद्विवक्षाऽपरिज्ञानादेवोद्धाट्यते । किं कारणम् ? यतो न जैमिनेरयमभिप्रायः 'आम्नायः सर्व एव क्रियार्थ' इति । यदि ह्ययम् अभिप्रायोऽभविष्यत् 'अथातो ब्रह्मजिज्ञासा' (वे.सू. १-१-१), 'जन्माद्यस्य यतः' (वे. सू. १-१-२) – इत्येवमादिब्रह्मवस्तुस्वरूपमात्रयाथात्म्यप्रकाशनपरं गम्भीरन्यायसंदृब्धं सर्ववेदान्तार्थमीमांसनं श्रीमच्छारीरकं नाऽसूत्रयिष्यत् । असूत्रयच्च । तस्माज्जैमिनेरेवायमभिप्रायः । यथैव विधिवाक्यानां स्वार्थमात्रे प्रामाण्यम्, एवमैकात्म्यवाक्यानामपि । अनधिगतवस्तुपरिच्छेदसाम्यात् इति । अत इदमभिधीयते –

अधिचोदनं य आम्नायस्तस्यैव स्यात्क्रियार्थता ।
तत्त्वमस्यादिवाक्यानां ब्रूत कर्मार्थता कथम् ॥ ९१ ॥

( क्लेशापहारिणी )

आम्नायस्य क्रियार्थत्वमित्येतत्कर्मकाण्डविषयम् –

'आम्नायस्य क्रियार्थत्वात्' (१-१७) इत्युक्तमनूद्य निराकरोत्यागामि श्लोकः । तदाह – यदपीति । आम्नायस्येत्यादि जैमिनीयं वचनमुद्धाटयसीति यत् तदपि तद्विवक्षापरिज्ञानादेव जैमिनितात्पर्यज्ञानाभावादेव उद्धाट्यते । किं कारणम् ? कस्मादेवमवगम्यत इति प्रश्नः । उत्तरमाह – यत इति ।

आम्नायस्येत्यादि पूर्वपक्षसूत्रमित्युक्तम् । तत्राम्नायपदेन न वेदसामान्य विवक्षित जैमिने । तेन धर्मजिज्ञासार्थमेव शास्त्रप्रणयनात्, 'चोदनालक्षणोऽर्थो धर्म' (जै सू १–१–२) इति चोदनागम्यस्यैव कर्मणो लक्षितत्वाच्च कर्मकाण्ड एव विवक्षित इति गम्यते । अत एव हि तत्रस्थानामक्रियार्थानाम् आनर्थक्य पूर्वपक्षेणाशङ्क्य परिहरति 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीना स्यु' (जै सू १–२–७) इति । 'सोऽरोदीत्' (तै स १–५ १) इत्यादीनि हि वाक्यानि ॥ कर्तव्यक्रियामवगमयन्ति, न वा क्रियासबद्ध किञ्चित् । अतस्तानि कस्मिन् धर्मे प्रमाणानि स्यु ? – इत्याशङ्क्याय परिहार । न तु जैमिनिना वस्तुस्वरूपबोधकवाक्यान्यपि विचारयितुमिष्टानि, येन क्रियार्थानीत्यनेन तान्यपि विवक्षितानि स्युरित्यर्थ ॥

तत्कथमिदमवगम्यते सर्व एवाम्नायो न विचिचारयिषितो जैमिनिनेति ? तत्राह – यदीति । यदि जैमिनेरयमभिप्रायोऽभविष्यत्, तर्हि श्रीमच्छारीरक नासूत्रयिष्यत् । भगवान् बादरायण इति शेष । ब्रह्मवस्तुस्वरूपमात्र याथात्म्यप्रकाशनपरमिति । यद्यपि शारीरके ब्रह्मोपासनान्यपि चिन्तितानि प्राणोपासनादीनि च, तथापि न तत्परमद शास्त्रम् । 'अथातो ब्रह्मजिज्ञासा' (वे सू १–१–१) इति ब्रह्मण एव जिज्ञास्यत्वेन प्रतिज्ञातत्वात्, 'जन्माद्यस्य यत' (वे सू १–१–२) इति तस्यैव लक्षणप्रणयनात्, 'शास्त्रयोनित्वात्' (वे सू, १–१–३) इति च तस्मिन्नेव वेदप्रामाण्योपन्यासात् चेत्यभिसंधाय 'इत्येवमादि ब्रह्मवस्तुस्वरूपमात्रयाथात्म्यप्रकाशनपरम्' इति विशेषणमपि उक्तमिति शेयम् । आदिशब्देन 'तत्तु समन्वयात्' (वे सू १–१–४) इति सूत्रस्य ग्रहणम् । वेदान्तवाक्याना तद्गतपदाना च ब्रह्मवस्तुन्येव समनुगत त्वाभिधानाच्च । उपासनावाक्याना तु पूर्वतन्त्रामीमांसितत्वादत्र पूर्वतन्त्रन्यायैरेव चिन्ता प्रतायते मन्दमध्यमाधिकारिणामनुग्रहार्थमिति भाव । उपलक्षणमेतत् । 'अरूपवदेव हि तत्प्रधानत्वात्' (वे सू ३–२–१४) इति भगवता बादरायणेन ब्रह्मवाक्याना निष्प्रपञ्चब्रह्मवस्तुप्रधानत्वसंसूत्रणात् इत्यपि द्रष्टव्यम् । तेन हि विधिप्रधानेभ्यो वाक्येभ्यो वस्तुमात्रपराण्यपि वाक्यानि

विचारितानि शारीरके इति लेखस्यति । ननु तर्हि शारीरकम् अप्रमाणत्वेनोपेक्ष्यमेव धर्ममीमांसाविरुद्धत्वात् इत्याशङ्क्याह 'गम्भीरन्यायसंदृब्धं सर्ववेदान्तार्थमीमांसनम्' इति । अयं भावः । यथा प्राची मीमांसा, तथा इयमपि मीमांसैव । वेदान्तवाक्यार्थनिर्णयार्थं पृथक्प्रवृत्तत्वात् । यथा च पूर्वमीमांसा स्वोचितगम्भीरन्यायसंदर्भसहिता तथैवेयमपि तया अनवगतमर्थं ब्रह्मस्वरूपं निर्धारयतीति नानादरणकारणमस्तीति । अमुमर्थयच्च भगवान् बादरायणः पृथग्मीमांसनम् । तदेवं पृथक्शास्त्रारम्भान्यथानुपपत्तिरवगमयति जैमिनेः सर्वं एवाम्नायः क्रियार्थं इति नाभिप्राय इति । अन्यथा हि पूर्वमीमांसयैव गतार्थत्वात् पृथक्शास्त्रं नैवारम्भेतेत्याशयः । तस्माज्जैमिनेरेव भवदभिमतप्रामाण्यस्य अयमभिप्रायोऽवगम्यते यथैव विधिवाक्यानां स्वार्थमात्रे प्रामाण्यम्, एवमेवैकात्म्यवाक्यानामपि अनधिगतवस्तुपरिच्छेदसाम्यादिति । जैमिनिर्हि 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे, तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' (जै. सू. १-१-५) इति सूत्रयन् अनधिगतस्याबाधितस्य च प्रमेयस्य परिच्छेदनं प्रामाण्ये कारणं ब्रवीति शास्त्रस्य । तस्मात्, यथा विधिवाक्यानां स्वार्थमात्रे कर्मणि प्रामाण्यम्, एवमैकात्म्ये वेदान्तवाक्यानामपि स्वप्रमेयपरिच्छेदसाम्यात् प्रामाण्यमिति जैमिनेरेवाभिप्रायः संवृत्त इति भावः ॥

एतावता किं निष्पन्नमित्युत्तरश्लोके अभिधीयत इत्याह—अत इदमिति । अधिचोदनमिति । श्लोके वर्णाधिक्यं कथञ्चित् समाधेयम्[1] । चोदनामधिकृत्य य आम्नायः, तस्यैव स्यात् क्रियार्थता जैमिनेरपि । तत्त्वमस्यादिवाक्यानाम् अकर्मप्रकरणस्थानां तात्पर्येणैकात्म्यं ब्रुवतां कर्मार्थता कथम् ? इत्येतद् ब्रूत, यदि शक्नुथेति शेषः । न हि तात्पर्येण स्वार्थं ब्रुवतां भिन्नवाक्यत्वे सिद्धेऽप्येकवाक्यता शक्यकल्पनेति भावः । यद्यपि कर्मणां चित्तशुद्धिद्वारेण ज्ञानकाण्डवाक्यार्थशेषत्वं सिद्धान्तिभिः स्वीकृतमस्ति तथापि तत्र 'विविदिषन्ति यज्ञेन' (बृ. ४-४-२२) इत्यादि विनियोजकप्रमाणवशादेकवाक्यत्व-

1. 'अधि चोदनमाम्नायः' इति पाठः केषाञ्चित् ।

मङ्गीक्रियते । न त्वेवं वेदान्तवाक्यानां क्रियावाक्यैः सहैकवाक्यत्वे प्रमाणमस्तीति वैषम्यम् । एतच्च सर्वं ग्रन्थकृद्भिरेव संबन्धवार्तिके निपुणतरमुपपादितमिति तत एवाधिगन्तव्यमित्यलं विस्तरेण ॥ ९१ ॥

( मूलम् )

अपि च, ऐकात्म्यपक्ष इव अदृष्टार्थकर्मसु भवत्पक्षेऽपि प्रवृत्तिर्दुर्लक्ष्या । यतः –

स्वर्गं यियासुर्जुहुयादग्निहोत्रं यथाविधि ।
देहाद्व्युत्थापितस्यैवं कर्तृत्वं जैमिनेः कथम् ॥ ९२ ॥

न च प्रत्याख्याताशेषशरीरादिकर्मसाधनस्वभावस्याऽऽत्ममात्रस्य कर्मस्वधिकारः । यस्मात् –

सर्वप्रमाणासंभाव्यो ह्यहंवृत्त्यैकसाधनः ।
युष्मदर्थमनादित्सुर्जैमिनिः प्रेर्यते कथम् ॥ ९३ ॥

प्रवृत्तिकारणाभावाच्च । यस्मात् –

सुखदुःखादिभिर्योग आत्मनो नाहमेष्यते ।
परात्त्वात् प्रत्यगात्मत्वाज्जैमिनिः प्रेर्यते कथम् ॥ ९४ ॥

( क्लेशापहारिणी )

पूर्वपक्षिमतेऽप्यात्मनः शास्त्रीयकर्मसु न कर्तृत्वमस्ति –

अथाधुना 'कुर्वन्नेवेह कर्माणि' इति श्रुतिविरोधो य उद्भावितः (१–१८), तं परिजिहीर्षुरदृष्टार्थकर्मसु प्रवृत्तिरविद्या विना नोपपद्यत इति पूर्वोक्तं स्मारयंस्तावदाह – अपि चेति । ऐकात्म्यपक्षे तावत् क्रियाकारकफलभेदस्य अविद्याविषयत्वावगमात्, अशरीरस्यात्मनः कर्मसु प्रवृत्तिर्न संगच्छत इति स्फुटमेव । इदानीं भवत्पक्षेऽपि कर्मवादिपक्षेऽपि अदृष्टार्थकर्मसु पारलौकिक-

कर्मसु प्रवृत्तिर्यथा दुर्लक्ष्या दु खेनापि न लक्ष्यते, निष्प्रमाणकत्वात्, तथा हेतुभिरुपपादयाम इत्यर्थ । हेतुप्रदर्शनायाऽऽह – यत इति ॥

स्वर्गं यियासुरिति । स्वर्गं यियासु गन्तुमिच्छु अग्निहोत्र यथाविधि जुहुयात् । 'अग्निहोत्र जुहुयात् स्वर्गकाम ' इति वाक्यस्यार्थत पठनमिदम् । एवम् इत्येवमादिभिर्वाक्यै देहाद् व्युत्थापितस देह विहायैव आत्मा वर्तत इति बोधितम्येत्यथ । तस्य शरीरातिरिक्तात्मज्ञानिन कर्तृत्व कथ स्यात् ? न हि शरीर विना अग्निहोत्रादि क्रियत इति भाव । जैमिनेरिति जैमिनि मतेऽपीत्यर्थ ॥ ९२ ॥

केवलाहप्रत्ययगम्यस्यात्मनः कर्मसु नाधिकारः –

एतदेव विशदयितुमुत्तरश्लोक इत्याह – न चेति ॥ सर्वप्रमाणेति । सर्वैरिन्द्रियादिभि प्रमाणै, असभाव्योऽनाकलनीयाऽस्तित्व । अहङ्कृत्यैक साधन अहङ्कृत्या एकयैव असाधारणया साध्यते इति । अहप्रत्ययमात्रगम्य इति यावत् । कर्ममीमासकैरात्मनस्तथात्वेनोपगमात् । युष्मदर्थम् अहङ्कार व्यतिरिक्त देहेन्द्रियविषयादिकम् इत्यर्थ । अनादित्सु उपादातुमनिच्छन् । देहेन्द्रियादिरहित इति यावत् । जैमिनि जैमिनिमतानुयायीत्यर्थ । कथ कर्मसु प्रेर्यते प्रवर्त्यते ? न हि देहेन्द्रियादिष्वहममाभिमानहीन कर्मस्वधिक्रियत इति भाव । युष्मदर्थम् अहङ्कारादिलक्षणम् इति तु न सम्यग्व्याख्यानम् । अहङ्काराश्रयस्यैव पूर्वपक्षिणा आत्मत्वेन स्वीकारात् । केवलाहप्रत्ययगम्य आत्मा न कथञ्चन प्रवर्तेत होमादिषु शारीरेन्द्रियाद्यपेक्षेषु इति वाक्यार्थ ॥ ९३ ॥

शरीरातिरिक्तात्मनः कर्मफलभोक्तृत्वं न संभवति –

तदेव कर्तृत्वम् अधिकारित्व वा कर्मसु न समवत्यात्मन इत्युपपादितम् । इदानीं तस्य फलभोक्तृत्वमपि न सगच्छत इत्याह – प्रवृत्तिकारणाभावाच्चेति । प्रयोजनाभावाच्चेत्यर्थ । तत्र हेतुमाहोत्तरश्लोक इति समवतारयति – यस्मात् इति ॥

सुखदुःखादिभिरिति ॥ अहमा अहंप्रत्ययिना आत्मत्वेन भवदभिमतेनेत्यर्थ । आत्मन सुखदु खादिभिर्योग संबन्ध नेक्ष्यते न विषयीकर्तुं शक्यते । विषयिण स्वस्यैव स्वविषयत्वानुपपत्ते स्वस्य सुखदु खसंबन्ध स्यापीक्षण दुर्लभमिति भाव । तदेव स्पष्टयति – परात्त्वादिति । सुख दु खादीना परात्त्वात् बाह्यविषयत्वात् । स्वस्य चाहंप्रत्ययिरूपात्मन प्रत्यगात्मत्वात् प्रत्यक्स्वरूपत्वात् । तदेवमात्मन सुखदु खसंबन्धेक्षणस्या संभावितत्वे सति जैमिनि तन्मतानुयाया कर्ममीमासक कथ प्रेर्यते ? न हि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्तत इति भाव ॥ ९४ ॥

उक्तार्थ एवोपष्टम्भकयुक्तिमाह समनन्तरोत्तरश्लोक इति तमवतार यति – किं चेति ॥

न तावदिति । आत्मन शरीरेण योग एव सदा नास्ति । शरीरेणैव संबन्धुम् योग्यैर्विषयैर्योगस्तु दूरतोऽपि नास्ति । नतरा संभाव्यत इत्यर्थ । एव स्थिते स्वर्गादौ सुख कथ स्यात् ? अत्यन्तासभावितमेतदित्यभिप्राय । न चात्मकृतधर्माधर्मनिमित्त शरीरयोग संभवतीति शङ्क्यम् । शरीर विना धर्माधर्मयोरशक्यकरणात् । शरीरयोगस्य चाद्याप्यसिद्धे । शरीरयोगसिद्धौ धर्माधर्मसिद्धि, तत्सिद्धावेव च शरीरयोगसिद्धिरिति सिद्धयो परस्परमुख निरीक्षणकाङ्क्षाप्रसङ्गात् । पूर्वपूर्वजन्मकृतयो धर्माधर्मयो उत्तरोत्तरजन्मनि शरीरयोग कार्यम् – इति ब्रुवाणस्य तु न क्वचिदपि धर्माधर्मसिद्धिरद्यापि निष्पन्नेति निर्हेतुकमेवानादित्व धर्माधर्मतत्कृतशरीरयोगयो सन्तानस्य कल्प यितुरन्धपरम्परैवापतेत् न कथमपीष्ट शरीरयोग सिध्येत् इति ॥ ९५ ॥

( मूलम् )

यस्मादन्यथा नोपपद्यते –

नराभिमानिनं तस्मात्कारकाद्यात्मदर्शिनम् ।
मन्त्र आशीरीकृत्य दुर्गेभिरिति न निर्दयम् ॥ ९६ ॥

( कृशानदारिणी )

अविद्यावन्तमभ्युपगम्यैव कर्मविधिः —

ननु तर्हि कर्मविषयः सुतरामविषया इत्यप्रमाणत्वमेव तेषामायातम् इत्याशङ्क्य प्रकारान्तरेण तेषां सविषयत्वसंभवाचैवमित्यर्थकत्वेन भाविश्लोकमवतारयति — यस्मादिति । अन्यथा क्रियाकारकफलानाम् अविद्याविद्यमानत्वमनङ्गीकृत्य आत्मनः कर्मसु प्रवृत्तिर्नोपपद्यते यस्मात् तस्मादिति श्लोकस्यैनान्वयः ॥

नराभिमानिनम् इति । 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' (ई. २) इत्येव मन्त्रः, नराभिमानिनम् आत्मानं मनुष्यमभिमन्यमानम्, कारकाद्यात्मदर्शिनम् क्रियाकारकफलान्वयिस्वरूपमात्मनि पश्यन्तम् । अधिकारिलक्षणान्वितोऽहमिति मिथ्याज्ञानिनम् इति यावत् । शरीरस्यैव अध्यारोपदृष्ट्या 'कुर्वन्' इति मन्त्र आह, न निर्द्वयम् अशरीरमेवाद्वितीयमात्मत्वेन निश्चितवन्तम् आत्मज्ञानिनं स्वीकृत्य । इत्यवगम्यत इति शेषः । नराभिमानिनं स्वीकृत्याह इति तु 'एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' इति वाक्यशेषाद्गम्यत इत्याशयः ॥ ९६ ॥

( मूलम् )

यच्चोक्तम् 'विरहय्य' (१-१९) इति तदपि नः[1] सम्यगेव । तथापि तु न या काचित् क्रिया यत्र क्व चाध्याहरणीया, किं तु या यत्राभिप्रेतसंबन्धं घटयितुं शक्नोति आकाङ्क्षां च वाक्यस्य पूरयति, सैवाध्याहरणीया । एवंविशिष्टा च क्रिया अस्माभिरभ्युपगतैव । सा तूपादित्सितवाक्यार्थाविरोधिन्येव नाभूतार्थप्रादुर्भावफला इति । षड्भावविकाररहितात्मवस्तुनो निर्धूताशेषद्वैतानर्थस्य, अपराधीन-

1. 'न सम्यगेव' इत्युक्त-पाठ. ॥

प्रकाशस्य, विजिज्ञापयिषितत्वात् 'असि', 'अस्मि' इत्यादि-क्रियापदं स्वमहिमसिद्धार्थप्रतिपादनसमर्थम् अभ्युपगन्तव्यम्, न विपरीतार्थप्रतिपादनपरम् इति ॥

धावेदिति न दानार्थे पदं यद्वत् प्रयुज्यते ।
एधीत्यादि तथा नेच्छेत् स्वतःसिद्धार्थवाचिनि ॥ ९७ ॥

न च यथोक्तवस्तुवृत्तप्रतिपादनव्यतिरेकेण तत्त्वमस्यादि-वाक्यं वाक्यार्थान्तरं वक्तीति शक्यमध्यवसातुम् इत्याह –

तत्त्वमस्यादिवाक्यानां स्वतःसिद्धार्थबोधनात् ।
अर्थान्तरं न संद्रष्टुं शक्यते त्रिदशैरपि ॥ ९८ ॥

( क्लेशापहारिणी )

आत्मवाक्ये अस्यादिसिद्धार्थबोधकक्रियापदमप्यस्ति –

ज्ञानविधायकं वाक्यं नास्त्येवेत्येतदपहस्तितम् । इदानीमात्मवस्तुनि वाक्यप्रामाण्याभ्युपगमात् क्रियापदाभावे वाक्यस्यैवाभावात् तद्विधायकं वाक्यं न संभवतीति यदुक्तम्, तदपि निरसिष्यत इत्याह – **यथोक्तमिति ।** यद्यपि 'सोऽयं पुरुषः', 'सुन्दरं वनम्' इत्यादिवाक्येषु क्रियां विनापि पदसंहतिर्दृश्यत एव, तथापि भवदुक्तमङ्गीकृत्यापि प्रतिवक्ष्यामीत्याह तदपि न सम्यगेवेति । तथापि तु क्रियापदापेक्षामङ्गीकृत्यापि तु न या काचित् क्रिया यत्र क्वचन समध्याहरणीया भवति । अतिप्रसङ्गात् । नाप्यवश्यं क्रियापदमध्याहर्तव्यमिति निर्बन्धो युक्त इति भावः । कीदृशी तर्हि क्रिया कुत्राध्याहरणीयेत्यत्र विनिगमनाहेतुर्वक्तव्य इत्यत आह – **किं त्विति ।** **एवंविशिष्टेति** । अभिप्रेतसंबन्धघटकत्ववाक्याकाङ्क्षापूरकत्वरूपोभयधर्म-विशिष्टेत्यर्थः । असदादित्सितो यो वाक्यार्थः, आत्मैकत्वरूपः, तेनाविरोधिन्येव यथावस्थितवस्तुस्वरूपप्रकाशनयोग्यैव । न त्वभूतार्थप्रादुर्भावफला न त्वपूर्वो-त्पत्त्यादिफला । इति हेतोरभ्युपगतैवेति संबन्धः । कीदृशमत्र क्रियापद-

धारय', इत्यादिरीत्योपासनापरतैवावसीयताम्, 'विज्ञाय प्रज्ञां कुर्वीत' इत्यादि-वाक्यस्य प्रज्ञाकरणविध्यपेक्षितविज्ञेयवस्तुसमर्पणपरता वा तत्राह–**न चेति।** वाक्यार्थान्तरम् अध्याहरणेन, विधिव्यसनितया वाक्यान्तरं प्रकल्प्य तदर्थं उपासनादिकं वक्तीति अध्यवसातुं निश्चेतुं वा न शक्यम् इत्याह। मूलकृत् इति शेषः॥

तत्त्वमसादीति॥ किमित्यर्थान्तरं संद्रष्टुं न शक्यते? तत्र हेतुः स्वतःसिद्धार्थबोधनादिति। स्वतःसिद्धार्थे एव वाक्यस्थानां पदानां समन्वयात्, तद्बोधकत्वेनैव वाक्यस्योपक्षीणत्वादित्यर्थः। यथा हि कर्मबोधकं वाक्यं वस्तुप्रतिपादकमिति न शक्यते कल्पयितुम्, एवमिहापि न कर्मादिपरत्वं शक्यते संभावयितुं त्रिदशैरप्यप्रतिहतैश्वर्यैर्देवैरपि। किमुत मानवैः। श्रुतहान्यश्रुतकल्पनाप्रसङ्गादिति भावः॥ ९८॥

(मूलम्)

यस्मादेवम्–

अतः सर्वाश्रमाणां तु वाङ्मनःकायकर्मभिः।
स्वनुष्ठितैर्न मुक्तिः स्याज्ज्ञानादेव हि सा यतः ॥ ९९॥

तस्माच्च कारणात् एतदप्युपपन्नम्–

स्वमनोरथसंकल्पप्रज्ञाध्मातधियामतः।
श्रोत्रियेष्वेव वाचस्ताः शोभन्ते नात्मवेदिषु ॥ १००॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीमच्छङ्करभगवत्पादशिष्य श्रीसुरेश्वराचार्यविरचितायां नैष्कर्म्यसिद्धौ ससबन्धोक्तौ प्रथमोऽध्यायः

(क्लेशापहारिणी)

प्रतिज्ञातार्थोपसंहारः–

अतो ज्ञानादेव मुक्तिरिति यत् प्रतिज्ञातमस्माभिस्तदेव युक्तम् न पूर्वपक्षोक्तम् इत्युपसंहरति – यस्मादिति॥

अत इति। स्पष्टार्थः श्लोकः॥ ९९॥

पूर्वपक्षयुक्तिनिरासोपसंहारः —

अत एव च 'इति दृष्टधियाम्' (१–२२) इत्यादि यदुक्तम् तदपि संगच्छत इति दूषणोपसंहारमाह — तस्माच्चेति ॥

स्वेति । कल्पितद्वैतविषयकः कर्मवादस्तावदेव शोभते यावत् परमार्थात्मवादो बुद्धौ नावतरतीत्यभिप्रायकः श्लोकः ॥ १०० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीपूज्यपादशङ्करभगवच्चरणस्मरणपरिचर्यावाप्त-
वेदान्तप्रवेशेन श्रीयोगानन्देन्द्रसरस्वतीशिष्येण श्रीसच्चिदानन्देन्द्रसरस्वत्याख्येन
भिक्षुणा प्रणीतायां नैष्कर्म्यसिद्धिव्याख्यायां
क्लेशापहारिण्यां प्रथमोऽध्यायः

ॐ तत्सत्

# अथ द्वितीयोऽध्यायः

( आत्मज्ञानप्रतिबन्धापनयनम् )

—: § :—

## १. अध्यायसंबन्धः

( मूलम् )

प्रत्यक्षादीनाम् अनेकविषयत्वात्, तेषां स्वारम्भक-विषयोपनिपातित्वात्, आत्मनश्च अशेषप्रमेयवैलक्षण्यात्, सर्वानर्थैकहेत्वज्ञानापनोदिज्ञानदिवाकरोदयहेतुत्वं वस्तुमात्र-याथात्म्यप्रकाशनपटीयसस्तत्त्वमस्यादेर्वचस एव – इति बह्वी-भिरुपपत्तिभिः प्रदर्शितम् । अतस्तदर्थाप्रतिपत्तौ यत् कारणम्, तदपनयनाय द्वितीयोऽध्याय आरभ्यते ॥

श्रावितो वेत्ति वाक्यार्थं न चेत् तत्त्वमसीत्यतः ।
त्वंपदार्थानभिज्ञत्वादतस्तत्प्रक्रियोच्यते ॥ १ ॥

( क्लेशापहारिणी )

प्रत्यक्षादीनां शब्दादिविषयमात्रग्राहकत्वम् –

वृत्तवर्तिष्यमाणयोरध्याययोः संबन्ध कथ्यते 'श्रावितो वेत्ति' इत्यादिश्लोकेन । तदेतद् विवरीतुकामः आह – प्रत्यक्षादीनामित्यादि ॥ अनेकविषयत्वात् स्वत सिद्धात्मवस्तुस्वरूपोऽविषयत्वादित्यर्थः । तदविषयत्वे हेतुमाचष्टे – स्वारम्भकविषयोपनिपातित्वात् इति । स्वारम्भकाः स्वस्य कारणभूता. ये शब्दादिविषया, तेष्वेव, उपनिपातित्वात् तद्विषयीकरण-स्वाभाव्यात् । पराक्प्रमेयमात्रविषयीकरणसामर्थ्यात् इति यावत् ।

प्रत्यक्स्वभाव शब्दादिरहित सविषयाणा करणानामपि प्रकाशयिता च चैतन्यैकस्वभाव इत्यतोऽशेषप्रमेयविलक्षण । अत आत्मन प्रमेयवैलक्षण्यादपि प्रत्यक्षादीनाम् अनेनविषयत्वमित्यभिप्राय ॥

वेदान्तवाक्यस्यैवात्मयाथात्म्यसमर्पकत्वम् –

नन्वेवम् आत्मनोऽप्रमेयत्वे वेदान्तवाक्यप्रमाणस्यापि नास्ति कृत्य तत्र इत्याशङ्क्याह – सर्वानर्थैकहेतोरिति । न हि शास्त्रमिदतया आत्मान विषयीकुर्वत् प्रामाण्यमश्नुते येनेत्थ पर्यनुयुज्येत, कथ तर्हि सर्वानर्थहेत्वज्ञानाप नोदितया । उक्त हि प्रकरणावतारिकाग्रन्थे 'द्वैतस्य च शुक्तिकारजतादिवत् सर्वस्यापि स्वत सिद्धाद्वितीयात्मानवबोधमात्रोपादानत्वादव्यावृत्ति । अत 'सर्वानर्थहेतुरात्मानवबोध एव' इति । तदिदमिहानूद्यते 'सर्वानर्थैक-हेत्वज्ञानापनोदिज्ञानदिवाकरोदयहेतुत्वं तत्त्वमस्यादेर्वचस' एवेति । एतेन सुखस्य चात्मस्वरूपत्वात्तस्याज्ञानापनोदेनैवाविर्भाव इति न तत्प्राप्त्यर्थं यत्नान्तरमाधेयमित्येतदप्यर्थादनूदितप्रायम् । ज्ञानेन अज्ञानापनोदन चेदमुक्त न वस्तुत एव विद्यमानस्याज्ञानस्य, पङ्कस्येव प्रक्षालनेन निवर्तनरूप व्यापार मुररीकृत्य, कथ तर्हि 'सर्वमिथ्याविकल्पनिषेधपूर्वक निर्विशेषात्मसतत्त्व कथनमात्रेणे'त्याशयेनोक्त 'वस्तुमात्रयाथात्म्यप्रकाशनपटीयस' इति वचसो विशेषणम् । वाक्य हि वस्तुमात्रस्याद्वितीयात्मनो याथात्म्य प्रकाशयति स्वात्मलाभमात्रेण न तु तत्रापूर्वातिशय कञ्चिदुत्पादयतीति ॥

वृत्तानुद्रवणपूर्वकं वर्तिष्यमाणाध्यायतात्पर्यकथनम् –

एव तावत् प्रथमाध्यायस्य विषय इह सगृहीत । तदिद 'बह्वीभि-रुपपत्तिभिः प्रदर्शितम्' अतीतग्रन्थे । अतो विस्तरस्तत्रैव द्रष्टव्य इति भावेन द्वितीयाध्यायस्य तात्पर्यमाह – 'अतस्तदर्थप्रतिपत्तौ' इति । यद्यपि तत्त्वमस्यादिवचस एव अज्ञानापनोदिज्ञानोदयहेतुत्वम्, तथापि न सर्वेषा निशामूर्ना तच्छ्रवणादज्ञानोच्छित्तिर्जायते वाक्यार्थज्ञानाभावात्तेषाम् । न हि वाक्य स्वविषयकज्ञानमनुत्पाद्य स्वयमेवाज्ञानमपनोदितु पारयति । ज्ञानस्यै वाज्ञानविरोधित्वात् । अथ कस्मात्ते वाक्यार्थ न जानन्ति ? उच्यते ।

पदार्थापरिज्ञानमेव वाक्यार्थज्ञानानुत्पत्तौ हेतुः। अतस्तदर्थाप्रतिपत्तौ वाक्यार्थापरिज्ञाने यत् कारणं तस्य पदार्थापरिज्ञानस्य अपनयनाय पदार्थशोधनार्थमयं द्वितीयोऽध्याय आरभ्यते इत्यर्थः ॥

**पदार्थज्ञानलक्षणप्रतिबन्धाद् वाक्यार्थाप्रतिपत्तिः –**

उक्ताध्यायार्थं श्लोकेन सगृह्णाति – श्रावित इति। तत्त्वमसि इत्यतो वाक्यात् वाक्यार्थं श्रावितोऽपि न वेत्ति चेत्, तद्वेदनं त्वंपदार्थानभिज्ञत्वात् इत्यतः तत्प्रक्रिया त्वंपदार्थविचारप्रकार उच्यते। अस्मिन् द्वितीयेऽध्याये इति शेषः। उक्तं च भगवत्पादैः – 'तत्त्वमस्यादिवाक्येषु त्वंपदार्थाविवेकतः। व्यज्यते नैव वाक्यार्थो नित्यमुक्तोऽहमित्यतः ॥ अन्वयव्यतिरेकोक्तिस्तद्विवेकाय नान्यथा ॥' (उप सा १८-१७४, १७५) इति। 'त्वंपदार्थानभिज्ञत्वात्' इत्युपलक्षणम्। तत्पदार्थानभिज्ञत्वादिरपि द्रष्टव्यम्। प्राधान्येन त्वंपदार्थविवेचनस्यैवापेक्षितत्वात्तु तदुपादानम्। अनभिज्ञानपदेन चात्र न केवलमज्ञानम्, किं तु तन्निबन्धनसंशयविपर्ययावपि गृह्येते। तयोरपि पदार्थज्ञानप्रतिबन्धकत्वेनेष्टत्वात्। उक्तं हि शारीरकभाष्ये – 'तत्र येषामेतौ पदार्थौ अज्ञानसंशयविपर्ययप्रतिबद्धौ तेषां तत्त्वमसीत्येतद् वाक्यं स्वार्थे प्रमां नोत्पादयितुं शक्नोति' (सू भा ४-१-२) इति। इदमुक्तं भवति–पदार्थज्ञानपूर्वकत्वाद् वाक्यार्थज्ञानस्य पदार्थापरिज्ञानमेव वाक्यार्थाप्रतिपत्तिकारणम्। अतोऽस्य वाक्यार्थज्ञानप्रतिबन्धस्यापनयनाय अयमध्याय आरभ्यत इति ॥ १ ॥

## २. वाक्यज्ञाने पूर्वः पक्षः

(मूलम्)

योऽयम् अहं ब्रह्मेति वाक्यार्थः, तत्प्रतिपत्तिर्नास्त्यादेव, प्रत्यक्षादीनामनेवंविषयत्वात् इत्यादिपक्षम्। तस्य विशुद्ध्यर्थम् अनैकान्तिकत्वं पूर्वपक्षत्वेनोपस्थाप्यते –

कृत्स्नानात्मनिवृत्तौ च कश्चिदाप्नोति निर्वृतिम् ।
श्रुतवाक्यस्मृतेश्चान्यः स्मार्यते च वचोऽपरः ॥ २ ॥

एतत्प्रसङ्गेन श्रोत्रन्तरोपन्यासमुभयत्रापि संभावनायाह –

वाक्यश्रवणमात्राच्च पिशाचकवदाशुधात् ।
त्रिषु यादृच्छिकी सिद्धिः स्मर्यमाणे तु निश्चिता ॥ ३ ॥

( क्लेशापहारिणी )

**पूर्वपक्षः** - वाक्यादन्यस्मादपि ज्ञानं भवति –

उत्तरश्लोकस्योत्थानमाह – **योऽयमिति** ॥ ब्रह्मात्मैक्यरूपस्य अर्थस्य प्रतिपत्तिर्वाक्यादेव केवलात्, प्रत्यक्षादीनामनेवविषयत्वात् इत्यवादिषम् । तस्य विशुद्धयर्थं निराकुलत्वप्रदर्शनार्थम् अनैकान्तिकत्व पूर्वपक्षत्वेनोपस्थाप्यते, वाक्यस्य तादृशज्ञानहेतुत्व नैकान्तिक न नियतम् । वाक्यश्रवणे सति, असति च तस्मिन् ज्ञानोत्पत्तिदर्शनादिति पूर्वपक्ष उपन्यस्यते समनन्तर श्लोकेनेत्यर्थ ॥

**'कृत्स्नानात्मनिवृत्तौ'** इति ॥ कश्चित् परिशुद्धकार्यकरणै संपन्न, कृत्स्नस्य सर्वस्यापि अनात्मन आत्मव्यतिरिक्तस्य निवृत्तौ सर्वैकत्वज्ञानेन बाधे सति, निर्वृतिम् सर्वबन्धोपरमम्, आनन्दात्मस्वरूपताम्, आप्नोति स्वभूत मद्वितीयात्मरूपत्व श्रवणमन्तरेणापि प्रतिपद्यत इत्यर्थ । यथा प्रजापतिर्जन्म मात्रेण । 'स हायमीक्षाचक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भय वीयाय' (बृ १–४–२) इति श्रुते । श्रुतवाक्यस्मृतेश्चान्य । यथा भृगुः पितुर्वाक्य 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्म' इत्येतत् सकृच्छ्रुत वाक्यम् अर्थत स्मृत्वा, पुन पुनस्तपस्तप्त्वा अन्नप्राणादिक्रमेण पर्यन्ते आनन्दो ब्रह्मेति व्यजानात् । तत्र वाक्यार्थस्मृतिरेव कारणमभूत्, न वाक्यश्रवणमात्रम् इति भाव । तथा स्मार्यते च वचोऽपर । ज्ञानार्थम् इति शेष । यथा श्वेतकेतुः पित्रा नवकृत्वस्तत्त्वमसीति स्मार्यमाण, तत्तदध्यारोपितांशापनयन

पूर्वकम् अन्ते तदेवाहमस्मीति विजज्ञौ । तत्र च पुनः पुनर्वाक्यस्मरणमेव ज्ञानकारणमभूत् । न स्वयंकृतविमर्शः, सकृच्छ्रुतवाक्यार्थस्मरणो वेति भावः ॥ २ ॥

**पूर्वपक्षः – वाक्यादपि ज्ञानं भवेत् –**

तदेवं वाक्यादन्यस्यैव ज्ञानकारणत्वं प्रदर्श्य अधुना वाक्यस्यापि तत्प्रदर्श्यते पूर्वोक्तं नैकान्तिकत्वं द्रढयितुमित्याह – एतत्प्रसङ्गेनेति ॥ वाक्यं विनैव ब्रह्मात्मताप्रतिपत्त्युपन्यासप्रसङ्गेन स्मृतं श्रोत्रन्तरमप्युपन्यस्यति वाक्यश्रवणमात्रादुत्पन्नज्ञानस्य श्रोत्रन्तरस्याप्युपन्यासं करोति ग्रन्थकृत् । तत् पुनः उभयत्रापि वाक्येऽपि वाक्यतोऽन्यत्रापि ज्ञानकारणत्वसम्भवनाय । वाक्यस्यैकान्ततो हेतुभावं निराकर्तुमित्यर्थः ॥

वाक्यश्रवणमात्राच्चेति ॥ न तत्स्मृतेः नापि वाक्ययुक्त्यभ्यासप्रयोजकात् स्मरणात्, किं तु केवलादेव वाक्यात्, कश्चित् निर्वृतिमाप्नुयात् । तत्र दृष्टान्तः पिशाचकवत् इति । यथा कश्चित् पुरुषः पापवशात् दुःखिना पिशाचतां प्राप्तः कस्याप्यध्येतुः पुरुषस्य श्रुत्वैव 'त्वमसि ब्राह्मणः' इति वाक्यं श्रुत्वा पिशाचकारणितात्, पिशाचं गतः स्वमेव प्राकृतं रूपम् आप्नुयात्, एवम् इत्यर्थः ॥

अस्तु सर्वमेतत् कथमेतावता वाक्यस्यानैकान्तिकहेतुता ? तत्राह – त्रिष्विति । एषु चतुर्षु स्मर्यमाणस्य व्यतिरिक्तेषु त्रिषु सिद्धिर्ज्ञानप्राप्तिर्यादृच्छिकी यदृच्छया भाविनी न तु नियमेन । अनात्मनिवृत्तावपि हि विराजः भयारत्यादि संसारकार्यमुद्बभूव । यदृच्छया तु स प्रतिपेदे 'अहमद्वितीयः' इति । एवं प्रजापतिवाक्यं स्मृत्वापि विरोचनस्य अन्यथामतिरुद्बभूवेति नेन्द्रस्य या सम्यक्प्रतिपत्तिसिद्धिः सापि यादृच्छिकी मन्तव्या । पिशाचस्य तु यादृच्छिकसिद्धित्वं सुस्पष्टम् । मान्त्रिकवाक्यश्रवणादपि पैशाचाभिमाननिवृत्तेः दुरुपलम्भात् । स्मर्यमाणे तु निश्चिता सिद्धिः । पुनः पुनर्ज्ञानाभ्यासात् संशयविपर्ययाणां नियमेन निवृत्तेः । अतो वाक्यमेव ब्रह्मात्मत्वप्रतिपत्तिहेतुरिति नायं नियम इति भावः ॥ ३ ॥

## ३. वाक्यं नियमेन ज्ञानहेतुः

(मूलम्)

नायं अनैकान्तिको हेतुः । यतः –

सर्वोऽयं महिमा ज्ञेयो वाक्यस्यैव यथोदितः ।
वाक्यार्थं न ऋते वाक्यात् कश्चिज्जानाति तत्त्वतः ॥ ४ ॥

वाक्यं च प्रतिपादनाय प्रवृत्तं सत् प्रतिपादयत्येव । सर्वप्रमाणानामपि एवंवृत्तत्वात् –

नाहंग्राह्ये न तद्धीने न प्रत्यङ् नापि दुःखिनि ।
विरोधः सदसीत्यस्माद् वाक्यान्निज्ञस्य जायते ॥ ५ ॥

(क्लेशापहारिणी)

वाक्यम् नानैकान्तिकहेतुर्ज्ञाने –

अथ सिद्धान्तमाह – नायमिति ॥ अयं वाक्यलक्षणो नानैकान्तिको हेतुर्ज्ञाने, किं तु एकान्तेन ज्ञानसाधनमेवेत्यर्थः । कथं नानैकान्तिकः ? यावता विनापि वाक्यं ज्ञानोत्पत्तिर्दृश्यत इत्युक्तम्–इत्याशङ्क्य श्लोकं तत्रोत्तरत्वेनावतारयति – यत इति ॥

सर्वोऽयमिति ॥ सर्वोऽयं यथोदितं श्रावणस्मरणस्मारणरूपेण ज्ञानोत्पादनलक्षणो वाक्यस्यैव महिमा । न हि वाक्याद् ऋते कश्चिदपि श्रोता वाक्यार्थम् 'अहं ब्रह्म' इत्याकारकं तत्त्वतो जानाति । न हि वाक्यस्मरणस्मारणद्वारेण जातं ज्ञानं वाक्यहेतुकं न भवति । पूर्वं श्रुतं वाक्यं विना वाक्यस्मरणस्य तत्स्मारणस्य वा स्वरूपलाभाभावादित्यभिप्रायः । यत्पुनरुक्तम्–कृत्स्नानात्मनिवृत्तौ निर्वृतिमाप्नोति वाक्यं विनैवेति । तदसत्, सुषुप्तादौ सर्वानात्मनिवृत्तावपि तदभावदर्शनात् । न च विराडात्मनोऽनात्मनिवृत्तिमात्रं भयापगमे हेतुः । किं तु ज्ञानादेव । 'स ह्ययमीक्षां चक्रे' इति श्रुतेः । तच्चैकत्वज्ञानं तस्य प्राग्जन्मभावितज्ञानकर्मफलभूतधर्मवैराग्याद्यतिशयवशा-

ज्ञातमित्यन्यदेतत् । किं च तस्य 'अहमस्मि प्रजापतिरद्वितीय' इत्येव ज्ञान जातम्, न तु सर्वविशेषरहित स्वत सिद्ध ब्रह्माहमस्मीति इत्यपि सुवचम् । प्रकरणात्, वाक्यशेषाच्च । प्रकरण हीद ज्ञानकर्मफलं स्वर्गप्रदर्शनार्थम्, न तु परमार्थज्ञानविषयम् । वाक्यशेषे च अरत्यादिससारधर्मसत्त्वासंकीर्तन लक्ष्यते । अत एवोक्त भाष्येऽपि 'विवक्षित त्वेतत् सर्वमप्येतत् ज्ञानकर्मफल ससार एव । भयारत्यादियुक्तत्वश्रवणात्, कार्यकरणलक्षणत्वात्, स्थूलत्वस्यानित्य विषयत्वाच्चेति' (बृ भा १-४-१) इति । भाष्यकारप्रणीतैकत्वदर्शन विचारस्तु स्वप्रकरणस्थज्ञानविषये अवगन्तव्य इत्येव वार्तिकप्रस्थानमित्यस्माक भाति । यत्तु बृहद्वार्तिकव्याख्यानकारैर्निराकृतैक्यज्ञानपक्ष पूर्वपक्षत्वेन नीत तद्भाष्यकारवचनगौरवात्, वार्तिकपूर्वापरविचारप्रणालीमननुसधाय चेत्यस्तु तावदेतत् । सर्वथापि तु न वाक्यादृते कस्यचिदप्यस्य भक्तेऽपि ज्ञानमिति प्रकृतमन्यार्थं इत्यनवद्यम् ॥ ४ ॥

तत्त्वमसिवाक्यस्य स्वविषयबोधकत्वादेव प्रामाण्यम् –

ननु वाक्य चेदेकान्तेनैव हेतुरात्मयाथात्म्यज्ञाने, न तर्हि ततोऽप्रतिपत्ति सशयितप्रतिपत्तिर्विप्रतिपत्तिर्वा भवेत् । तथा च न स्मरणस्मरणकाङ्क्षा स्यात् वाक्यज्ञानात् परम् । अभ्युपगम्यते तु भवतापि पक्षे तदपक्षा । तत् कथमेतत् ' इत्याशङ्क्याह – वाक्य चेति ॥ अयमभिप्राय । न तावदप्रतिपत्ति । न हि तत्त्वमस्यादिवाक्य ब्रह्मात्मैकत्व जातुचिन्न प्रतिपादयति । शब्दमात्रस्य स्वार्थप्रतिपादनदर्शनात् । अथ न प्रतिपादयत्येवेत्याग्रह, भवद्वाक्यस्यापि तत्प्रतिपादनप्रतिषेधासामर्थ्यप्रसङ्ग । यथा च ज्योतिष्टोमादिकर्मवाक्याद् तत्प्रतिपत्ति कर्तुर्देहान्तरसम्बन्धस्वर्गादिफलसम्बन्धादिप्रतिपत्तिश्चावश्य जायते, तथैव ब्रह्मात्मैकत्ववाक्यात् तत्प्रतिपत्ति कस्मान्न जायते शास्त्रवाक्य त्वाविशेषेऽपीति प्रष्टव्यो भवान् । कि चान्यत्, सर्वप्रमाणानामप्येवंवृत्तत्वात् तत्त्वमस्यादिवाक्ये न कोऽपि विशेष शक्यशङ्क । प्रत्यक्षादि हि स्वविषय प्रतिपादनाय प्रवृत्त प्रतिपादयत्येवेति सर्वसंप्रतिपन्नम् । तथा वाक्यमपि प्रमाणत्वाविशेषादित्यकामेनाप्यङ्गीकर्तव्य भवतीति ॥

ननु न प्रत्यक्षादिसाम्यमत्र संभवति । न हि प्रत्यक्षादीनि प्रमाणान्तर विरुद्धार्थं क्वचित् प्रतिपादयन्ति दृष्टानि । इह तु प्रत्यक्षादिविरुद्धार्थप्रतिपादन मस्तीति वैषम्यमिति चेत् तत्रोत्तरम् – नाहंग्राह्ये इति । अयमर्थ । विरोधाभास एवात्र न वास्तविको विरोध यतो वाक्याभिज्ञस्य तत्त्वमस्यादि वाक्यार्थमभिजानत । अहग्राह्ये अहमा अहप्रत्ययेन अहत्वेन ग्राह्ये देहेन्द्रियादौ सदर्थी यस्माद् वाक्यात् । विरोधो न जायते । तस्य सद्ब्रह्मात्म त्वानुपदेश द् बाधेन । न तद्धीने अहप्रत्ययवेद्यत्वरहिते, केवल युष्मत्प्रत्यय गोचरे । इदन्तैव ग्राह्ये शब्दादिविषये इति यावत् । तत्र नतरा विरोधो जायते । तस्य वाक्याविषयत्वस्य स्फुटतरत्वादित्यर्थ । न प्रत्यक्ष् । नापि प्रत्यगात्मनीत्यर्थ । तस्यैव त्वपदलक्ष्यत्वेन सत्तादात्म्योपदेशात् इति भाव । नापि दुःखिनि अहप्रत्ययाश्रये दु खादिससारधर्मवतीत्यर्थ । तत्रापि न विरोधो जायते । तस्य त्वपदवाच्यत्वेऽपि तल्लक्ष्यत्वामानेन सत्तादात्म्योप देशाविषयत्वादिति भाव । यथा चैतत्तथा अस्मिन्नध्याये स्फुटीकरिष्यत इति प्रतिज्ञामात्रेणैतदुक्तमिति ज्ञेयम् । तदेव प्रमाणान्तरविरोधस्य आभासमात्रत्वात् न वाक्यप्रामाण्यविघातकत्वमिति वाक्यार्थ ॥ ५ ॥

## ४. पदार्थशोधनपूर्वकं वाक्यार्थसिद्ध्यर्थमुत्तरग्रन्थः

( मूलम् )

नाविरक्तस्य संसाराान्निवृत्सा ततो भवेत् ।
न चानिवृत्तन्यास्य पुरुषस्य मुमुक्षुता ॥ ६ ॥

न चामुमुक्षोरस्तीह गुरुपादोपसर्पणम् ।
न विना गुरुमन्वं वाक्यस्य श्रवणं भवेत् ॥ ७ ॥

तथा पदपदार्थौ च न स्तो वाक्यमृते क्वचित् ।
अन्वयव्यतिरेकौ च तावृते स्ता किमाश्रयौ ॥ ८ ॥

अन्वयव्यतिरेकाभ्यां विना वाक्यार्थबोधनम् ।
न स्यात्तेन विना ध्वंसो नाज्ञानस्योपपद्यते ॥ ९ ॥
विनाज्ञानप्रहाणेन पुरुषार्थः सुदुर्लभः ।
तस्माद् यथोक्तसिद्ध्यर्थं परो ग्रन्थोऽवतार्यते ॥ १० ॥

( क्लेशापहारिणी )

वैराग्यादीनाम् ज्ञानहेतुत्वप्रकारः –

एवं कुचोद्यमुन्मूल्य यत्तदादौ प्रतिज्ञातं पदार्थज्ञानपूर्वकत्वं वाक्यार्थप्रतिपत्तेः तदेवोपसंहरन् वाक्यार्थप्रतिपत्तौ उपायसोपानं विशदयति पञ्चभिः श्लोकैः – नाविरक्तस्येत्यादिभिः ॥

वैराग्यादेव संसारान्निवर्तितुमिच्छा । ततो मुमुक्षुता, ततो गुरूपसरणम्, ततो वाक्यश्रवणम्, ततस्तदर्थज्ञानार्थं तत्त्वम्पदपदार्थान्वयव्यतिरेकौ, ततो वाक्यार्थबोधः, ततोऽज्ञानप्रहाणम्, ततश्च सर्वानर्थनिवृत्तौ निजानन्दस्वरूपप्राप्तिरूपः पुरुषार्थ इति क्रमेण वैराग्यादेः परम्परया वाक्यार्थबोधहेतुत्वम्, अन्वयव्यतिरेकाभ्यां पदार्थविवेकस्य च साक्षात्तद्बोधजनकत्वं यस्मात् तस्मात् पदार्थविवेकसिद्ध्यर्थमुत्तरो ग्रन्थ इति पिण्डितार्थः । एतच्चोपदिष्टं भगवत्पूज्यपादैः – 'नित्यमुक्तत्वविज्ञानम्' इत्यादिना (उ. सा. १८–१८२, १८३), ग्रन्थकृतैवोदाहरिष्यते चतुर्थे । एतेन त्रिषु यादृच्छिकी सिद्धिरिति प्रत्युक्तम् । सर्वत्र पदार्थस्मरणद्वारत्वात् वाक्यार्थप्रतिपत्तेः । असकृत्स्मारणं ॥ सकृदुक्तवाक्यार्थानुभवाशक्तं प्रति, क्रमेण प्रतिबन्धापनयार्थमिति सर्वं निरवद्यम् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

## ५. स्थूलशरीरविवेकः

( मूलम् )

चर्चस्कं त्वगकार्यत्वाद्यथा नात्मेति गम्यते ।
तद्भागः सेन्द्रियो देहस्तद्वत् किमिति नेष्यते ॥ ११ ॥

( क्लेशापहारिणी )

देहोऽनात्मा अन्नकार्यत्वात् –

इदानीं त्वंपदार्थशोधनमारभमाणः स्थूलदेहे तावदात्ममतिं निरासयितुमाह – वर्चस्कं त्विति ॥ यथा वर्चस्कं पुरीषं अन्नकार्यत्वात् नात्मा अन्नवदेवेति गम्यते निश्चीयते, तद्वत् अन्नकार्यांश एव सन् सेन्द्रियो देहोऽपि तद्वदिति किं नेष्यते ? किं कारणं तथैव सोऽप्यनात्मेति नाधिगम्यते ? इत्याक्षेपः । सेन्द्रियो देहः अनात्मैव, अनात्मभूतान्नकार्यत्वात् पुरीषादिवदित्यध्यवसातव्यमित्यभिप्रायः । करणानां भौतिकत्वे श्रुतिरुदाहृता प्राक् । तथा देहोऽपि भौतिक एव सन् अन्नकार्यमुच्यते, तत्प्रधानत्वात्, 'स वा एष पुरुषोऽन्नरसमयः' (तै २–१) इति श्रुतेश्च–इत्यवगन्तव्यम् ॥ ११ ॥

( मूलम् )

आद्यन्तयोरनात्मत्वे प्रसिद्धे मध्येऽपि कः प्रतिबन्धः ? –

प्रागनात्मैव जग्धं सदात्मतामेत्यविद्यया ।
स्रगालेपनवद्देहं तस्मात्पश्येद्विविक्तधीः ॥ १२ ॥

अथैवमपि मद्वचनं नाद्रियसे, स्वयमेवैतस्मात् शरीराद्शुचिराशेर्निराशो भविष्यसि –

मन्यसे तावदस्मीति यावदस्मान्न नीयसे ।
श्वभिः क्रोडीकृते देहे नैवं त्वमभिमंस्यसे ॥ १३ ॥

शिर आक्रम्य पादेन भर्त्सयत्यपरान् शुनः ।
दृष्ट्वा साधारणं देहं कस्मात्सक्तोऽसि तत्र भोः ॥ १४ ॥

श्रुतिपरिप्रापितोऽयमर्थोऽनात्मा बुद्ध्यादिदेहान्त इतीदमाह –

तुसत्रीहिपलालांशैर्बीजमेकं त्रिधा यथा ।
बुद्धिमांसपुरीषांशैरन्नं तद्वदवस्थितम् ॥ १५ ॥

(कृपाव्याख्यातिणी)

देहोऽनात्मा आद्यन्तयोस्तथात्वप्रसिद्धेः —

एतमेवार्थमुपबृंहयति समनन्तरश्लोकस्थयुक्तिरपीत्याह — आद्यन्तयोरिति ॥ आदौ प्राग्देहभावात् अव्यरूपेणानात्मत्वं प्रसिद्धं देहस्य । अन्ते च पश्चात् देहपाते सति भस्मीभावात् मृद्भावापत्तेर्वा तथात्वं प्रसिद्धम् । तत्रैवं सति मध्येऽपि देहभावकालेऽपि स अनात्मैवेति प्रतिपत्तेः कः प्रतिबन्धः ? न कोऽपि समस्तीत्यर्थः ॥

प्रागनात्मैवेति ॥ प्रागनात्मैव सन्, जयं भक्षितं त्वद्विषया अध्यासरूपया स्वयाथात्म्यानिर्धारणात्, आत्मतामेति आत्मभावं प्राप्नोतीवेति इवशब्दलोपो द्रष्टव्यः । स्रगालेपनवत् यथा पुष्पाङ्गरागादिकं धारणकाले तत्तत्त्वाविवेकेनैव स्वात्मत्वेन प्रतिभाति मन्दमतेः, एवं देहोऽपीत्यर्थः । तस्मात् विविक्तधीः सन् तमनात्मधिया पश्येत् इत्यभिप्रायः । अथवा यथा स्रगालेपने धारणकालेऽप्यनात्मतया अवगच्छति व्युत्पन्नमतिः एवं विविक्तधीर्देहमपि पश्येत् इति योजनितव्यम् ॥ १२ ॥

स्रगादिदृष्टान्तेनादौ देहस्यानात्मत्वं निदर्शितम् । इदानीमन्तेऽपि तद्दर्शयित्वा देहानात्मताचिन्तां निगमयत्युत्तरश्लोकद्वयमित्याह-अर्थेवमपीति ॥ 'अशुचिराशेः' इति शुद्धात्मनः सकाशाद्विवेकार्थमिति ध्येयम् ॥

एतदेव विशदयति मन्यसे इति ॥ अस्मिन् देहे 'अयमहमस्मि' इति तावदेवाभिमन्यसे यावदस्मात् देहात् न लोकान्तरं देहान्तरं वा प्रतिनीयसे । नीते [illegible] त्वयि मांसादिराशिरेवायमवशिष्येत श्वाद्यभ्येमं मौडीकुर्यात् । मौडीकृते तस्मिन् देहे नैवं यथेदानीं देहे त्वमात्मभावेन तिष्ठसि न तथा अभिमंस्यसे अभिमानं करिष्यसीत्यर्थः । तथा च अभिमानादेव देहस्यात्मत्वं न वस्तुत इत्यभिमानव्यतिरेकप्रदर्शनेन दर्शितं भवतीति ज्ञेयम् ॥ १३ ॥

शरीरेऽहंमतिरविवेकेनेत्येतद् विशदयति — शिर इति ॥ एकः श्वा तव मृतेरनन्तरम् अस्य देहस्य शिरः पादेन आक्रम्य अधरात् । पुनः तद्भक्षणादागतान् भर्त्सयति । 'ममायम्' इत्यभिमन्यमानः इति शेषः । तथा

अपरेऽपि श्वान तत्रैव 'अस्माकमयम्' इत्यभिमान कुर्वन्तीति सर्वसाधारणोऽय देह, न तवैवासाधारण । एव साधारण दृष्ट्वा निश्चित्यापि तत्र देहे कस्मात् कारणात् सक्तोऽसि भो । नन्विद मनसि करणीयम् इत्यभिप्रायेण 'भो' इति संबोधनम् । इत्थ चासक्तेरविवेकहेतुत्व स्फुटमिति भाव ॥ १४ ॥

देहोऽनात्मा, अनात्मभूतान्नकार्यत्वात् –

'तद्भाग सेन्द्रियो देह' (२–१०) इत्यादिना यद्देहादेरनात्मत्व मुक्तम्, न तदनुमानमात्रम्, आगमावष्टम्भेनापि शक्यसाधनत्वादित्याह – श्रुतीति ॥

बुसत्रीहीति ॥ यथैकमेव बीज बुसत्रीहिपलालाशैस्त्रिधा परिणत भवति तद्वदन्नमेकमेव बुद्धिमांसपुरीषात्मना त्रेधा परिणतमवस्थित भवति । आह हि श्रुति 'अन्नमशित त्रेधा विधीयते तस्य य स्थविष्ठो धातुस्तत्पुरीष भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मन' (छा ६–५–१) इति । तस्मात् साध्वेतद्देहस्यानात्मत्वकथनमित्यभिप्राय ॥ १५ ॥

( मूलम् )

यथोक्तार्थप्रतिपत्तौ सत्यां न रागद्वेषाभ्यां विक्रियते विपश्चित् – इत्यस्यार्थस्य प्रतिपत्तये दृष्टान्तः –

वर्चस्के संपरित्यक्ते दोषतश्चावधारिते ।
यदि दोषं वदेत्तस्मै किं तत्रोत्स्रष्टुर्भवेत् ॥ १६ ॥

तद्वत् सूक्ष्मे तथा स्थूले देहे त्यक्ते विवेकतः ।
यदि दोष वदेत्ताभ्यां किं तत्र विदुषो भवेत् ॥ १७ ॥

एतावदेव हि 'अहं ब्रह्मास्मि' इति वाक्यार्थाप्रतिपत्तौ कारण यदुत बुद्ध्यादौ देहान्ते अहममेति निःसन्धिबन्धनो ग्रहः । तद्व्यतिरेके हि न कुतश्चिद् विभज्यते, एकल एव प्रत्यगात्मन्यवतिष्ठत इत्याह –

रिपौ बन्धौ स्वदेहे च समैकात्म्यं प्रपश्यतः ।
विवेकिनः कुतः कोपः स्वदेहावयवेष्विव ॥ १८ ॥

( क्लेशापहारिणी )

आत्मानात्मविवेकफलम् –

सर्वानात्मविविक्तात्मवेदनस्य फलमुच्यते सदृष्टान्तमुत्तरश्लोकद्वये-नेत्याह – यथोक्तार्थप्रतिपत्तिरिति ॥

वर्चस्के इति । तद्वदिति च ॥ यद्यपि स्थूलशरीरविवेक एव प्रकृतः, तथाप्यनुपदमेव वक्ष्यमाणं सूक्ष्मशरीरविवेकमप्युक्तवत् कृत्वा विवेकफलमुच्यते, कथं नु नाम मुमुक्षवो देहद्वयादप्यात्मनो विवेचने प्रवर्तेरन्निति । उच्चरितुः पुरीषोत्स्रष्टुः तत्र पुरीषे केनचित् दोषवदने सति किं भवेत्? न किमपि तस्य छिद्यते । तद्वत् तुष्टवर्चस्कविविक्तदेहज्ञानिनो यथा तद्दोषकथनश्रवणेन न कश्चिद् भवेत् तथैव स्थूलसूक्ष्मदेहाभ्यामनात्मत्वेन परित्यक्ताभ्यां तावुद्दिश्येत्यर्थः । यदि कश्चिद्दोषं वदेत् तत्र दोषवदने, विदुषः देहद्वयातिरिक्तमात्मानं जानतः किं भवेत्? न किमपि रागद्वेषादिकं भवेदित्यभिप्रायः ॥ १६ ॥ १७ ॥

देहद्वयविविक्तात्मज्ञाने सति रागादेरात्यन्तिकनिवृत्तिः –

सति देहद्वये ह्यात्माभिमाने रागद्वेषोदयः, त्यक्ते तु तस्मिन्नभिमाने तत्र परदृष्टदोषस्य स्वेनापि दर्शनात् नैव रागद्वेषौ इत्यन्वयव्यतिरेकाभ्यां रागद्वेषास्पदत्वावगमाद्देहादेरनात्मत्वं निर्धार्यत इत्युक्तम् । इदानीं देहद्वयातिरिक्तप्रत्यगात्मन एव स्वात्मत्वेन निश्चये सर्वात्मत्वेन स्वात्मनो दर्शनं भवतीति नैवावशिष्यते रागविषय इत्यतोऽपि देहादावात्ममतिः परित्याज्या विवेकिभिरित्युच्यते । तदाह – एतावदेव हीति ॥ अहं ब्रह्मास्मीत्यप्रतिपत्तौ कारणं त्वंपदार्थापरिज्ञानमित्युक्तं पुरस्तात् । तदपरिज्ञाने च कारणं बुद्ध्यादौ देहान्ते अहंममेति निःसन्धिग्रन्थनो ग्रहः, निरूढनिरन्तराभिमान इत्यधुनोच्यते । तेन न पूर्वापरविरोधः । त्वंपदार्थभूते प्रत्यगात्मनि देहद्वयपरिच्छिन्नत्वबुद्धिरेव

तथायात्म्यपरिज्ञाने प्रतिबन्ध । अतस्तद्व्यतिरेके आत्मनि सर्वथापि परिच्छिन्नत्वबुद्धिर्निवर्तते । तथा च तत्त्वमसीति सामानाधिकरण्यबोधकवाक्ये न विरोध प्रतीयत इत्याह – न कुतश्चिद्विभज्यते एकल एव प्रत्यगात्मन्यवतिष्ठत इति । इत्याहेति–एवमर्थमाहोत्तरश्लोक इत्यर्थ ॥

रिपाविति ॥ विवेकिन यथोक्तविधया देहद्वयव्यतिरेकेण विविच्य रिपुदेहे बन्धुदेहे स्वदेहे च तमेवैक निर्विशेषात्मान पश्यत । कुत कोप ? कोप इत्युपलक्षणम् सकारणस्य सर्वस्यैव संसारस्याक्षेपोऽत्र द्रष्टव्य । तथा च श्रुति 'तत्र को मोह क शोक एकत्वमनुपश्यत ।' (ई ७) इति । अत्र दृष्टान्त स्वदेहावयवेष्विवेति । यथा लोके सर्वावयवयुक्ते देहे एक एवाहमात्मा इति पश्यन् पुरुष स्वावयवेषु तारतम्य विशेषेण राग द्वेष वा न करोति । तद्वदित्यर्थ ॥ १८ ॥

( मूलम् )

इतश्चानात्मा देहादिः –

घटादिवच्च दृश्यत्वात्तैरेव करणैर्दृशेः ।
स्वप्ने चानन्वयाज्ज्ञेयो देहोऽनात्मेति सूरिभिः ॥ १९ ॥

देहादिकार्यकरणसघातव्यतिरेकाव्यतिरेकदर्शिनः प्रत्यक्षत एव विरुद्ध कार्यमुपलभ्यते –

चतुर्भिरह्यते यत्तत्सर्वशक्त्या शरीरकम् ।
तूलायते तदेवाहधियाऽऽघ्रातमचेतसाम् ॥ २० ॥

( क्लेशापहारिणी )

देहोऽनात्मा दृश्यत्वात् –

देहानात्मतानिश्चयार्थामेव प्रासङ्गिकीं फलोक्तिमुपसंहृत्य प्रकृतामेव देहाद्यनात्मताचिन्तामनुवर्तयति – इतश्चेति ॥ 'देहादि ' इत्यादिशब्दो बुद्ध्यादिदेहान्तानामनात्मत्वोपसंग्रहार्थ । विवक्षितस्तु स्थूलदेहव्यतिरेक

एवेति बोध्यम् । अथवा 'तद्भागः सेन्द्रियो देहः' (१-११) इत्यत्रोपात्तेन्द्रियग्रहणार्थं आदिशब्दः । विवक्षितन्तु स्थूलदेहविवेक एवेति तमेवोपपादयति श्लोके ॥

घटादिवच्चेति ॥ दृशेः दृगात्मनः, देहो नात्मा । तैरेव घटादिदर्शकैरेव करणैर्दृश्यत्वात् घटादिवत् । स्वप्ने चाऽऽत्मनोऽन्वयेऽपि अनन्वयाच्च, घटादिवदेव । देहस्यानन्वयस्तु स्वप्ने कल्पितदेहान्तरदर्शनादित्यवगन्तव्यम् । तदेताभ्यां हेतुभ्यां देहो नात्मेति सूरिभिः अन्वयव्यतिरेककुशलैः ज्ञेय इत्यर्थः । यद्यपि स्वदेह एव स्वनिष्ठकरणैः दृश्यते घटादिवत् इति वक्तुं न युज्यते, प्रकृते करणानां स्वाश्रयदेहव्यतिरेकेण ग्राहकतया अनवस्थानात् । तथापि लोकबुद्धिमनुसृत्य परदेहवत् स्वदेहस्यापि करणग्राह्यत्वं सिद्धवत्कृत्य एवमुक्तम् इति अदोषः ॥ १९ ॥

देहोऽनात्मा मिथ्याभिमानहेतुत्वात् –

स्थूलदेहस्य विवेकाविवेकाभ्यां फलभेदमाह तस्य सुविवेचनत्वमादर्शयितुम् – देहादीति ॥ अत्राप्यादिशब्दस्तुल्यन्यायत्वात् इन्द्रियादिष्वप्यनात्मत्वातिदेशसूचनार्थः । स्थूलदेहविवेक एव तु प्रत्यक्ष इति ध्येयम् ॥

चतुर्भिरिति – आत्मा शरीरव्यतिरिक्त इति दर्शिन. शरीरं मृतस्य यदिदं शरीरकम् कुत्सितं शरीरम् सर्वशक्त्या चतुर्भिरुह्यते क्लेशेन नीयते इति स्फुटम्, तदेव अहंधिया मिथ्याभिमानेन आघ्रातचेतसां परवशीकृतचित्तानाम् । देहतादात्म्याभिमानं गतानाम् इति यावत् । तूलायते तूलवल्लघुर्भवतीत्यहो मोहस्य वैभवमित्यभिप्रायः ॥ २० ॥

( मूलम् )

प्रसिद्धत्वात् प्रकरणार्थोपसंहारायाह –

स्थूलं युक्त्या निरस्यैवं नभसो नीलतामिव ।
देहं सूक्ष्मं निराकुर्यादतो युक्तिभिरात्मनः ॥ २१ ॥

( क्लेशापहारिणी )

स्थूलदेहविवेकोपसंहारः –

इदानीं प्रकृतं स्थूलदेहविवेकमुपसंहृत्य सूक्ष्मदेहविवेकायावतारिकां करोतीत्याह – प्रसिद्धत्वादिति ॥ लोकदृष्ट्यापि सिद्धत्वात् बहुवादिसंप्रतिपन्नत्वाच्चेत्यर्थः ॥

स्थूलमिति ॥ नभसो नीलतामिवेति प्रतीतिसिद्धस्याप्यात्मत्वस्याध्यस्ततां प्रकटीकर्तुं दृष्टान्तः ॥ २१ ॥

## ६. सूक्ष्मदेहविवेकः

( मूलम् )

कथं देहं सूक्ष्मं निराकुर्यादिति ? उच्यते –

अहंममत्वयत्नेच्छा नात्मधर्माः कृशत्ववत् ।
कर्मत्वेनोपलभ्यत्वादपायित्वाच्च वस्त्रवत् ॥ २२ ॥

वैधर्म्ये दृष्टान्तः –

नोष्णिमानं दहत्यग्निः स्वरूपत्वाद्यथा ज्वलन् ।
तथैवाऽऽत्माऽऽत्मनो विद्यादहं नैवाविशेषतः ॥ २३ ॥

( क्लेशापहारिणी )

सूक्ष्मदेहविवेके युक्तिः –

कथमिति । अहंममत्वेत्यादि ॥ अहंममत्वयत्नेच्छा इत्युपलक्षणम् । अहंकारममकारबुद्धिमुन्दु.खेच्छाद्वेषयत्नादयो वैशेषिकादीनामात्मधर्मत्वेनाभिमता वस्तुतो नात्मधर्माः, कर्मत्वेनोपलभ्यत्वात् कृशत्ववत्, अपायित्वाच्च वस्त्रादिवत्– इत्यनुमानानुसारियुक्तिद्वयेन अहंत्वादीनामनात्मधर्मत्वं सिध्यति ।

अत्र च 'महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः । एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥' (गी. १३-५, ६) इति श्लोकद्वयार्थोऽनुसन्धेयः कर्मत्वेनोपलभ्यत्वादित्यत्र । न हि विदिक्रियाकर्मत्वेनोपलभ्यमानानां क्षेत्रज्ञधर्मत्वं संभवति । 'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः' (गी. १३-२) इति विदिकर्तृत्वस्मरणात् तस्येति । एवम् अपायित्वाद् वस्त्रादिवत् इत्यत्र 'वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि । तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥' (गी. २-२५) इति श्लोकोदाहृतन्यायोऽनुसंधेयः । तत्र शरीराणामिवात्राप्यहममतादीनामपायित्वस्य विवक्षितत्वात् । अहंताममतादीनां विषयत्वेनोपलभ्यत्वात्, आत्मना नियतसाहचर्याभावाच्च नात्मधर्मत्वमिति वाक्यार्थः । इत्थं च धर्माणामहंतादीनामनात्मधर्मत्वे सति तद्वतः सूक्ष्मदेहस्यापि अनात्मत्वं सेत्स्यतीति भावः । न चासिद्धत्वं हेत्वोः । अनुपदमेव तयोः साधयिष्यमाणत्वात् । अत एव वक्ष्यमाणसमुच्चयात् 'युक्तिभिः' (२-२-१) इति बहुवचनमविरुद्धमिति द्रष्टव्यम् ॥ २२ ॥

वैधर्म्यं इति ॥ कर्मत्वेनोपलभ्यत्वमागमापायित्वं च यत्र स नात्मधर्म इत्यत्र कृशत्ववत्, वस्त्रवत् इति च साधर्म्यदृष्टान्तावुक्तौ । यत्र ह्युपलभ्यत्वं यथा कृशत्वादौ, आगमापायित्वं च यथा वस्त्रादौ तत्रानात्मत्वं दृष्टमिति । अथ 'यद्धर्मा यः पदार्थो न तस्यैवेयात् स कर्मताम् ।' (उप. सा. १६-१२) इति न्यायेन यत्र स्वात्मधर्मत्वं न तत्र स्वात्मविषयत्वम् इति वैधर्म्ये दृष्टान्त उच्यत इत्यर्थः ॥

नोष्णिमानमिति ॥ यथा उष्णिमानं नाग्निर्दहति ज्वलयति ; स्वरूपत्वात्, स्वात्मधर्मत्वात् । तथैव आत्मा आत्मनः स्वरूपभूतं धर्मभूतं वा अहंकारादिकं धर्मं नैव विद्यात् ।' अविशेषतः । स्वरूपत्वाविशेषात्, स्वधर्मत्वाविशेषाच्च इत्यर्थः । अत्र 'स्वरूपत्वात्' इति धर्मस्याप्युपलक्षणम् । अतः स्वधर्मत्वादित्यपि द्रष्टव्यम् । इच्छादीनां परैर्धर्मत्वेनैवाङ्गीकारात् ।

स्वरूपस्येव स्वधर्माणामपि स्वात्मानमविषयीकृत्य कर्मतापादनासंभवात् । न च धर्मिणमविदित्वा धर्मानेव हिरुग् वेदितुमल कश्चित् । प्रकृते चाऽऽत्मा वेत्त्यहमादिकम् इत्युभयसप्रतिपन्नम् । तस्मादेव नात्मन स्वरूप धर्मो वाऽहमादिरिति फलतीत्यभिप्राय ॥ २३ ॥

( मूलम् )

एकस्याऽऽत्मनः कर्मकर्तृभावः सर्वथा नोपपद्यत इति श्रुत्वा मीमासकः प्रत्यवतिष्ठते अहंप्रत्ययग्राह्यत्वाद् ग्राहक आत्मेति । तन्निवृत्त्यर्थमाह –

यत्कर्मको हि यो भावो नासौ तत्कर्तृको यतः ।
घटप्रत्ययवत्तस्मान्नाहं स्याद्द्रष्टृकर्मकः ॥ २४ ॥

अत्राऽऽह । प्रत्यक्षेणाऽऽत्मनः कर्मकर्तृत्वाभ्युपगमे तत्पादोपजीविना अनुमानेन प्रत्यक्षोत्सारणमयुक्तमिति[1] । तन्निराकरणाय प्रत्यक्षोपन्यासः –

यत्र यो दृश्यते द्रष्ट्रा तस्यैवासौ गुणो न तु ।
द्रष्टृस्थं दृश्यतां यस्मान्नैयाद् द्रष्टृबोधवत् ॥ २५ ॥

प्रत्यक्षेणैव भवदभिमतस्य प्रत्यक्षस्य आभासीकृतत्वात् सुस्थमेवानुमानम् । अतस्तदेव प्रक्रियते । तत्र च विकल्प्य दूषणाभिधानम् –

नाऽऽत्मना न तदंशेन गुणः स्वस्थोऽवगम्यते ।
अभिन्नत्वात्समत्वाच्च निरंशत्वादकर्मतः ॥ २६ ॥

न युगपन्नापि क्रमेणोभयथा चैकस्य धर्मिणो ग्राह्य-ग्राहकत्वमुपपद्यत इति प्रतिपादयन्नाह –

1 अस्यानन्तरं 'चोद्यम्' इत्यधिक मुद्रितपुस्तके । तत्र चोद्यमाह – इति सव ध करणीय ॥

द्रष्टृत्वेनोपयुक्तत्वात्तदैव स्यान्न दृश्यता ।
कालान्तरे चेद् दृश्यत्वं न ह्यद्रष्टृकमिष्यते ॥ २७ ॥

( क्लेशापहारिणी )

आत्मनोऽहंप्रत्ययविषयत्वं तर्कपराहतम् –

एकस्येति ॥ एकस्यैवाऽऽत्मनः कर्मकर्तृभावो नोपपद्यत इत्युक्ते श्रुत्वा मीमांसको भाट्टः प्रत्यवतिष्ठते । अहंप्रत्ययग्राह्यत्वात्, अहंप्रत्ययविषयत्वादेव हेतोर्ग्राहक आत्मेति । अयं भावः । इदमेव हि ग्राहकत्वस्यासाधारणं लक्षणं यदुताहंप्रत्ययग्राह्यत्वं नाम । अहंप्रत्ययग्राह्यत्वरूपेण हि इदंप्रत्ययग्राह्येभ्यो विषयेभ्यः प्रविविच्यतेऽसौ । अत एव चास्य कर्तृत्वभोक्तृत्वेऽपि 'इदं करिष्येऽहम्' 'इदं भोक्ष्येऽहम्' इति अहंप्रत्ययग्राह्य एव सन् कर्माणि कुरुते तत्तद्विषयांश्च भुङ्क्त इति । 'तन्निवृत्त्यर्थमाह'; 'तत्प्रतिकूलतर्कम्' इति शेषः ॥

यत्कर्मक इति ॥ यो भावो यत्कर्मको भवति, नासौ तत्कर्तृको भवति–इति दृष्टं लोके । घटप्रत्ययवदिति दृष्टान्तः । यथा घटप्रत्ययो घटकर्मकः सन् घटकर्तृको न भवति, एवमहंप्रत्ययोऽपि यद्यात्मकर्मकः स्यात्, तर्हि नासावात्मकर्तृकः स्यात् । तच्चानिष्टं तव । आत्मकर्तृकत्वस्याप्यभ्युपगमात् । तस्मात्तर्कानुगृहीतत्वात्सम्यगेवोक्तम् यत् आत्मा आत्मनोऽहंरूपं धर्मं न विद्यादिति–इत्यभिप्रायः ॥ २४ ॥

आत्मनोऽहंप्रत्ययविषयत्वनिराकरणं न प्रत्यक्षविरुद्धम् –

अत्राऽऽहेति ॥ मीमांसक इति शेषः । अहंप्रत्ययविषयत्वमात्मग्राहकत्वं चेत्यात्मनः कर्मकर्तृत्वम् 'मामहं जानामि' इत्यनुभवबलादभ्युपगतं मया । अतस्तत्पादोपजीविना प्रत्यक्षमुपजीव्यैव व्याप्रियमाणेन अनुमानेन साधर्म्यवैधर्म्यदृष्टान्तावष्टम्भादेव प्रत्यक्षोत्सारणमयुक्तम् इत्याह–इति योजना । तन्निराकरणायाह । तदुपन्यस्तप्रत्यक्षस्याऽऽभासीकरणार्थं वस्तुचरप्रत्यक्षोपन्यासं करोति–इत्यभिप्रायः ॥

यत्रेति ॥ योऽहंप्रत्ययादिः यत्रान्तःकरणादौ येन द्रष्ट्रा दृश्यते असौ दृश्यमानः तस्यैवान्तःकरणादेर्गुणः, न तु तस्यैव द्रष्टुर्गुण इति

'तस्यैव' इत्यस्याऽऽवृत्त्या योजना कर्तव्या। 'गुणो मत' इति पाठो यद्यस्ति तर्हि न कोऽपि क्लेश । तदेतत् कस्मात् ? यस्मात् द्रष्टृस्थ किमपि दृश्यता नैव इयात् प्राप्नुयात्। द्रष्टृबोधवत्। इदमुक्त भवति। अहप्रत्ययोऽन्त करणस्थ एव दृश्यते। अतोऽन्त करणधर्म एव स, कामादिवत्–इति युक्तमध्यवसातुम्। अन्यथा हि द्रष्टृधर्मत्वे तस्य दृश्यतैव न स्यात्। न ह्यदृश्यस्य द्रष्टुर्धर्ममात्र दृश्यतामियादिति क्लिप्यते। तथात्वे द्रष्टृधर्मस्य बोधस्यापि तथैव दृश्यत्व प्रसङ्ग। न च तदप्यङ्गीक्रियत एवेति वाच्यम्। द्रष्टुर्बोधस्य बोद्धव्यत्वरूप विषयत्वे सति स्वविषयकत्वापातात्, बोधान्तरसत्त्वे च प्रमाणाभावात्, तदभ्युपगमे च तस्य तस्यान्यबोधबोद्धव्यत्वाभ्युपगमप्रसङ्गेनानवस्थापाताच्च। तस्मादहप्रत्ययस्य स्वात्मधर्मत्वे अदृश्यत्वप्रसङ्ग इति सूक्तम्। दृश्यते त्वन्त करणे द्रष्ट्रा स प्रत्यय। तस्मात्तस्यैवान्त करणस्य धर्म स। यत्तु 'मामह जानामि' इति प्रत्यक्षम्, तदन्त करणोपाधिविशिष्टस्यात्मन इति न केवलस्याहप्रत्यय ग्राह्यत्वमावहतीति ज्ञेयमिति ॥ २५ ॥

आत्मनोऽहंधर्मकत्वाङ्गीकारे दोषः –

प्रत्यक्षेणैवेति ॥ द्रष्टृप्रत्यक्षेणान्त करण एवाहप्रत्ययो दृश्यत इति प्रत्यक्षमेवावलम्ब्येत्यर्थ। भवदभिमतस्य, अहप्रत्ययगम्य एवाऽऽत्मा ग्राहक इत्यत्र प्रमाणत्वेनोदाहृतप्रत्यक्षस्य आभासीकृतत्वात् आत्मनि यदहप्रत्यय ग्राह्यत्वम् तदाभासमात्रम्, सान्त करणस्यैव तथा प्रतीते, अन्त करणा परिच्छिन्नस्य तु तथा अप्रतीते इति दर्शितत्वादित्यर्थ। अनुमान कुशत्ववस्त्रादिदृष्टान्तेनोपन्यस्त सुतमेव न प्रत्यक्षविरुद्धम् इत्यर्थ। अत एवमनुमानस्य निराबाधात् तदेव प्रक्रियते, अहङ्कारस्यानात्मधर्मत्व यत्प्रतिज्ञात साधित च तदेव विशदीक्रियत इत्यर्थ। तत्र च प्रक्रियायाम् आत्मनोऽह धर्मत्वाङ्गीकारपक्षे विकल्प्य दूषण तावदभिधीयते। 'उत्तरश्लोके' इति शेष ॥

नात्मनेति ॥ स्वस्थो गुण आत्मधर्मत्वेनाभिमतोऽहप्रत्यय। स किं कृत्स्नेनात्मना अवगम्यत इति मतम् किं वा तदंशेनेति ? उभयथापि न सभवति। पूर्वस्मिन् कल्पे तावत् आत्मस्थस्याहप्रत्ययस्य स्वात्मग्रहणमन्तरेण

आत्मस्थत्वेन ग्रहणायोगात् आत्मनश्च स्वेनाभिन्नत्वादेव स्वेनैव ग्रहणानुपपत्ते । यदि ह्यात्मा आत्मानमेव गृह्णीयात् तदा येन ग्राह्य आत्मा यश्चासौ ग्राहक, तौ द्वौ प्रसज्येयाताम् । एक एव वा ग्राह्यग्राहकत्वेन द्विधा छिन्नो भवेदित्युत्तरकल्पाभ्युपगमप्रसङ्ग । ननु भवत्वसावेव कल्प का हानिरित्यत आह – समत्वाच्चेति । यथा हि द्वयो प्रदीपयो प्रकाशरूपत्वेन समयो न प्रकाश्यप्रकाशकत्वमवकल्पते, एवमात्मतदंशयोरुभयोरपि चेतनत्वेन समत्वात् न ग्राह्यग्राहकत्वमवकल्पेत । अपि चाय कल्प एव दुरूहस्तावत् । आत्मनो निरंशत्वात् । तदेवमुभयथाप्यात्मनोऽकर्मत्व, विषयत्वासभवात् न स्वग्राहकत्वमिति सुष्ठूक्त तस्याहप्रत्ययरूपो गुणो न कथमप्यवगम्यत इति ॥ २६ ॥

आत्मनो ग्राह्यग्राहकभावानुपपत्तिः –

तदेवम् आत्मस्थोऽहप्रत्यय आत्मस्थत्वेन नात्मनैव ग्रहीतु शक्यते । आत्मग्रहणापेक्षत्वादात्मस्थग्रहणस्य, आत्मनश्च ग्राहकस्यैव सतो ग्राह्यत्वायोगादित्युक्तम् । अथेदानीं स एव ग्राह्यग्राहकत्वायोगो विशदीक्रियत इत्याह – न युगपदित्यादिना ॥

द्रष्टृत्वेनेति ॥ न तावदात्मनो युगपदेव ग्राह्यग्राहकत्वमुपपद्यते । कुत ? आत्मन द्रष्टृत्वेनैवोपयुक्तत्वात् तदैव द्रष्टृत्वावस्थायामेव न तस्य दृश्यता सभवति । यावद्धि स द्रष्टा तावद् दृश्याना दर्शन एवावहितो भवतीति न कदापि स्वात्मदर्शनस्यावसरोऽस्ति । न च द्वितीयोऽस्ति कश्चिद्द्रष्टा, नापि द्रष्टृदृश्यत्वेन द्विधाभावोऽस्तीत्युक्तम् । अस्तु तर्हीदानीं द्रष्टा आत्मा, कालान्तरे तु स एव दृश्यो भविष्यतीति क्रमेण ग्राह्यग्राहकत्वम् । तत्राऽऽह – कालान्तरे चेदिति । न ह्यदृक् दृश्यत्वमिष्यते । न च तदा स्वय द्रष्टा दृश्यत्वेनैवोपयुक्तत्वात् । न च द्वितीयोऽप्योऽस्ति कश्चिद्द्रष्टा । तदेव सर्वथापि दुरूहमिदमेकस्यैवात्मनो ग्राह्यग्राहकत्वम् इत्यभिप्राय ॥ २७ ॥

( मूलम् )

सन्तु नामम् अनात्मधर्मा ममत्वादयः । यथोक्तन्यायबलात्, अनात्मतयैव च तेषु व्यवहारात् । अहरूपस्य तु प्रत्य-

गात्मसंबन्धितयैव प्रसिद्धेः, 'अहं ब्रह्मास्मि' (बृ. १-४-१०) इति श्रुतेश्च अनात्मधर्मत्वमयुक्तमिति चेत्, तन्न –

अहंधर्मस्त्वमिन्नश्चेदहंब्रह्मेति वाक्यतः ।
गौरोऽहमित्यनैकान्तो वाक्यं तन्नापनेत् तत् ॥ २८ ॥

कथं 'वाक्यं तन्नापनेत् तत्' इति ? उच्यते –

योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव ।
ब्रह्मास्मीति धियाऽशेषा ह्यहंबुद्धिर्निवर्त्यते ॥ २९ ॥

(क्लेशापहारिणी)

अहमोऽनात्मत्वाभ्युपगमो न व्यवहारविरुद्धः –

उक्तार्थे व्यवहारविरोधशङ्काम् परिहरत्यागामिश्लोक इत्याह – सन्त्वित्यादि ॥ अयमत्र पूर्वपक्षिणोऽभिप्राय । यदुक्तम् 'अहममत्व यत्नेच्छादयो नाऽऽत्मधर्मा, कर्मत्वेनोपलभ्यत्वात्, कृशत्वादिवत् । आगमा पायित्वाच्च, वस्त्रादिवत्' (२–२२) इति । तत्र मम-वायशो अनुमान समीचीन मेव । तेष्वनात्मतयैव व्यवहारदर्शनात् । न हि कश्चित्तेष्वात्मबुद्धि करोति, आत्मशब्द प्रयुङ्क्ते वा । अत सन्तु काम ममत्वादयोऽनात्मधर्मा इति । अहरूपस्य त्वनात्मधर्मत्वमिति न मृष्यामहे । कस्मात् ' तस्य प्रत्यगात्मतयैव प्रसिद्धे । न ह्यहरूपम् आत्मसमवेतत्व परित्यज्यान्यत्र स्वातन्त्र्येण क्वचित् प्रतीयते । न केवलमेव लौकिकव्यवहारप्रसिद्धे, किं तु वैदिकव्यवहार प्रसिद्धेरपि अहरूपस्य प्रत्यगात्मता नियमेन स्वीकार्या । अह ब्रह्मासीति श्रुते । 'य एव वेदाह ब्रह्मासीति स इद सर्वं भवति' (बृ १–४–१०) इति विद्यादशायामप्यात्मधर्मत्वेनैव श्रुत्या व्यवहारदर्शनात् । 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदह ब्रह्मासीति' (बृ १–४–१०) इति च ब्रह्मणोऽ प्यहत्वेनैव व्यपदेशाच्च । न हि श्रुतिरपि मिथ्याव्यवहारमनुजानीयात् । अतोऽहमोऽनात्मधर्मत्वमित्ययुक्तमिति युक्तमुत्पश्याम इति । तदेतन्निराकरणार्थ त्वेन श्लोकमवतारयति – तन्नेति ॥

अहंधर्मस्त्विति ॥ अयमर्थ । किं सामानाधिकरण्येन व्यपदेशादेव केवलमहम आत्मधर्मत्वमिष्यते, किं वा 'अह ब्रह्म' इति वाक्यस्यान्यथानुपपत्त्या ? तत्र न पूर्व कल्प क्षोदक्षम । 'गौरोऽहम्' इति व्यपदेशाद् गौरत्वस्याप्यात्मधर्मत्वप्रसङ्गात् । अतोऽनैकान्तिको हेतु । सत्यपि व्यपदेशे तदभिन्नत्वस्याभावात् । ननु गौरोऽहमिति व्यपदेश आध्यासिको देहाद्विविच्यात्मानमजानानस्य, अतो न व्यपदेशमात्र तत्र हेतु किं त्वह ब्रह्मास्मीति वैदिकव्यपदेश इत्युक्तम् । उपलक्षणमिदम्, 'अहमात्मा गुडाकेश' (गी १०-२०) इत्यादिर्गीताचार्यव्यपदेशोऽप्यत्रोदाहार्य । न ह्यासवमस्य सर्वज्ञस्य भगवत आध्यासिको व्यपदेश इति वक्तु शक्यत इति । एव ब्रह्मात्मैकत्वविदुषामपि व्यवहार उदाहरणमर्हति । तेऽपि स्वात्मानमह रूपेणैव व्यवहरन्ति – इति चेत् । अत्रोच्यते – वाक्यं तद्व्यपनेतृ तत् । तद्वाक्यम् 'अह ब्रह्मास्मि' इत्येवरूप तद्व्यपनेतृ अहधर्मताबाधक न तु तत्साधकम् । तत्र वक्ष्यमाणयुक्तिसद्भावात् । भगवतो विदुषा च व्यवहारस्य सव्यवहारमात्रालम्बनार्थत्वान्नापवादत्वम् । यथा हि विवेकिनोऽपि कदाचिद् 'कृष्णोऽय आकाश' इति व्यवहरन्ति सव्यवहारालम्बनेन । न तु तावता कृष्ण एवाऽऽकाशो भवति परमार्थत । तद्वत् । अतो न व्यवहारादप्यहम आत्मधर्मत्वमिति ॥ २८ ॥

वाक्यस्याहंव्यपनेतृत्वोपपत्तिः –

अह ब्रह्मेति वाक्यमहधर्मताबाधकमित्युक्तमतीतश्लोके । तदेव कुत इत्याशङ्कोत्तरत्वेन श्लोकमवतारयति – कथमित्यादिना उच्यत इत्यन्तेन ॥

योऽयमिति ॥ यथा कश्चिन्मन्दान्धकारे अतिदूरदेशे वा तिष्ठन्त निश्चल पुरुष स्थाणुत्वेन गृहीत्वा तदनु प्रकाशसहाय सन् समीप गत्वा वा निपुणतरमवेक्ष्य प्रत्येति व्यपदिशति च 'योऽय स्थाणु पुमानेष' इति, तत्र पुंधिया उत्तरभाविन्या प्राक्तनी स्थाणुधीर्निवर्त्यते, एवम् अह ब्रह्मासीति श्रुतिवाक्योत्थधिया, पूर्व लब्धप्रसरा 'अह मनुष्य, चक्षुष्मान्, बुद्धिमान्'–

इत्यादिरूपा अशेषा अहंबुद्धिरपि निवर्त्यते इति न चित्रम् । तस्मादह ब्रह्मास्मीति श्रुतिव्यपदेशो नाहम आत्मधर्मत्वमाधातुमलम् इत्यभिप्राय ॥

यत्तूच्यते 'तदात्मानमेवावेत्' (१-४-१०) इति श्रुतिर्ब्रह्मात्मनोऽप्यहंरूपतामाचष्ट इति । तदसत् । वस्तुतो ब्रह्मरूपाणामेव सतां जीवानाम् अहममिमानव्यपनेतृत्वेनैव तस्यापि वाक्यस्योपक्षयात् । कथम् ? 'ब्रह्म वा इदमग्र आसीत्' इति । यदिदमस्मिन् शरीरे द्रष्टृत्वादिरूपेण गृह्यते तदग्रे प्रागप्रतिबोधादपि, ब्रह्मैवासीत् सर्वं च । अप्रतिबोधात्तु 'अब्रह्मास्म्यसर्वं च' इत्यात्मान मिथ्याध्यासवशादमन्यत इत्यर्थ । तदात्मानमेवावेदह ब्रह्मास्मीति तत् पुन शास्त्राचार्योपदेशादात्मानमेव स्वाभाविकमहंप्रत्ययसाक्षिण ब्रह्मात्मानमवेत् अह ब्रह्मास्मीति । योऽय स्थाणु पुमानेष इतिवत् अहंबुद्धिव्यपनयेन ब्रह्मात्मानमेवावेत् । तस्मात्सर्वमभवत् । तस्मादेवाऽसर्वत्वापादकाहंप्रत्ययबाधकब्रह्मप्रत्ययादेव तत्स्वाभाविक सर्वत्वमाप्नोदिव इत्यर्थ । तदेवमप्रतिबुद्धजीवजातस्याहंप्रत्ययगम्यत्वव्यपनयनेन स्वाभाविकब्रह्मात्मताप्रकाशकत्वान्नोदाहृतवाक्यस्य ब्रह्मण्यहंरूपताबोधकत्वमस्तीति निरवद्यम् ॥

**बाधसामानाधिकरण्योक्तिर्नायुक्ता –**

केचित्तु व्याख्यातारो बाधाया सामानाधिकरण्यमत्राश्रिनमसहमाना आहु । इदमापातत । वस्तुतस्त्वहमथजीवबाधे मोक्षासिद्धया बाधसामानाधिकरण्योपगमानुपपत्ते । भेदभ्रमनिवर्तकमहावाक्यस्यात्रैक्यपरत्वेनाखण्डचैतन्याभिव्यञ्जकनिर्विकल्पकज्ञानद्वारा सकार्याज्ञानव्यपनेतृत्वमेवेति । तदिदमविचारित सुन्दर वचनम् । कथम् ? न हि मोक्षेऽहमर्थस्य जीवस्य बाधमनुमोदतेऽत्राऽऽचार्य, किं तर्हि तस्याहंप्रत्ययगम्यत्वरूपजीवत्वस्यैव । न च मोक्षे जीवत्वस्यानुवृत्तिरिष्यते कैश्चिदप्यद्वैतवादिभिरिति । न चेद् बाधाया सामानाधिकरण्य सप्रदायाध्वना अनागतमिति युक्तमास्थातुम् । "यदविद्याप्रत्युपस्थापितम् अपारमार्थिक जैव रूप कर्तृभोक्तृरागद्वेषादिदोषकलुषितम् अनेकानर्थयोगि, तद्विलयनेन तद्विपरीतम् अपहतपाप्मत्वादिगुणक पारमेश्वर स्वरूप विद्यया प्रतिपाद्यते । सर्पादिविलयनेनेव रज्ज्वादि" (सू भा १-३-१९) इति,

'देहेन्द्रियसंघाते आत्मबुद्धिरात्मन्येवात्मबुद्ध्या पश्चाद्भाविन्या तत्त्वमसीत्यनया यथार्थबुद्ध्या निवर्त्यते' (सू. भा. ३-३-९) इति भगवत्पादैः शारीरकभाष्ये स्पष्टमनुमोदितत्वादित्यलमस्थाने सङ्क्रमेण ॥ २९ ॥

( मूलम् )

अहंपरिच्छेदव्यावृत्तौ न किञ्चिदव्यावृत्तं द्वैतजातमवशिष्यते द्वितीयसम्बन्धस्य तन्मूलत्वात् । अत आह –

निवृत्तायामहंबुद्धौ ममधीः प्रविलीयते ।
अहंबीजा हि सा सिध्येत्तमोऽभावे कुतः फणी ॥ ३० ॥

विवक्षितदृष्टान्तांशज्ञापनाय दृष्टान्तव्याख्या –

तमोऽभिभूतचित्तो हि रज्ज्वां पश्यति रोपणम् ।
भ्रान्त्या भ्रान्त्या विना तस्मान्नोरगं स्रजि वीक्षते ॥ ३१ ॥

( क्लेशापहारिणी )

अहंबुद्धिव्यावृत्त्यर्थमेव विशेषयत्नकरणे हेतुः –

नन्वत्राहंबुद्धेरेव व्यपनये किमिति महान् यत्न क्रियते, न तु ममत्वयत्नेच्छादीनामपि ? सन्ति हि तेषामप्यात्मधर्मत्वेनाध्यासः – इत्याशङ्क्य परिहारार्थत्वेन श्लोकमवतारयति – अहंपरिच्छेदव्यावृत्तावित्यादिना ॥ न ममत्वादीना निवृत्तौ पृथग्यत्न आदरणीयः । तत्कारणीभूताहंकारनिरासेनैव तेषामपि सुनिरस्यत्वात् । कथमेतत् ? तत्राऽऽह–द्वितीयसंबन्धस्य तन्मूलत्वादिति । अहमध्यासो हि सर्वेतराध्यासमूलम् । ततश्च तद्बाधे सर्वस्यापि तत्कार्यभूतस्य नान्तरीयकतया बाधो भवेत् । अतो वृथायासः स्यादितरममत्वादिव्यावृत्तौ प्रयत्नविशेष इत्यभिप्रायः ॥

निवृत्तायामिति ॥ तमोऽभावे दीपादिसहायेन मन्दान्धकारे विनाशिते, निपुणतरवीक्षणेन वा अज्ञानाभावे । यथा अज्ञानमूलैव रज्जुसर्पभ्रान्तिः, ततश्चाज्ञाननिवृत्तौ सर्पनिवृत्तिर्नान्तरीयकी, एवमहंबुद्धिमूलैव

ममत्वादिबुद्धि, तन्निवृत्तौ च स्वत एव प्रविलीयत इत्यर्थ । निवक्षितेत्यादि-संबन्धग्रन्थ श्लोकश्च स्पष्टार्थ ॥ ३० ॥ ३१ ॥

( मूलम् )

अनन्वयाच्च नाऽऽत्मधर्मोऽहङ्कारः –

आत्मनश्चेदहं धर्मो यायान्मुक्तिसुषुप्तयोः ।
यतो नान्वेति तेनायमन्यदीयो भवेदहम् ॥ ३२ ॥

( क्लेशापहारिणी )

आत्मा न नियमेनाहंधर्माविनाभूतः –

ननु च न जातुचिदात्मा अहंरूपतां व्यभिचरति तत्कथं गौरोऽहमिति व्यवहारसाम्यमहं ब्रह्मेति श्रौतव्यवहारस्य ? कथं वा अहंबुद्धिव्यपनयार्थमेव 'अहं ब्रह्मास्मि' इति श्रुतिवाक्यमित्याश्रीयते ? – इत्याशङ्काव्यपनोदनार्थतया श्लोकमवतारयति – अनन्वयाच्चेदित्यादिना ॥

आत्मनश्चेदिति ॥ ननु चात्मधर्मत्वमेव युक्तम् अहम, सर्वत्रानुगमात् इत्याशङ्क्येदमुत्तरम् । सत्यम् यो यस्य स्वाभाविको धर्म, स तमनुगच्छत्येव सर्वास्वप्यवस्थास्विति । यथोष्णिमा वह्निधर्म सन् सर्वदा तमनुगच्छति । न हि वह्निरात्मन स्वभावभूतमुष्णिमानं व्यभिचरति जातुचिदिति । आत्मा पुनर्न सर्वदा अहंरूप । ताद्रूप्यं विहायापि सत्त्वात् । यथा सुषुप्तिमुक्त्यो । सुषुप्तौ तावदहं नान्वेत्यात्मानमिति सार्वजनीनमेतत् । श्रुतिश्चैतमर्थमनुवदति 'नाह खल्वयं एवं संप्रत्यात्मानं जानात्ययमहमस्मीति' (छा. ८-११-२) ये पुन केचित् 'सुखमहमस्वाप्सम्, न किंचिदवेदिषम्' इति सुप्तोत्थितपरामर्शबलादवयन्ति सुषुप्तावप्यहंरूपमनुवर्तत एवेति, तेषां पिण्डमुत्सृज्य कूर्परं लेढीति न्याय आपतति । यतस्ते प्रत्यक्षं सौषुप्तानुभवं प्रत्याख्याय स्मृत्याभासबलेनानुभवविरुद्धमप्यनुमित्सन्ते । न हि कश्चिज्ज्ञाता जातुचिदयमहमस्मीति स्वात्मानं वेदितुं प्रभवति सुषुप्ते । न च ज्ञातृ रूपमनुवर्तते अथ च तत्र वेद्मीति युक्तियुक्तं स्याद्वच. । श्रुतिश्च सद्ब्रह्मगा परीभाव एव निमित्तं तत्र वेदनाभावे इति सुस्पष्टमाह 'सति संपद्य न विदु.'

(छा. ६-९-२) इति । तस्मात्सार्वजनीनानुभवानुसारिणां नास्त्येवाहमनुवृत्तिः सुषुप्ते । तदेवं सुषुप्तेऽनन्वयान्नात्मधर्मोऽहंरूपमिति सिद्धम् । मुक्तौ तु 'एवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एव । एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति' (बृ. २-४-१२) इत्यादिश्रुतेरहमनुभवानन्वयोऽवगम्यते । तदेवं मुक्तिसुषुप्तयोरननुगमात् नाहंरूपमात्मनो धर्मः, अन्यदीयोऽन्तःकरणस्यैव त्वयं अहङ्कारः धर्मो भवेत् इति स्थितम् ॥ ३२ ॥

(मूलम्)

आत्मधर्मत्वाभ्युपगमे अपरिहार्यदोषप्रसक्तिश्च –

यद्यात्मधर्मोऽहङ्कारो नित्यत्वं तस्य बोधवत् ।
नित्यत्वे मोक्षशास्त्राणां वैयर्थ्यं प्राप्नुयाद् ध्रुवम् ॥ ३३ ॥

स्यात्परिहारः स्वाभाविकधर्मत्वाभ्युपगमेऽपि, आम्रादिफलवदिति चेत्तन्न –

आम्रादेः परिणामित्वाद्गुणहानिर्गुणान्तरैः ।
अविकारि तु तद्ब्रह्म न हि द्रष्टुरिति श्रुतेः ॥ ३४ ॥

अहङ्कारस्य चागमापायित्वात्, तद्धर्मिणश्चानित्यत्वं प्राप्नोति –

आगमापायिनिष्ठत्वादनित्यत्वमियाद् दृशिः ।
उपयन्नपयन् धर्मो विकरोति हि धर्मिणम् ॥ ३५ ॥

अस्त्वनित्यत्वं कम्रुपालभेमहि ? प्रमाणोपपन्नत्वादिति चेत् । तन्न –

सदाचित्सुसमाक्षितं स्वतःसिद्धं न पार्यते ।
अपह्नोतुं घटस्येव कुशाग्रीयधियाऽऽत्मनः ॥ ३६ ॥

(क्लेशापहारिणी)

आत्मनोऽहमर्थतां ब्रुवतां पक्षे दोषः –

विपक्षे बाधकमाह – आत्मधर्मत्वाभ्युपगम इति ॥ यद्यात्मधर्म इति । नित्यत्वमप्यस्तु का नो हानिरित्यत आह – नित्यत्व इति ।

अहङ्कारो हि नियमेन रागद्वेषादिभि संसारधर्मै सदूषित । यदि तु ते मोक्षेऽप्यनुवर्तेरन्, कृत मोक्षोपदेशशास्त्रैरित्यर्थ ॥

अत्र केचिदधुनातनवेदान्तिनः सम्प्रदायान्तरमवष्टभ्य प्राहु – यदेतदुच्यते यद्यात्मा अहरूप स्यात् तर्हि मुक्तावपि तद्रूपमनुयायात् । तथात्वे च मोक्षशास्त्राणा वैयर्थ्यमाप्नोतीति । तत्र विपरीतमेव वस्तुवृत्तम् । यत्कारण यस्यैव नाहमर्थ आत्मा तस्यैव तु मोक्षशास्त्राणा वैयर्थ्य प्रादु ष्यात् । कथम्? य एव परमार्थतो भ्रान्त्या वा आध्यात्मिकादिदु खैर्दु खिन स्वात्मान मनुसंधत्ते 'अह दु खी' इति, स एव हि सर्वमेतद्दु खजातमपुनर्भवमपोह्य कथमहमनाकुल स्वस्थो भवेयमित्युत्पन्नमोक्षरागस्तत्साधने प्रवर्तते । यदि तु साधनानुष्ठानेनाहमेव न भविष्यामीत्यवगच्छेत्, अपसर्पेदेवासौ मोक्षकथा प्रस्तावात् । ततश्चाधिकारिविरहादेव ध्रुव सर्व मोक्षशास्त्र व्यर्थ स्यादिति । अत्र वय पृच्छाम । केय विभीषिकेति? किमहशब्दवाच्यत्वमेवात्मन स्वरूपमि येनदमिप्रेत्येदमुच्यते, आहोस्वित् स्वात्मनो व्यतिरिक्तोऽहधर्मोऽपि विद्यते तस्मिन्निति । तत्र न तावद् द्वितीय कल्प । सुषुप्तावह नानुवर्तते, अथ च नात्मविनाशस्तत्रेति श्रुतियुक्त्यनुभवावष्टम्भेन साधितत्वात् । सुषुप्ता विवाहरूपविगमेऽपि मुक्तावहशब्दोपलक्षितात्मस्वरूपानुवृत्तेरप्रतिबन्धात् । ननु तथापि किं तेन? मयि विनष्टेऽपि मत्तोऽन्यत्किमपि चैतन्यमवस्थास्यत इति मत्वा न हि कश्चिद्बुद्धिपूर्वकारी प्रवर्तते । अत एवमपि तदवस्थमेव मोक्षशास्त्र वैयर्थ्यमिति नाय पन्था । तस्मादहमर्थस्यैव ज्ञातृतया सिध्यत प्रत्यगात्मत्व भवता अकामेनाप्यभ्युपगन्तव्यमिति चेत् । तदेतदनाकलिताऽस्मदभिप्रायस्य वृथायासफल्क प्रत्यवस्थानम् । यतो न वय मत्तोऽन्यत्किंचिच्चस्य मोक्षेऽवतिष्ठत इति ब्रूम । किं तर्हि, अहशब्दलक्ष्यार्थ आत्मैवावतिष्ठते, न त्वहधर्मोऽपीति । एतेन, अहशब्दवाच्यत्वमेवात्मन स्वरूपमिति प्रथमकल्पोऽपि प्रत्युक्त । अहशब्दवाच्यत्वाभावेऽपि सुषुप्तावितात्मस्वरूपस्य मुक्तावपि तल्लक्ष्यत्वादेवाह शब्दगम्यत्वमत्र्यवहारोपपत्ते । यस्तु तत्राहप्रत्ययविनाशादेवात्मनोऽपि नाश शङ्कते, तस्य सुषुप्तावात्मनाशभिया सुषुप्त्यपसरणमपि प्रसज्यत इत्युपहास

एवायं श्रुतिसंविदनुसारिणां स्यादित्यलं शब्दप्रत्ययार्थानां विवेचनेऽसमर्थैर्विवादेनेत्युपरम्यते ॥ २३ ॥

स्वाभाविकधर्मस्याप्याम्रफलस्याम्लादेरिव निवृत्त्युपपत्तेः कुचोद्यमेतदिति शङ्कान्तरमुत्थाप्य समाधत्ते समनन्तरोत्तरः श्लोकः। तत्र शङ्कामनुवदति — स्यात्परिहार इति ॥ परिहारार्थं श्लोकमवतारयति — तन्नेति ॥

आम्रादेरिति ॥ सावयवस्याम्रादेः परिणामित्वान्माधुर्यादिगुणान्तरैरुद्भूतैरम्लादेः पूर्वगुणस्य हानिर्भवति। तत् अहङ्काराश्रयत्वेन भवदभिमतं ब्रह्म तु अविकारि, अपरिणामि। कूटस्थनित्यमिति यावत्। अतस्तस्मिन् धर्मान्तरोत्पत्तिस्तेनाहंधर्मस्याभिभूतिर्वा न शक्यशङ्केत्यभिप्रायः। ब्रह्मणोऽविकारित्वमेव कुतोऽवसितम्? तत्राह — न हि द्रष्टुरिति। 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्' (बृ. ४–२–२३) इतीयं हि श्रुतिरात्मनः कूटस्थनित्यचैतन्यस्वभावतामाह। तथा चाहङ्कारस्य तद्धर्मत्वे न कदाचिदपि तस्य परिहारो भवेत्, चैतन्यवदेवेति भावः ॥ २४ ॥

अथाऽऽत्मा कूटस्थचैतन्यस्वभाव्येनैवावतिष्ठताम्। अहमस्तु तद्धर्मस्य परिहारोऽपि निमित्तान्तरेण भविष्यतीत्याशङ्क्य तत्परिहारत्वेन श्लोकान्तरमवतारयति — अहङ्कारस्य चेति ॥

आगमापायिनिष्ठत्वादिति। आगमापायिशीलोऽहङ्कारः। तस्य निष्ठा धर्मत्वेन अवस्थितिः यस्मिन् दृशौ सः आगमापायिधर्मनिष्ठत्वादेव हेतोरनित्यत्वं प्राप्नुयात्। कस्मात्? उपचयापचयौ धर्मौ हि यस्मात् धर्मिणं दृशिरूपमात्मानमवश्यं विक्रोति। धर्मस्यागमादुपचयः, तदपायाच्चापचयः — इत्येवं विकारोऽपरिहार्यो धर्मिणि। सविकारस्य च ध्रुवमनित्यत्वमिति भावः ॥ २५ ॥

आत्मनो नित्यत्वं दुरपह्नवम् —

अथ वैयात्यात् पूर्वपक्षी सिद्धान्तहानिमप्यलक्षयित्वा शङ्कते अस्त्विति। अथवा, एतन्मध्येऽहंप्रत्ययालम्बनमालयविज्ञानत्वेन स्वीकृत्य तद्व्यतिरिक्तमात्मानममानयन् विज्ञानवादी शून्यवादी वा शङ्कते–अस्त्विति।

प्रमाणोपपन्नत्वादिति, आगमापायित्वाद् निक्रियमाणस्यैव नदीस्रोतोज्वालादिवदेकत्वभ्रान्त्यावहत्वोपपत्तेर्वा तस्यानित्यत्वमेवास्तु । नात्र कस्यचिदप्युपालम्भप्राप्तावसर इत्यर्थः । तदतिरिक्तस्याप्रामाणिकस्याऽऽत्मन आनयनेन तु किमपि प्रयोजनं न पश्याम इति तु हृदयम् । शङ्कानिरासि श्लोकमवतारयति – तन्नेति ॥

सदेति ॥ आत्मनः सदाविलुप्तसाक्षित्वं कूटस्थचैतन्यस्वरूपतया दृष्टेरविपरिलुप्तत्वाद् युगपत्समाक्षात्सर्वदर्शनस्वभावत्वम् । काल प्रत्यपि साक्षित्वेन कालानवच्छिन्नत्वादिति भावः । न त्वहंप्रत्ययगम्यस्येव पर्यायेण द्रष्टृत्वमिति तद्वैलक्षण्यद्योतनार्थमिदं विशेषणम् । तच्च साक्षित्वं स्वतःसिद्धं स्वसिद्धये प्रमाणान्तरानपेक्षम् । प्रमाणानामपि तदीयचैतन्यनिर्भासिततयैव सिद्धेरिति भावः । न ह्यहंप्रत्ययगम्यात्माभासव्यतिरेकेण तत्साक्षी कूटस्थचैतन्यस्वरूप आत्मा केनचित् प्रत्याख्यातुं शक्यः । य एव हि प्रत्याचिख्यासुस्तस्यैवाऽऽत्मस्वरूपत्वात् स चायमविलुप्तदृक्स्वभाव इत्यभ्युपगन्तव्यम् । तद्विलोपहेतोर्विलोपसाधकप्रमाणस्य चाभावात् । न चेदं साक्षित्वं कस्यचिदप्रसिद्धं घटादिप्रमेयवत् । येन प्रमाणाभावान्नास्तीत्यपह्नूयेत । अतस्तदीदृशमप्यपह्नोतुकामेन त्वया स्थवीयोबुद्धित्वमेवाविष्कृतं भवतीत्युपहसति – कुशाग्रीयधियेति । अतिसूक्ष्मबुद्धिनेत्यर्थकेन विशेषणेन वक्रोक्त्या सूक्ष्मविषयविवेचनासमर्थबुद्धिनेति विवक्षितम् ॥ ३६ ॥

( मूलम् )

एतस्माच्च हेतोरहङ्कारस्यानात्मधर्मत्वम् अवसीयताम् –

प्रमाणैर्व्याप्यगम्यत्वाद्घटादिवदहं दृशेः ।<br>
यतो राद्धिः प्रमाणानां स कथं तैः प्रसिध्यति ॥ ३७ ॥

धर्मधर्मिणोरितरेतरविरुद्धात्मकत्वादसङ्गतिः –

धर्मिणश्च विरुद्धत्वान्न दृश्यगुणसङ्गतिः ।<br>
भास्वान्दीप्तिनिज्वालं शैत्यं नाग्निः सिसृप्सति ॥ ३८ ॥

( क्लेशापहारिणी )

आत्माहङ्कारयोर्विरुद्धस्वभावत्वम् –

अहङ्कारस्याऽऽत्मधर्मत्वाभ्युपगमे दोषौ कथितौ तस्य नित्यत्वापत्त्या मोक्षशास्त्रवैयर्थ्यप्रसङ्ग, आत्मनोऽनित्यत्वप्रसङ्गश्चेति । अथेदानीं तयोर्विरुद्धस्वभावत्वाद्धर्मधर्मिभावासम्भव एवेति दर्शयितुमुपक्रमते । तदाह – एतस्माच्चेति ॥

प्रमाणैश्चेति ॥ अहम्प्रत्ययगम्यत्वात् प्रत्यक्षेण, प्रमाणानामाश्रयत्वादनुमानेन, 'अहमस्मीत्यग्रे व्याहरत्तस्मादहन्नामाभवत्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽथान्यन्नाम प्रब्रूते' (बृ १-४-१) इति श्रुतेरागमेन चाव गम्यत्वात् प्रमाणैरवगम्यत्वात् दृश्यो दृश्यरूपस्यात्मन अहङ्कार घटादिवत् विषयभूत एव । तस्मात्तस्यात्मधर्मत्वमसम्भावितम् इत्यर्थं । नन्वात्मापि प्रमाणगम्य एव । अतोऽहमस्तद्धर्मत्वमविरुद्धम् इत्याशङ्क्याह–यतो राद्धिरिति । सिद्धाना हि प्रमाणाना प्रवृत्तिरप्रवृत्तिर्वा कचिदाशङ्क्येत । तेषां राद्धि सिद्धिरेव तु यत आत्मनो भवति, स कथं तै प्रसिध्यतीति शङ्क्येतापि । न हीन्द्रियाणि मनो वा स्वयमचेतनानि चेतनप्रकाश विना सिध्येयु । नापि चैतन्येनानवभासितानि स्वार्थान् प्रकाशयितु प्रभवेयुर्वा । अत सर्वेषां प्रमाणानामात्मत एव सिद्धि । न तु तैस्तस्य । तथा च श्रुति –'श्रोत्रस्य श्रोत्र मनसो मन '(के १–२), 'यन्मनसा न मनुते येनाहुर्मनो मतम्' (के १–६), 'यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति' (के १–७), 'एतदप्रमय ध्रुवम्' (बृ ४-४ २०) इत्यादि । एव च चिद्रूपत्वाचेतनत्वाभ्या स्वत सिद्धत्वप्रमाणसिद्धत्वाभ्या चात्यन्तविरुद्धस्वभावौ आत्माहङ्कारौ, ततश्च न धर्मधर्मिभावस्तयोर्घटमान इत्याशय ॥ ३७ ॥

आशयमेवोद्घाटयति – धर्मधर्मिणोश्चेति ॥ धर्मधर्मित्वेनाभिमतयो रात्माहमोरितरेतरविरुद्धात्मकत्वात्, दृग्दृश्यस्वभावेन युगपदेकत्र भावानुपपत्ते, असंगति असम्बन्ध । न वास्तवधर्मधर्मिभावोऽनयस्तयो इत्यर्थ ॥

धर्मिणश्चेति ॥ न हि विषयिणि चिदात्मके दृश्यगुणस्य विषयभूतान्तःकरणधर्मस्याहङ्कारस्य सङ्गतिरुपपद्यते । तत्र निदर्शनम्, मारुतान्दोलितज्वालपवनसाहाय्येन समिद्धमग्निं न हि शैत्यं सिसृप्सति सामीप्यं गन्तुमप्युत्सहते । तत्र का वार्ता तयोर्धर्मधर्मिभावस्येत्यर्थः ॥ ३८ ॥

( मूलम् )

तस्माद्विस्रब्धमुपगम्यताम् –

द्रष्टृत्वं दृश्यता चैव नैकस्मिन्नेकदा क्वचित् ।
दृश्यदृश्यो न च द्रष्टा द्रष्टुर्दर्शी दृशिर्न च ॥ ३९ ॥

सर्वसंव्यवहारलोपश्च प्राप्नोति । यस्मात् –

द्रष्टापि यदि दृश्यः स्यादात्मेयात् कर्मतां धियः ।
यौगपद्यमदृश्यत्वं वैयर्थ्यं चाप्नुयाच्छ्रुतिः ॥ ४० ॥

कुतः ? यस्मात् –

नालुप्तदृष्टेर्दृश्यत्वं दृश्यत्वे द्रष्टृता कुतः ।
स्याच्चेद्दृगेकं निर्दृश्यं जगद्वा स्याददाक्षिकम् ॥ ४१ ॥

( क्लेशापहारिणी )

उपसंहारः –

'द्रष्टुश्च दृश्यता यस्मान्निषेधात्' (२–२५) इति यत् प्रतिज्ञात तदिदानीमुपसंहरति – तस्मादिति । विस्रब्धं सविश्वासम्, निःशङ्कमिति यावत् ॥

उपगन्तव्यमर्थमाह – द्रष्टृत्वमिति ॥ एकस्मिन्नेव धर्मिणि एकदा युगपद् द्रष्टृत्वं दृश्यता च नैव क्वचिदपि संभवेताम् । तमःप्रकाशयोरिव विरुद्धस्वभावत्वात्तयोरित्यर्थः । द्रष्टा न दृश्यदृश्यः दृश्येन न द्रष्टुं शक्यः । द्रष्टृत्वादेव । न च दृशिः दृष्टिः द्रष्टुः स्वरूपभूतं चैतन्यम् द्रष्टुर्दर्शी । स्वात्मनि क्रियाविरोधात् । न चास्त्यन्यो दृशिर्यो द्रष्टुर्दर्शी अवेदनवस्थाप्रसङ्गात् इत्यभिप्रायः । अतः सर्वथाप्यात्मनि ज्ञेयत्वं नोपपद्यत इति भावः ।

'न दृष्टेर्द्रष्टारं पश्ये' (बृ ३-४-२), 'येनेदं सर्वं विजानाति केन विजानीयात्' (बृ २-४-१२) — इति च श्रुते ॥ ३९ ॥

द्रष्टृदृश्ययोरितरेतरात्मत्वे व्यवहारलोपः —

विपक्षे दण्डमाह— सर्वसंव्यवहारेति ॥ यद्येकस्मिन्नेव धर्मिणि युगपद् द्रष्टृत्व दृश्यत्व च भवेताम्, तर्हि संव्यवहारमात्रस्य लोप कथ प्राप्नुयादिति पृच्छाया तदुत्तरत्वेन श्लोकमवतारयति — यस्मादिति ॥

द्रष्टापीति ॥ द्रष्टापि सन् यद्यात्मा दृश्याया अहधिय कर्मताम् इयात्, तर्हि यौगपद्य स्यात्, द्रष्टुरपि दृश्यत्वम्, दृश्यस्यापि द्रष्टृत्व च युगपत् भवेताम् इत्यर्थ । किं चात ? तत्राह—अदृश्यत्वमिति । अहप्रत्ययलक्षण दृश्यस्यापि द्रष्टृत्वात्, तद्दृश्यत्वेनाभ्युपगम्यमानस्यापि द्रष्टृत्वे तदविशेषात्, दृश्यस्याभाव एव प्रसज्येतेत्यर्थ । दृश्य हि नाम द्रष्टपेक्षमाववत् । तच्चेद् दृश्य द्रष्टृत्वयुक्तमपि हता वर्तेय तस्य दृश्यत्वकथेति । किं चान्यत्, वैयर्थ्यं चाप्नुयात् श्रुति । 'न दृष्टेर्द्रष्टारं पश्ये' (बृ ३-४-२) इत्यादिका श्रुति व्यर्थैव भवेत् । न हि तस्या प्रामाण्य तदा भवति, द्रष्टुरपि दर्शनगोचरत्वादुक्तपक्षे इत्यर्थ ॥ ४० ॥

ननु यौगपद्यमेव तावत् कथम् ? न हि दृश्यस्याहप्रत्ययगम्यता स्वीक्रियतेऽस्माभि येन तस्यापि द्रष्टृता भवेत् । तथा च द्रष्टृत्व दृश्यत्व च युगपदुभयोरपि स्यात्, दृश्याभावश्च । श्रुतेर्वैयर्थ्यं वा कथम् ? न हि श्रुतिरात्मनोऽहप्रत्ययविषयता प्रत्याचष्टे, किं त्विदंप्रत्ययविषयताम् । न चास्माभिरिदंप्रत्ययगोचरत्वेन दृश्य आत्मेत्यभ्युपगम्यते येन श्रुतिविरोध प्रसजत् इत्याशङ्क्य श्लोकेनैव परिहार वक्ष्यामीत्याह—कुतः ? यस्मादिति ॥

नालुप्तदृष्टेरिति ॥ अयमभिप्राय । अलुप्तदृष्टे, आत्मनो दृष्टिलोप मन्तरेण दृश्यत्व कथमपि सम्भवति । द्रष्टृ च दृश्य चेति हि व्याहतम् । अलुप्तदृष्टिश्चायमात्मा । 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' (बृ.४-३-२३) इति श्रुते । अथ चाहप्रत्ययविषयत्वमुररीक्रियतेऽस्य भवतेति । एव च

यद्यहमो दृश्यस्य द्रष्टृत्वमभ्युपगम्यते, अलुप्तदृष्टिस्वभावस्याहंप्रत्ययदृश्यत्वं च, स्फुटं दृश्यत्वद्रष्टृत्वयोर्यौगपद्यम्। दृश्याभावश्च। उभयोरपि द्रष्टृत्वाभ्युपगमात्। श्रुतिवैयर्थ्यं च। अलुप्तदृष्टेरनभ्युपगमात्। यदप्युच्यते, अनात्मा केवलं दृश्य एव, इदंप्रत्ययगम्यत्वात् इति। तदपि मृषैव। अनात्मन एवाहमो द्रष्टृत्वाभ्युपगमात्। तदेवमुक्तदोषत्रयं सुस्थितम्। ननु 'मामहं जानामि' इति ज्ञातृत्वज्ञेयत्वयोरेकत्रापि दर्शनात् द्रष्टुरपि दृश्यत्वमस्तु का हानि? इत्याशङ्क्याह – स्याच्चेदिति। दृश्यस्यापि द्रष्टृत्वं स्याच्चेत्, तथा द्रष्टुरपि दृश्यत्वं स्याच्चेदित्यर्थः। तत्र प्रथमकल्पे सर्वस्यापि द्रष्टृत्वमेवेति दृगेक निर्दृश्यमिति स्यात्। द्वितीयकल्पे तु सर्वस्यापि दृश्यत्वमेवेति जगद्वा असाक्षिकमिति स्यात्, तथा च द्रष्टृदृश्यभाव एव विलुप्येतेति सर्वसंव्यवहार लोप एव स्यादित्यभिप्रायः। यद्यपि असाक्षिकस्य कस्यचिदपि नैव सिद्धिरित्यतोऽनुभवविरुद्ध एवायं विकल्पः, तथापि तर्कमात्रावष्टम्भिनो प्राप्नुयादेवायम् अनिष्टो विकल्प इत्येतावतात्रानिष्टप्रसञ्जकतर्क उपन्यस्त इति बोद्धव्यम् ॥ ४१ ॥

(मूलम्)

उक्तयुक्तिं द्रढीकर्तुमागमोदाहरणोपन्यासः –

आत्मन्यद्दृशेः सर्वं नेति नेतीति चासकृत्।
वदन्ती निर्गुणं ब्रह्म कथं श्रुतिरुपेक्ष्यते ॥ ४२ ॥

महाभूतान्यहङ्कार इत्येतत् क्षेत्रमुच्यते।
न दृशोर्द्वैतयोगोऽस्ति विश्वेश्वरमतादपि ॥ ४३ ॥

(क्लेशापहारिणी)

उक्तयुक्तेः श्रुतिस्मृतिमूलत्वम् –

ननु युक्तिमात्रमिदं भवद्भिरभ्यूहितं यद्यात्मा अहंप्रत्ययगम्यः स्यात् तर्हि यौगपद्यादिकमनिष्टं प्रसज्येतेति। श्रौत एव [illegible] पक्षोऽनुभवानुसारी स्वीकृतोऽस्माभिः। दर्शित एव तावत् अनुभवो मामहं जानामीति। श्रुतिश्च

भवति स्वात्मन एव विषयत्वबोधिनी 'आत्मा वा अरे द्रष्टव्यः' (बृ. २-४-५) इत्यादिना । अतः प्रशिथिलमूलत्वादुपेक्ष्योऽयं युक्त्याभास इत्याशङ्क्याह – उक्तयुक्तिमिति ॥

आर्तमिति ॥ नोक्ता युक्तिर्निर्मूला । श्रुत्यवष्टम्भात् । तथा हि श्रुतिः 'न दृष्टेर्द्रष्टारं पश्येः .... एष त आत्मा सर्वान्तरोऽतोऽन्यदार्तम्' (बृ. ३-४-२), 'बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः .... अतोऽन्यदार्तम्'(बृ. ३-५-१), 'अदृष्टो द्रष्टा ... नान्योऽतोऽस्ति द्रष्टा .... अतोऽन्यदार्तम्' (बृ. ३-७-२३) इति च दृष्टेर्द्रष्टुः शोकमोहाद्यतीतस्यानात्मभूताहङ्काराद्वैलक्षण्यम्, दृश्यात्मप्रत्ययतिरस्कारपूर्वकमेव च मुख्यब्राह्मण्यलाभं च प्रतिपादयति । दृष्टात्मस्वरूपादस्मादात्मनोऽन्यदार्तं विनाशीति चासकृज्ज्ञापयन्ती अनात्मभूतस्याहंगो नित्यात्मधर्मत्वं न्यासेधति । एवम् 'अथात आदेशो नेति नेति' (बृ. २-३-६) इति प्रतिज्ञाय, 'स एष नेतिनेत्यात्मा' (बृ. ३-९-२६, ४-२-४, ४-५-१५)- इति सर्वदृश्यासंस्पर्शित्वेनासङ्गत्वं चासकृद् ब्रवीति । तदेवं निर्गुणं ब्रह्मैवायमात्मा इति सादरं वदन्ती श्रुतिः कथं भवद्भिरुपेक्ष्यते ? कथं वा तद्विरोधमविगणय्य तस्याहंधर्मत्वमूरीक्रियते ? या तूदाहृता श्रुतिः 'आत्मा वा अरे द्रष्टव्यः' (बृ. २-४-५) इति, न तया आत्मनो दर्शनं विधीयते । आत्मव्यतिरिक्तस्य द्रष्टुरभावादशक्यानुष्ठानविधानप्रसङ्गात् । संसारिणश्च आत्मनो दृष्टत्वादेव तद्दर्शनविध्यानर्थक्यात् । तस्मिन् दृष्टेऽपि प्रयोजनाभावाच्च । तद्दर्शनादेव हि संसारबन्ध इति । तस्मादात्मानात्मविवेचनेन सर्वमात्मेति ज्ञानं संपादयेत् इत्येव श्रुत्युपदेशार्थः । तत्रापि दर्शनस्य फलत्वादविधेयत्वे सति तदुपायभूतश्रवणमननयोरेवात्र दर्शनमुद्दिश्य विधानमित्यवसीयते । यथोक्तं बृहद्वार्तिके 'सर्वमात्मेत्यतः पश्येदात्मानात्मविभागवित् । आत्मा द्रष्टव्य इत्युक्त्या हेयोऽर्थोऽत्राभिधीयते' (बृ. वा. २-४-२११), 'दर्शनस्याविधेयत्वात्तदुपायो विधीयते । वेदान्तश्रवणं यस्मादुपायस्तर्क एव च ॥' (बृ.वा. २-४-२१३) इति ॥

य पुनरनुभव उदाहृत 'अह मामभिजानामि' इति, सोऽविद्यया आत्मत्वेन गृहीतस्यैव न परमार्थात्मन इति मन्तव्य । 'आत्मनश्चेदहधर्मो यायान्मुक्तिसुषुप्तयो ॥' (२-३२) इति स्वाभाविकसुषुप्तायनुभवमाश्रित्य तदनन्वयस्य प्रागेव दर्शितत्वात् । अतो भ्रान्तिरेवेयमहप्रत्ययगम्यता प्रतीतिरात्मन इत्यवसीयते । अविद्याकल्पितदेहेन्द्रियाद्यपेक्षणात् तस्या । अविद्याकल्पितत्व च देहादिसर्वद्वैतस्योपपादयिष्यतेऽनुपदमेव । तदेवम् आगमोपपत्तिभ्या प्रसाधितत्वात् साधुरेवायमात्मनोऽहधर्मत्वनिरास इति स्थितम् ॥ ४२ ॥

उक्तार्थे स्मृतिप्रामाण्यम् –

स्मृतिसम्मतश्चायम् आत्मनोऽहधर्मत्वनिरास इत्याह–महाभूतानीति ॥ विश्वेश्वरो हि भगवान् वासुदेवोऽर्जुनाय तत्त्वज्ञानमुपदिदिक्षु, 'इद शरीर कौन्तेय क्षेत्रमित्यभिधीयते । एतद्यो वेत्ति त प्राहु क्षेत्रज्ञ इति तद्विद ॥' (गी १३-१) इति क्षेत्रक्षेत्रज्ञपदार्थौ निरुच्य 'क्षेत्रज्ञ चापि मा विद्धि सर्वक्षेत्रेषु भारत । क्षेत्रक्षेत्रज्ञयोर्ज्ञान यत्तज्ज्ञान मत मम ॥' (गी १३-२) इति क्षेत्रक्षेत्रज्ञस्वरूपनिर्धारणार्थ प्रवृत्त 'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैक च पञ्च चेन्द्रियगोचरा ॥ इच्छा द्वेष सुख दु ख सङ्घातश्चेतना धृति । एतत्क्षेत्र समासेन सविकारमुदाहृतम् ॥' (गी १३-५, ६) इति जगौ । अत्र हि महाभूताहङ्कारादि धृत्यन्त सर्वमेव प्रकृति परिणामभूत पुरुषस्य भोगापवर्गनिष्पादनार्थं देहेन्द्रियाद्याकारेण सहन्यमान क्षेत्रसंज्ञक शरीरमित्यभिधत्ते भगवान्, न तु तस्य दृशिरूपक्षेत्रज्ञधर्मतामाचष्टे । अतोऽवगम्यते भागवतमतादपि न दृशे द्वैतयोग द्वितीयधर्मसंबन्धोऽस्तीति । तदेव श्रुतिस्मृतिमूलकत्वान्न शुष्कतर्कमात्रमसदुक्तमिति भाव ॥ ४३ ॥

( मूलम् )

अधुना प्रकृतार्थोपसंहारः –

एवमेतद् दृशग् ज्ञेयं मिथ्यासिद्धमनात्मकम् ।
मोहमूलं सुदुर्बोधं द्वैतं युक्तिभिरात्मनः ॥ ४४ ॥

( क्लेशापहारिणी )

स्थूलसूक्ष्मदेहविवेकमुपसंहृत्य अधुना सर्वस्याप्यनात्मनो मिथ्यात्व मुच्यते वाक्यार्थप्रतिपत्त्यर्थम् । तदाह – अधुनेति ॥

एवमिति ॥ एवम् यथोक्तरीत्या एतत् स्थूलसूक्ष्मरूप द्वैतम् आत्मन सकाशात् हिरुक् पृथक्कृत्य ज्ञेयम् । दृशिदृश्ययोगानुपपत्ते । अथ तत्स्वभावमाचष्टे – मिथ्यासिद्ध प्रतीतिमात्रसिद्धम् । यद्यपि दृगात्मनि तस्य प्रतीतिर्मिथ्या तथापि तस्य स्वात्मना कुत्रचिदन्यत्र सिद्धि स्यादित्याशङ्क्याह– अनात्मक 'निःस्वभावकम्' इति । कथ तर्हि तस्य प्रतीति ? तदाह– 'मोहमूलम्' इति । अज्ञानवशादेवात्मन्यध्यस्तम् । स्वरूपेण तु सुदुर्बोधम्, तत्त्वान्यत्वाभ्यामनिर्वचनीयमित्यर्थ ॥ ४४ ॥

## ७. द्वैतस्य प्रतीतिमात्रसिद्धत्वम्

( मूलम् )

कुतो मिथ्यासिद्धत्वं द्वैतस्येति चेत् –

न पृथङ् नात्मना सिद्धिरात्मनोऽन्यस्य वस्तुनः ।
आत्मवत् कल्पितस्तस्मादहङ्कारादिरात्मनि ॥ ४५ ॥

तस्मादज्ञानविजृम्भितमेतत् –

दृश्याः शब्दादयः सत्ता द्रष्टृ च ब्रह्म निर्गुणम् ।
अहं तदुभयं भिन्नभ्रान्तिमात्मनि यच्छति ॥ ४६ ॥

( क्लेशापहारिणी )

द्वैतस्य मिथ्यासिद्धत्वं सुदुर्बोधत्वं च –

द्वैतस्य विवेकार्थमनृतत्वमुक्त मिथ्यासिद्धमित्यादिविशेषणै । तत्र मिथ्यासिद्धत्व सुदुर्बोधत्व च तावदुपपादयति समनन्तरश्लोकेनेत्याह – कुत इति ॥

न पृथगिति ॥ आत्मनोऽन्यस्य वस्तुन, अन्यवस्तुत्वेन विभाव्य मानस्येत्यर्थ । न पृथक् स्वातन्त्र्येण सिद्धि । यथा अश्वान्महिष पृथगेव विद्यते, नाश्वापेक्षा तत्प्रतीति । सर्वो ह्यनात्मा आत्मचैतन्यप्रकाशित एवास्तित्व लभते, न चैतन्यप्रकाशनिरपेक्ष इति । नाप्यात्मना आत्मरूपेणैव तत्सिद्धि । तद्वैलक्षण्येनापि प्रतीते । व्यतिरेकेण आत्मवत् । यथा आत्मा स्वेतरनिरपेक्ष स्वयसिद्ध, स्वात्मना नित्याभिन्नश्च, नैवम् अनात्मा स्वयसिद्धात्मभिन्नत्वेन सिद्ध इत्यर्थ । तदेवम् आत्मत्वेन तदन्यत्वेन वा सिद्ध्यभावात्, अहङ्कारादि, अहङ्कारबुद्धिमनइन्द्रियदेहादि, आत्मन्यद्वितीये कल्पित अध्यस्त एवेत्यभिप्राय । एतदेव हि सर्पस्य मिथ्यात्व नाम यद्रज्ज्वज्ञानाद्रज्ज्वप्रतीतित्वम्, रज्जुत्वेन तदन्यत्वेन वा निर्वचनासहत्व चेति ॥ ४५ ॥

## द्वैतस्य मोहमूलत्वम् –

द्वैतस्य मोहमूलकत्व विशदयति श्लोकान्तर इत्याह – तस्मादिति ॥ अज्ञानविजृम्भित भ्रान्तिविलासमात्रमेतदिति कथम् ? तत्राह – दृश्या इति । शब्दादय दृश्या कल्पता दृश्यत्वेनैव नियता, न तु तेषु द्रष्टृत्वप्रतीतिरस्ति । तथा ब्रह्म च सर्वस्याऽऽत्मभूत द्रष्टृ कल्पसम् इति विपरिणामेन योजना । ब्रह्म द्रष्टृ नियमत इति कुत ? यतो निर्गुणम्, दृश्यसंबन्धरहितम् । एव विविक्त स्वभावयोरपि द्रष्टृत्वदृश्यत्वयो कथमात्मनि प्रतीति ? तत्राह-अहमिति । अहकारस्तु तदुभय द्रष्टृत्व दृश्यत्व च बिभ्रत् – स्वेतरानात्मापेक्षया द्रष्टा, आत्मापेक्षया तु दृश्य इत्युभयधर्मसंभेदात् स्वाध्यासेन आत्मनि भ्रान्ति यच्छति, आत्माप्युभयरूप इति मिथ्यामति विदधातीत्यर्थ ॥ ४६ ॥

( मूलम् )

तत एवेयम् अभिन्नस्यात्मनो भेदबुद्धिः –

दृगेका सर्वभूतेषु भाति दृश्यैरनेकवत् ।
जलभाजनभेदेन मयूखस्रग्विभेदवत् ॥ ४७ ॥

यथोक्तार्थस्य प्रतिपत्तये दृष्टान्तः –

मित्रोदासीनशत्रुत्वं यथैकस्यान्यकल्पनात् ।
अभिन्नस्य चितेस्तद्वद्भेदोऽन्तःकरणाश्रयः ॥ ४८ ॥

अपहारो यथा भानोः सर्वतो जलपात्रकैः ।
तत्क्रियाकृतिदेशाप्तिस्तथा बुद्धिभिरात्मनः ॥ ४९ ॥

( क्लेशापहारिणी )

आत्मभेदबुद्धिरप्यविद्याविजृम्भितैव –

न केवलमात्मनि दृग्दृश्यताबुद्धिः, किं तु तदनेकत्वबुद्धिरपि अज्ञान-विजृम्भिताहङ्कारकृतैवेत्याह – तत एवेति । आत्मनो भेदबुद्धिः, आत्मनो यो भेदः, तमातन्वती बुद्धिरित्यर्थः ॥

दृगेकेति ॥ अन्तःकरणोपाधिभेदादेव दृग्रूपस्याऽऽत्मनोऽनेकत्वमान मित्यत्र दृष्टान्तः जलभाजनभेदेनेति । यद्यपि मयूखमाली किरणमाली सूर्यः स्वेन रूपेण एक एव, तथापि जलभाजनभेदेन तत्तत्पात्रगतजलभेदेन भिन्न इवावभासते, एवं सर्वभूतेषु स्थावरजङ्गमात्मकेषु क्षेत्रेषु दृश्यैरन्तःकरणैर्भिन्न इवेत्यर्थः । 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥' (१) इत्यादिशास्त्र प्रामाण्यात् । उपाधिभेदादेकोऽपि भिन्न इवाऽऽभातीत्यंशमात्रे दृष्टान्तः । न तु जलभाजनतद्गतजलवदुपाधिवैविध्यमपि वास्तविकं विवक्षितम् । अघटित घटनाचतुरो ह्यनृताहङ्काराध्यासो वस्तुन एकस्मिन्नेव ब्रह्मण्यनन्तजीवावभासता मनन्तजीवोपाधींस्तद्धर्मभेदांश्च प्रत्युपस्थापयतीति तु तत्त्वम् ॥ ४७ ॥

एतदेव विशदयितुं दृष्टान्तान्तरोपादानमित्याह यथोक्तेति ॥

मित्रोदासीनशत्रुत्वमिति ॥ एकस्यैव स्वरूपेण स्थितस्य चैत्रस्य अन्येषां मैत्रडित्थडवित्थानां कल्पनात् मित्रत्वम् उदासीनत्वम् शत्रुत्वं च यथा, तद्वत् अभिन्नस्यैव चितेः चिन्मात्रस्याऽऽत्मनः भेदः, अन्तःकरणाश्रय

अन्त करणभेदेन कल्पितो भेद न त्वात्मन स्वतो भेदोऽस्तीत्यर्थ । अत्र 'चिते' इति धात्वर्थनिर्देशोऽभिप्रेतो चिद्रूपस्यात्मन इति । अथवा एकस्यैव पुरुषस्य अभिन्नस्य स्वतो भेदरहितस्यापीति दृष्टान्तवाक्यगतत्वेनैवाभिन्नस्येति पदस्यान्वयो बोध्य । ततश्च 'चितेरभिन्नस्य' इति भिन्नलिङ्गसमभिव्याहारो निवारितो भवति ॥ ४८ ॥

ननु चान्त करणाश्रयणेनापि नाद्वितीयस्य स्वभावापहारो युक्त । न ह्यग्नि स्वभावत उष्ण सन् अन्याश्रयेणानुष्णो भवेदित्याशङ्क्याऽऽह – अपहार इति । अयमर्थ । नाय स्वभावापहार, परमार्थत किं त्वज्ञानविजृम्भित इत्युक्तम् (२–४७)। तत्र दृष्टान्त । यथा भानो सूर्यस्य स्वरूपप्रतिष्ठितस्य सर्वत स्थितैर्जलपात्रैरपहार यथा च तत्तत्पात्रस्थजलक्रिया चलनाद्या, आकृति ह्रस्वत्वाद्या, तत्तत्पात्रदेशश्चेति तत्तत्क्रियाकृतिदेशानामाप्तिरिवाऽऽप्ति भ्रान्त्यैव, सूर्यस्तु स्वरूपेणैव तादृशक्रियादिभिरसस्पृष्ट एवावतिष्ठते आकाशे, तथैव आत्मन बुद्धिभिरन्त करणै दृश्यत्वानेकत्वादिधर्मापादकै तद्धर्म प्राप्तिरिव भवति भ्रान्त्या, आत्मा तु स्वे महिम्न्येव सदा तिष्ठतीति न कोऽपि दोष इत्यभिप्राय । 'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषै र्बाह्यदोषै । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदु खेन बाह्य ' ॥ (का २–२–११) इति श्रुते ॥ ४९ ॥

( मूलम् )

न च विरुद्धधर्माणामेकत्रानुपपत्तिः । किं कारणम् ?

कल्पितानामवस्तुत्वात् स्यादेकत्रापि संभवः ।
कमनीयाऽशुचिः स्वाद्वीत्येकस्यामिव योषिति ॥ ५० ॥

न चायं क्रियाकारकफलात्मक आभास ईषदपि परमार्थवस्तु स्पृशति । तस्य मोहमात्रोपादानत्वात् –

अभूताभिनिवेशेन स्वात्मानं वञ्चयत्ययम् ।
असत्यपि द्वितीयेऽर्थे सोमशर्मपिता यथा ॥ ५१ ॥

वस्तुयाथात्म्यानवबोधपटलावनद्धाक्षः सन् –

सुभ्रूः सुनासा सुमुखी सुनेत्रा चारुहासिनी ।
कल्पनामात्रसंमोहाद्रामेत्यालिङ्गतेऽशुचिम्　　　　॥ ५२ ॥

( क्लेशापहारिणी )

एकस्मिन्नेवाऽऽत्मनि विरुद्धधर्मसमवायोपपत्तिः –

तदेवं द्वैतस्य मिथ्यासिद्धत्वात्, मिथ्यासिद्धाहंधर्मसंपर्कादेव विरुद्धधर्माणामप्येकस्मिन्नेवाऽऽत्मनि प्रतीतिरुपपद्यते । अतः कथमेकस्यैव युगपद् द्रष्टृत्वं दृश्यत्वं च, एकत्वमनेकत्वं चेति विरुद्धधर्माश्रयत्वमुपपद्यत इति चोद्यस्यानवसर इति श्लोकेन प्रतिपाद्यत इत्याह – न चेत्यादि । उपपत्तिमेव विवक्षुराक्षेपमुत्थापयति किं कारणमिति ॥

कल्पितानामिति । एकस्यामेव योषिति कमनीयेति कामुकस्य, अशुचिरिति विरक्तस्य, स्वाद्वीति शुनश्च विरुद्धधर्माणां कल्पना यथोपपद्यते, एवम् एकत्रैवाऽऽत्मनि विरुद्धानेकधर्माणां मध्यारोपितानां संभवोऽस्ति । कल्पितानामवस्तुत्वादेवेत्यर्थः ॥ ५० ॥

अध्यारोपितधर्मैरात्मा स्वल्पमपि न संपृच्यत इत्याह – न चायमिति ॥ अयम् अहमाद्युपाधिवशतः प्रतीयमानः क्रियाकारकफलात्मकाभासः ईषदपि परमार्थवस्तु न स्पृशति । उपलक्षणमिदम् । अद्वितीयात्मनो नित्यशुद्धबुद्धत्वादयो मिथ्यासिद्धाहमाद्यनात्मानम् ईषदपि न स्पृशन्तीत्यपि द्रष्टव्यम् । उक्तं हि भाष्यकारैः ' तत्रैवं सति यत्र यदध्यासस्तत्कृतेन दोषेण गुणेन वा अणुमात्रेणापि स न संबध्यत ' इति । तदेतत्कुतः ' तस्य क्रियाकारकाद्याभासस्य मोहमात्रोपादानत्वात् । वस्तुयाथात्म्यानवबोधेनाध्यारोपितत्वादित्यर्थः । उपादानशब्दोऽत्र क्रियाकारकाद्यनिर्वचनीयवस्तूत्पत्तिकारणमित्यर्थक इति तु न भ्रमितव्यम् । अन्थावतारप्रघट्टके 'द्वैतस्य च शुक्तिकारजतादिवत् सर्वस्यापि स्वत सिद्धाद्वितीयात्मानवबोधमात्रोपादानत्वात् ' इतिवदज्ञाननिमित्तकल्पनाकृतप्रतीतिमात्रशरीरत्वादिति ऋजुवर्त्मनैव वाक्यार्थग्रहणे प्रतिबन्धकाभावात् ॥

अभूताभिनिवेशेनेति । अयं लोकः, द्वितीयेऽर्थे असत्यपि अभूते अवस्तुनि मिथ्यासिद्धे प्रतीतिमात्रशरीरे अभिनिवेशेन स्वात्मानं वञ्चयति । तत्र दृष्टान्तः सोमशर्मपिता यथेति । अजाते एव सोमशर्मणि पुत्रे जातत्वाभिनिवेशेन स्वमनोरथकल्पितां भार्यां तिताडयिषुर्ब्रह्मचारी सक्तुभाण्डं भित्त्वा भृशं शुशोचेति प्रसिद्धेयमाख्यायिका पञ्चतन्त्रे । तत्र यथाऽसौ सोमशर्मपिता मिथ्याभिनिवेशेन भिक्षासक्तून् प्रणाश्य स्वात्मानमेव पाण्डरं कृत्वा वञ्चयति स्म तद्वदयं लोकोऽपि संसारिणमात्मानमभिमन्यमान इत्यर्थः । उक्तं ह्यभियुक्तैः 'अभूताभिनिवेशोऽस्ति द्वयं तत्र न विद्यते ।' (मा. का. ४–७५), 'अभूताभिनिवेशाद्धि सदृशे तत्प्रवर्तते' (मा. का. ४–७८) इति च ॥ ५१ ॥

अभूताभिनिवेशेन प्रवृत्तौ दृष्टान्तान्तरम् –

अत्रैव दृष्टान्तान्तरमाह श्लोकान्तरमित्याह – वस्तुयाथात्म्येति ॥ वस्तुतत्त्वस्य अनवबोध एव पटलं नेत्ररोगः, तेनावनद्धमावृतं मनोरूपं अक्षि चक्षुरिन्द्रियं यस्य स तादृशः सन् इत्यज्ञाननिमित्तत्वं कल्पनायामुच्यते ॥

सुभ्रूरिति यथा कल्पनामात्रसंमोहात् अशुचिमपि स्त्रियमालिङ्गति, एवं दार्ष्टान्तिकेऽपि कल्पनामात्रसंमोहादेव क्रियाकारकफलात्मताभिष्वङ्ग इति भावः ॥ ५२ ॥

## अहंमतिबाधे आत्मनोऽद्वैतता

( मूलम् )

सर्वस्यानर्थजातस्य जिहासितस्य मूलमहङ्कार एव । तस्याऽऽत्मानात्मोपरागात् । न तु परमार्थत आत्मनोऽविद्यया तत्कार्येण वा संबन्धोऽभूत्, अस्ति, भविष्यति वा । तस्यापरिलुप्तदृष्टिस्वाभाव्यात् –

दृश्यानुरक्तं तद्द्रष्टृ दृश्यं द्रष्ट्रनुरञ्जितम् ।
अहंवृत्त्योभयं रक्तं तन्नाशेऽद्वैतताऽऽत्मनः ॥ ५३ ॥

( क्लेशापहारिणी )

अहंविवेकोपसंहारः --

एवं तावदात्मन्यनात्मसंबन्धप्रतीतिः, अनेकत्वप्रतीतिः, क्रियाकारकफलात्मताप्रतीतिः, विरुद्धानेकधर्मवत्त्वप्रतीतिश्चेत्येतत् सर्वमनर्थजातम् अज्ञानविलसितभ्रान्तिमात्रमिति प्रदर्शितम् । तत्र च अहङ्कारस्य द्रष्टृत्वदृश्यत्वोभयरूपधारणमेव निमित्तमिति यदादौ प्रतिज्ञातम् ' अहं तदुभयं विभ्रद्भ्रान्तिमात्मनि यच्छति ' (२–४६) इति, तदिदानीमुपसंहरन्नुत्तरश्लोक इत्याह -- सर्वस्यानर्थस्येत्यादि । जिहासितस्य हातुमिष्टस्यानर्थस्य दुःखस्य मूलमहङ्कार एव । अविद्यासिद्धद्वैतरूपे देहादौ आत्मबुद्धिरेव हि धर्माधर्मद्वारेण देहान्तरोपादानहेतुतया दुःखमूलं भवति । न तु परमार्थतः केवलस्याहङ्कारहीनस्य आत्मनः न जानामीत्यविद्यया तत्कार्येण द्वैताध्यासेन वा सबन्धः कदापि घटते । तस्याऽऽत्मनोऽपरिलुप्तदृष्टिस्वाभाव्यात्, अद्वितीयकूटस्थनित्यचैतन्यस्वरूपत्वादित्यर्थः ॥

दृश्यानुरक्तमिति । दृश्यैः शब्दादिभिः अनुरक्तं तदहंरूपमन्तःकरणं द्रष्टृ भवति । दृश्यापेक्षया द्रष्टृपदमनुभवतीत्यर्थः । एवं द्रष्टृनुरञ्जितं स्वद्रष्टृभूतात्मसंबद्धं सत् तदेव दृश्यं भवति । द्रष्टृभूतसाक्षिचैतन्यापेक्षया तद्विषयपदमनुभवतीत्यर्थः । अहंवृत्त्या उभयं रक्तम् । अहंसंबन्धेनैवाऽऽत्मा असङ्गोऽपि द्रष्टृव्यवहारगोचरतामापद्यते । न हि केवलस्य देहेन्द्रियादिष्वहंममाभिमानरहितस्य ' द्रष्टाऽहम्, अहमिदं जानामि ' इत्यभिमानः सुषुप्तादौ दृश्यते । यथैव च सुषुप्ते तथैव स्वप्नजागरितयोरपि तस्य चिन्मात्रत्वमनुभूयत एव । ततश्चेदं निष्पन्नम् -- आत्मनस्तावत् केवलस्य न कर्तृत्वम् । अविकारित्वात् । विकारिणोऽप्यहमो न ज्ञानकर्तृत्वमस्ति । तस्य चैतन्याभावात् । इत्थं च 'अहं ज्ञः' इति व्यवहारोऽयं मिथ्यैवाऽऽत्मनि अहंवृत्त्यनुरागात्कल्पित इति गम्यते । यथोक्तमुपदेशसाहस्र्याम् -- ' बुद्धेः कर्तृत्वमध्यस्य जानातीति ज्ञ उच्यते । तथा चैतन्यमध्यस्य ज्ञत्वं बुद्धेरिहोच्यते ' (उप. १८-६३) इति । अत एव शब्दादेर्दृश्यस्य ' इदं जानामि ' इति व्यवहारगोचरताप्यहं

वृत्त्यनुरागादेवेति गम्यते। न हि केवलेनाऽऽत्मना सामान्येन सर्वावभासकेन इदमिति परिच्छेदेन विषयीकरणं शब्दानामिति युज्यते । परिच्छेदनक्षमस्य त्वहमश्चैतन्याभावात् न केवलेन तेनापि विषयीकरणं शब्दानामिति युक्तम् । अतः 'इदमहं जानामि' इति द्वैतज्ञाने हेतुरहंवृत्तिरेवेति सिद्धम्। तदेतदभिसंधायोक्तम् 'अहंवृत्त्योभयं रक्तम्' इतीति बोध्यम् ॥

अस्त्वेवं द्वैतज्ञानं दृग्दृश्ययोरहमनुरागादेवेति । ततः किं फलतीत्यत आह – 'तन्नाशेऽद्वैततात्मनः' इति। अत इदं फलति यत् तन्नाशे अहमो विषया मिथ्यात्वावधारणेन बाधे सति, आत्मनोऽद्वैतता भवेद् द्वैतप्रतिभानहेतोरभावादिति भावः ॥ ५३ ॥

## ८. आत्मन्यहंशब्दप्रवृत्तिः कथम् ?

( मूलम् )

इह केचिच्चोदयन्ति । योऽयम् अन्वयव्यतिरेकाभ्याम् अनात्मतत्त्वोत्सारितोऽहङ्कारो वाक्यार्थप्रतिपत्तये, सोऽयं विपरीतार्थः संवृत्तः ; यस्मात् 'अहं ब्रह्मास्मि' इति ब्रह्माहंपदार्थयोः सामानाधिकरण्यश्रवणात् अनात्मार्थेन सामानाधिकरण्यं प्राप्नोति। वक्तव्या वा प्रत्यगात्मनि तस्य वृत्तिरिति। सोच्यते प्रसिद्धलक्षणागुणवृत्तिभिः –

नाज्ञासिषमिति प्राह सुषुप्तादुत्थितोऽपि हि ।
अयोदाहादिवत्तेन लक्षणं परमात्मनः ॥ ५४ ॥

प्रत्यक्त्वादतिसूक्ष्मत्वादात्मदृष्ट्यनुशीलनात् ।
अतो वृत्तीर्विहायान्या ह्यहंवृत्त्योपलक्ष्यते ॥ ५५ ॥

आत्मना चाविनाभावमथवा विलयं व्रजेत् ।
न तु पक्षान्तरं यायादतश्चाहंधियोच्यते ॥ ५६ ॥

( क्लेशापहारिणी )

उत्तरग्रन्थसंबन्धः —

एतावता ग्रन्थेनाहङ्कारादेरनात्मत्वमवधृतम् । अथेदानीम् 'अहं ब्रह्मास्मि' इति वाक्ये अहंब्रह्मणोः सामानाधिकरण्योपपादनम् अहंशब्दस्य आत्मनि वृत्तिं विविच्य दिदर्शयिषुः शङ्कामुत्थापयति — इह केचिच्चोदयन्तीति । आत्मव्यतिरेकाभ्यां योऽयम् अहङ्कारोऽनात्मतया उत्सारितः दूरीकृतः, वाक्यार्थप्रतिपत्तये तत्त्वमस्यादिवाक्यार्थस्याविरोधेन प्रतिपत्तिर्यथा स्यादिति, सोऽयं निराकृतोऽहङ्कारः विपरीतार्थः संवृत्तः । यदिदमहङ्कारस्यानात्मतया निराकरणं तदिदं विपरीतार्थम् अभीप्सितविपरीतफलकमेव संवृत्तमित्यर्थः । तत् कस्मादिति ? आह — 'अहं ब्रह्मास्मि' इति ब्रह्माहंपदार्थयोः सामानाधिकरण्येनैव श्रवणात्, अहंपदार्थस्य चानात्मतया निर्धारितत्वात् । अनात्मार्थेन ब्रह्मपदार्थस्य सामानाधिकरण्यं प्राप्नोति । न चैतदिष्टं निर्विशेषब्रह्मात्मवादिनस्तवेति भावः । अथ नेष्यते यथा प्राप्तमनात्मपदार्थसामानाधिकरण्यं ब्रह्मणः, तर्हि कयाचित् वृत्त्या तस्य अहंशब्दस्य प्रवृत्तिर्वक्तव्येत्याह — वक्तव्या वा प्रत्यगात्मनि तस्येति । तस्येति तद्वाचकशब्दस्येत्यर्थः । सिद्धान्ती तु प्रत्यगात्मन्यपि शब्दस्य प्रवृत्तिं दर्शयिष्यन्नित्याह — सोऽच्यत इति । यद्यपि पूर्वमेवास्य परिहारः प्रोक्तः 'योऽयमस्मिन् पुमानेष' (२-२९), 'वाक्यं तद्यन्नेतु तत्' (२-२८)-इत्यस्य व्याख्यानप्रसङ्गेन, तथापि कया वृत्त्या अहंशब्दस्य तत्र प्रवृत्तिरित्येतदधुना स्पष्टीक्रियत इति विशेषः । प्रसिद्धलक्षणागुणवृत्तिभिरिति — प्रसिद्धया मुख्यवृत्त्या, लक्षणावृत्त्या, गुणवृत्त्या चेत्यर्थः ॥

आत्मन्यहंशब्दस्य लक्षणावृत्तिः —

तत्र लक्षणावृत्तिं तावत्प्रसाधयति — नाज्ञासिषमिति ॥ सुषुप्ते नाहं किञ्चिदवेदिषम् इति हि सुषुप्तादुत्थित आह । न च सुषुप्तेऽहङ्कारोऽनुभूतचरः । तथा च 'अहं नाज्ञासिषम्' इति यदाह तदहंविशिष्टस्यासम्भवात् केवलस्यैवाऽऽत्मनः परामर्शोऽयमिति गम्यते । दृष्टश्च वह्निविशिष्टायोवाचकस्य वह्निमात्रे

लक्षणया प्रयोग 'अयो दहति' इत्यत्र। न हि तत्र मुख्यार्थस्यायसो दग्धृत्व समस्ति। एवमयोदाहादिवत्, अयो दहतीत्यादिस्थले इव 'अह ब्रह्मास्मि' इत्यत्रापि अहङ्कार परमात्मनो लक्षण भविष्यतीत्यर्थ। ये त्वत्रास्मदीयाः केचित् 'न किञ्चिदवेदिषम्' इत्युत्थितस्य स्मरणात् सुषुप्ते भावरूपमनिर्वचनीय मज्ञानमहङ्कारोपादानकारणमनुभूतमिति कल्पयन्ति, अननुभूतस्य स्मरणानुप पत्तेरिति हेतुमुपस्थापयन्त, ते सौषुप्तानुभव 'सति सपद्य न विदु सति सपद्यामह इति' (छा ६-९-२), 'प्राज्ञेनाऽऽत्मना सपरिष्वक्तो न बाह्य किञ्चन वेद नान्तरम्' (बृ ४-३-२१) इति च सच्चिन्मात्रे परमात्मनि सपत्तिमेव तत्र ज्ञानाभावे हेतुमुद्घोषयन्ती श्रुति च पृष्ठत कुर्वन्त, आकाशेऽपि पदेन शकुन्ताननुविन्देयु। ये पुनर्वावदूका अत एव सौषुप्तपरामर्शबलात् सुषुप्तेऽप्यहमर्थ एवाऽऽत्मा इत्यध्यवस्यन्ति। ये च तत्रावस्थाया जीवकाल्तम आत्मक त्रितयमप्यनुमातुमीहन्ते, ते उत्तरोत्तर साहसिकतरा इति न तान् प्रति किञ्चिद्वक्तु प्रभवाम ॥ ५४ ॥

आत्मन्यहंशब्दस्य गौणी वृत्तिः –

अथ गुणवृत्त्याप्यहशब्द आत्मनि प्रयुज्यत इति दर्शयति – प्रत्यक्त्वादिति। इदमत्ययगोचरानात्मान्तरापेक्षया प्रत्यक्त्वा१ आन्तरत्वात्, शब्दस्पर्शादिरहितत्वेनातिसूक्ष्मत्वात्, आत्मदृष्ट्यनुशीलनात्, आत्मदृष्टे चिद्रूपाया अनुशीलनात् तदाभासत्वेनानुकरणाच्च, अय अहङ्कार प्रत्यासन्नतर इत्यत, अन्या वृत्ति ममेदमाद्या विहाय अहवृत्त्यैवोपलक्ष्यते आत्मा। तस्मादहशब्देनैव गौण्या वृत्त्या लक्ष्यते। अहगुणानामात्मनि विद्यमानत्वात्। यथा सिहगुणानां शौर्यादीनां सत्त्वात् सिह इति व्यपदिश्यते देवदत्तस्तद्वदित्यभिप्राय ॥ ५५ ॥

आत्मन्यहशब्दस्य मुख्या वृत्तिः –

अथेदानीं मुख्ययापि वृत्त्या मवेदात्मन्यहशब्द इत्युपपादयन्नाह – आत्मनेति। अहवृत्तिर्हि आत्मना अविनाभावमेव मनेन् स्वव्यवहारकाले, अथवा विरम्य मनेन्। न हि सदा 'अहम्' इत्युल्लिखितस्यैव

तिष्ठत्यहङ्कारः । केवलविषयज्ञानकाले अहमुल्लेखाभावात् । यदा तूल्लिखित स्वरूपेण व्यवहारः तदा चित्स्वरूपाविवेकेनैव तथा व्यवह्रियते । केवलस्य तस्य स्वरूपलाभाभावादेव । आत्मनि तत्त्वान्यत्वाभ्यामनिर्वचनीय एव अहङ्कारादिरनात्मा परिकल्पित इति न स्वास्पदं विहाय तस्य क्वचिदपि प्रतीतिर्भवेदिति । न त्वयमहङ्कारः पक्षान्तरं यायात् । आत्माविनाभावं विलयं वा मुक्त्वा स्थित्यन्तरं नैव भजेदित्यर्थः । न हि इदंप्रत्ययगोचरत्वे नाहङ्कारमनुभवति जातुचित् कश्चित् । अतश्च हेतोः आत्माविनाभावेनैव व्यवहारभाक्त्वात् । अहंवृत्तिमूलकमेव व्यपदिशन्त्यात्मानं लोके । अयमहमिति । आत्मा च स्वव्यवहारकाले अस्मत्प्रत्ययगोचरत्वेनैव प्रतीयते । तदेवमात्मा हङ्कारयोरेकलोलीभावपूर्वकमेव संव्यवहारो भवतीति सर्वेषां नः प्रत्यक्षमेतत् । अतो मुख्ययापि वृत्त्या अहंधियोच्यते, अहंशब्देनाभिधीयत आत्मेत्यर्थः ॥

## वाङ्मनसागोचरस्याप्यहंशब्दवाच्यत्वं कथम् ?

ननु मुख्ययापि वृत्त्या अहंशब्देनाभिधीयते चेत्, अहंवृत्तिगम्य एवात्मेति पुनरापन्नम् । तथा च 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' (तै २-४) इति श्रुतिविरोधः प्रसज्येतेति चेत् । लोकबुद्ध्यनुसाराददोष इति ब्रूमः । यदिदमुपवर्णितं प्रसिद्धलक्षणागुणवृत्तिभिरहंशब्दस्य प्रवृत्तिरात्मनीति तदिदं लोकबुद्ध्यनुसारात्, न तु वास्तविकेनैव वृत्तेन । इह हि देहादि मत्यात्मन्यहंप्रत्ययगोचरत्वबुद्धिरज्ञलोकस्य । तदनुसारेण प्रत्यगात्मनि प्रयुज्य मानोऽयमहंशब्दो देहादीनामनात्मत्वेन प्रत्याख्याने यत्परिशिष्टं तत्त्वं तद्वाच्य मप्रत्ययगम्यमपि गमयतीत्यहंशब्दगोचरं इवाहंप्रत्ययगम्य इव च भवत्या-त्मेति कृत्वा कल्पितसंवृत्त्या संव्यवहरन्ति वृद्धाः अहंशब्दगम्य आत्मेति । न तु परमार्थत एव किञ्चिच्छब्दप्रवृत्तिनिमित्तमात्मन्यस्तीति कृत्वा । अतो न दोषः । इत्थमेव च लोकबुद्धिमनुसरन्ती श्रुतिरप्याह 'अहं ब्रह्मास्मि' इति संव्यवहारार्थम् । सर्वथापि त्विदमशभूतमहङ्कारं परित्यज्यैव प्रयोग इत्यनवद्यम् यथोक्तम् उपदेशसाहस्र्याम् 'इदमंशोऽहमित्यत्र त्याज्योऽनात्मेति पण्डितैः । अहं ब्रह्मेति शिष्टोऽशो भूतपूर्वगतेर्भवेत् ॥' (उप ६-६) इति ॥ ५६ ॥

( मूलम् )

कीदृक्पुनर्वस्तु लक्ष्यम् –

नामादिभ्यः परो भूमा निष्कलोऽकारकोऽक्रियः ।
स एवाऽऽत्मवतामात्मा स्वतः सिद्धः स एव नः ॥ ५७ ॥

( क्लेशापहारिणी )

अहं ब्रह्मास्मीत्यत्र विवक्षितमात्मस्वरूपम् –

एव तावत् प्रसिद्धलक्षणागुणवृत्तिभिरात्मन्यहंशब्दस्य प्रवृत्तिरित्युपपादितम् । परमार्थात्मन्यहङ्कारसंबन्धः सर्वथा नास्तीति चोक्तम् । इदानीं यथोक्ताहंशब्दोपलक्षितस्यात्मनः स्वतोरूपं निर्दिदिक्षुः प्रश्नमुत्थापयति – कीदृगिति । लक्ष्यमित्युपलक्षणम् । प्रसिद्धलक्षणागुणवृत्तिभिरहंशब्देन संव्यवह्रियमाणमित्यर्थः ॥

उत्तरमाह – नामादिभ्य इति ॥ अयमाशयः । विधिवदुपसन्नं नारदं प्रति भगवान् सनत्कुमारो नामाद्याशान्तानि वस्तून्युत्तरोत्तरभूयस्त्वेनोपदिश्य तत्तद्ब्रह्मत्वेनोपासीनस्य फलमप्युक्त्वा आशाया अपि भूयस्त्वेन प्राणमुपदिदेश । प्राणब्रह्मोपासकस्य चातिवादित्वं फलमाह – 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' (छा ७-१५-४) इति । ततः प्राणादपि परं ब्रह्मोपदिशन् 'एष तु वा अतिवदति यः सत्येनातिवदति' (छा ७-१५-५) इति सत्यशब्दवाच्येन ब्रह्मणा अतिवदत एव परमार्थातिवादित्वमुक्त्वा तस्य च सत्यस्याधिगमे विज्ञानश्रद्धानिष्ठादिसाधनपरम्परया तदेव सत्यं भूमानमुपदिश्य तल्लक्षणमुवाच–'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' (छा. ७-२४-१) इति । एष परमात्मा नामादिप्राणान्तेभ्यः परो भूमा 'यत्र नान्यत्पश्यति' इत्यादिश्रुत्या वर्णितः । अत एव निष्कलः निरवयवः, अकारकोऽक्रियश्च । क्रियाकारकफलशून्योऽद्वैत इति यावत् । स एव सर्वेषामात्मवतां प्राणिनाम् आत्मा परमार्थतः । न तु देहादिसंहतोऽस्मत्प्रत्ययगम्यत्वेनाभिमतो मीमांसकादीनाम् । स एव च नः सर्वसाक्षित्वात् स्वतः सिद्धः इष्ट अस्माकमित्यर्थः । इदमुक्तं भवति । य एक

स्सर्वभूतेषु गूढः परमात्मा स एवायम् 'अहं ब्रह्मास्मि' इत्यहंपदोपलक्षितश्चे-नोपगम्यतेऽस्माभिः । स च स्वयंसिद्धत्वादेव नाहंप्रत्ययम् अन्यद्वा प्रमाणं स्वात्मसिद्धये काङ्क्षत इति ॥ ५७ ॥

## ९. आत्मनः कूटस्थनित्यता

(मूलम्)

अज्ञानोत्थबुद्ध्यादिकर्तृत्वोपाधिमात्मानं परिगृह्यैव अन्वय-व्यतिरेकाभ्याम् 'अहं सुखी दुःखी च' इत्यहङ्कारादेरनात्म-धर्मत्वमुक्तम् । केवलात्माभ्युपगमे अशक्यत्वात्, फलाभावाच्च । अथेदानीम् अविद्यापरिकल्पितं साक्षित्वमाश्रित्य कर्तृत्वाद्यशेष-परिणामप्रतिषेधार्थमाह —

एष सर्वधिया नृणामविलुप्तैकदर्शनः ।
वीक्षतेऽवीक्षमाणोऽपि निमिषद्ध्रुवोऽध्रुवम् ॥ ५८ ॥

(क्लेशापहारिणी)

ग्रन्थसंबन्धः —

उत्तरग्रन्थस्य संबन्धं स्फुटयितुं वृत्तार्थमनुकीर्तयति — अज्ञानोत्थेति ॥ अयमाशयः । द्रष्टृव्यतिरेकेणाविद्यमानत्वात्, द्रष्टृन्वयेऽपि व्यतिरेकाच्च अहङ्कारादिरनात्मैवेति प्रतिपादितं प्राक्तनग्रन्थेन । तत्र द्रष्टृत्वं स्वाभाविक एवात्मनो धर्म इति स्यात् कस्यचिद्भ्रम इति तत्प्रत्याख्यानायोत्तरग्रन्थ आरभ्यत इति ॥

ननु तर्हि किमिति द्रष्टृत्वमुक्तम्? द्रष्टृत्वमनहङ्कारस्यैव किमित्यहङ्कारादिरनात्मत्वेन न निराकृत इति? तत्राह — केवलात्माभ्युपगमे अशक्यत्वादिति । निर्विशेषस्याव्यवहार्यस्य हि केवलात्मनोऽभ्युपगमे कस्य कुत्रान्वयः, कस्य कुतो व्यतिरेको वा शक्येत दर्शयितुम्? अतोऽन्वयव्यतिरेकयोरस्मिन् सत्येव

शक्यमुपपादनं तस्य द्रष्टृत्वस्याभ्युपगमेनैव तद्दर्शितमित्यर्थः । फलाभावाच्चेति । न हि स्वतःसिद्धे निर्विशेषाद्वयात्मनि, अन्वयव्यतिरेकापेक्षा विद्यते येन तत्साफल्यं भवेदित्यर्थः । निमिति तर्हि तद्द्रष्टृत्वमुत्तरत्र निराक्रियते' - इत्याशङ्क्य तस्यानात्मधर्मत्वादेवेत्याशयेनाह - अज्ञानोत्थेति । 'बुद्ध्यादि' इत्यादिशब्दात् मुख्यप्राण इन्द्रियाणि च गृह्यन्ते । अज्ञानोत्थमेव यद्यपि तत्सर्वं बुद्ध्यादि, तथापि तत्तत्कर्तृत्वमध्यारोप्यैव तस्य तस्य विषयभूतस्यानात्मत्व मध्यवसितं कर्त्रन्वयकर्मव्यतिरेकाभ्यामेतावद्ग्रन्थेन - इत्यभिप्राय ॥

उत्तरग्रन्थार्थः साक्षिमात्र्यान्वयव्यतिरेकौ -

वर्तिष्यमाणग्रन्थविषयमाह - अथेदानीमिति । साक्षित्वमादाय साक्ष्यन्वयसाक्ष्यभूतकर्तृतादिव्यतिरेकाभ्यामात्मनोऽशेषपरिणामप्रतिषेधमाह । उत्तरश्लोकमिति शेषः । साक्षित्वं तर्हि वास्तवं भवेदित्याशङ्क्य परिहरति - अविद्यापरिकल्पितमिति । अविद्याकल्पितसाक्ष्यापेक्षं हि साक्षित्वं नाम-इति भावः ॥

अत्रेदं रहस्यम् । यद्यप्यात्मा स्वतःसिद्धः कूटस्थोऽद्वयश्च नित्यशुद्धबुद्धमुक्तस्वभाव एव परमार्थतः, तथा चान्वयव्यतिरेकोक्तिरत्र न घटत इव, अद्वितीये आत्मनि तद्योगात्, तथापि यावद् वेदान्तवाक्यात् साक्षादात्मप्रतिपत्तिर्न भवति, तावत्तत्प्रतिपत्त्युपायत्वेन कल्पिताश्रयणेनाप्यन्वयव्यतिरेकौ भवत एव । तत्रापि तत्तत्कल्पितान्तरापवादार्थं कल्पितान्तराश्रयण प्रतिपत्तिसौकर्यार्थं भविष्यतीत्यदोषः । यथोक्तं बृहद्वार्तिके 'पुंस्युत्पत्तिप्रधानत्वादन्वयादेरदोषता । न त्वन्वयादिभिर्नेह वस्तुतत्त्वव्यवस्थितिः ॥ यावत्त्वागमतः साक्षान्न वेत्त्यात्मानमद्वयम् । अन्वयाद्यात्मबोधार्थं तावत्तत्केन वार्यते ॥ कल्पनानामपि रज्ज्वादौ कल्पनान्तरसंश्रयात् । कल्पनान्तरापहुति स्याद्यथा तद्वदिहाऽऽत्मनि ॥' (बृ वा २-१ १६७, १७२, १७५) इति । तदेतत्प्रतिपत्तिक्रममाश्रित्यात्रापि अज्ञानकल्पितबुद्ध्यादिकर्तृत्वमध्यारोप्याहङ्कारमुखेन साक्ष्यवाद प्राकृतः । इदानीं स्वज्ञानमात्रोपाधिकृतसाक्षित्वमध्यारोप्य कर्तृत्वमोस्तु वाच्यवाद नियते । यदनन्तरमेव वाक्यज्ञानेनाज्ञानसमुच्छित्ति र्भविष्यतीति ॥

एष इति ॥ एषोऽविलुप्तैकदर्शनः कूटस्थचिन्मात्रदृष्टिस्वभावः, सर्वधिया सर्वबुद्धीनां नृत्तं नर्तनं वृत्तिजातम् । वृत्तमिति पाठान्तरे तच्चरितं वृत्तिजातमित्यर्थः । निमिषद् व्यापारवद् स्वयमवीक्षमाणोऽपि वीक्षणव्यापारशून्योऽपि अध्रुवम् नित्यविकारित्वादनित्यम् स्वयं ध्रुव एव सन् वीक्षते प्रकाशयति । स्वरूपसत्तामात्रेण सवितेव स्वप्रकाश्यमित्यर्थः । तथा च कूटस्थपरिणामिनोर्विवेकः सुगम इति भावः ॥ ५८ ॥

( मूलम् )

ननु सर्वसिद्धान्तानामपि स्वस्वदृष्ट्यपेक्षया उपपन्नत्वात्, इतरेतरदृष्ट्यपेक्षया दुःस्थितसिद्धिकत्वात्, नैकत्रापि विश्वासं पश्यामः । न च सर्वतार्किकैरदूषितं समर्थितं सर्वतार्किकोपद्रवापसर्पणाय वर्त्म संभावयामः । उच्यते । विस्रब्धैः संभाव्यताम् । अनुभवमात्रशरणत्वात् सर्वतार्किकप्रस्थानानाम् । तदभिधीयते —

इमं प्राश्निकमुद्दिश्य तर्कज्वरभृशातुराः ।
त्वाच्छिरस्कवचोजालैर्मोहयन्तीतरेतरम् ॥ ५९ ॥

( क्लेशापहारिणी )

साक्षिणः स्वयंसिद्धत्वम् —

एवं तावत् कूटस्थनित्यः साक्षी वेदान्तमानैकसिद्धः सूत्रित. । अथास्य सूत्रस्य वृत्तिस्थानीयो ग्रन्थ आरभ्यते । प्रथमं तावत् साक्षिणः स्वरूपसिद्धिमेवाक्षिप्य परिहरन् आक्षेपं तावदुत्थापयति — नन्विति ॥ मीमांसकास्तावदहंप्रत्ययगम्यमात्मानमुपगच्छन्ति । लोकायतिकास्तु चैतन्यविशिष्टं कायमेवात्मेत्युपयन्ति । बौद्धाः पुनर्विज्ञानातिरिक्त आत्मा नास्तीत्याहु , तेष्वेव केचित्तु शून्यमेवात्मस्वरूपं मन्यन्ते । तत्र स्वस्वदृष्ट्या मीमांसकादीनां दृष्ट्या स्वस्वसिद्धान्तस्योपपत्तिमत्त्वमस्ति, तदितरदृष्ट्या तु दुःस्थितसिद्ध एव स सिद्धान्त । तत्र किं कारणमेकस्यैव सिद्धान्तस्योपपन्नत्वं विश्वसिम ? एवं च

त्वदभिमतसाक्षिणोऽपि परवादिदृष्ट्यपेक्षया तु स्थितसिद्धिक त्वमेवेति किं कारण मत्रैव विश्वासं बध्नीम ? – इत्याक्षेप्तुरभिप्राय । ननु तथाप्यस्मत्प्रक्रिया सर्वतार्किकसमता किं न स्यात् ? न हि कुत्रचिदपि सर्वेषा सप्रतिपत्तिर्नास्त्येवेति शक्य वदितुम् । यदा च सर्वसंप्रतिपन्न दर्शनमेकमभ्युपगम्यते, तदा अद्वैत दर्शनस्यैव तथात्व युज्यते । यथोक्तममियुक्तै 'अविवादोऽविरुद्धश्च देशित' (मा का ४–२) इति–इत्याशङ्कय परिहरति – न चेति । अयमभिप्राय । न तावन् सर्वे तार्किका अतीतानागतवर्तमानकालीना एकत्र शक्या समाहर्तुम् । न चाद्वैतप्रक्रिया वर्तमानतार्किकैरदूषिता समर्थिता वा भवद्भि सर्वदोष परिहारेण । तस्मात् भवद्वचनमात्रेण न शक्य श्रद्धातु भवदीयमेव दर्शन सर्वसप्रतिपत्तिस्थानमितीति । सिद्धान्ती तु सर्वसंप्रतिपत्तिमप्रत्याख्येया संभाव यिष्यामीत्याह – उच्यत इति । विस्रब्धैर्भवद्भिरिति शेष । श्रूयतामस्मत्सिद्धान्त सर्वसंमत इति । कथम् ? अनुभवमात्रशरणत्वात् सर्वतार्किकप्रस्थानानाम् । न ह्यनुभवमनाश्रित्य तर्क प्रवर्तते । स एव चानुभवोऽस्माक साक्ष्यात्मेति नाविश्वासे कारणमस्तीत्यभिप्राय । तदभिधीयते । यथा चेद तथोच्यते समनन्तरश्लोक इत्यर्थ ॥

**इममिति** ॥ अनुभवमेव प्राश्निक मध्यस्थ सभ्यमुद्दिश्य तर्कज्वरेण भृशमत्यर्थम् आतुरा ज्वरेणार्दिता इव प्रलपन्त । त्वाच्छिरस्कवचोजालै 'अमुकत्वात् इत्थम्', 'अमुकत्वान्न तथा' इति पञ्चम्यन्तहेतुक्तिरूपैरिन्द्रजालै, इतरेतर मोहयन्ति भ्रामयन्ति । यद्यपि तेषा क्वचिदपि तर्के निष्ठा सप्रतिपत्तिर्वा नावगम्यते । तथापि 'ममैवानुभवसंमतस्तर्क, ममैव तु' इति चोद्योपयन्त सर्व अनुभवमेव प्राड्विवाक स्वीकुर्वन्तीति नानुभवरूपे आत्मनि कस्यचिद्विमति रित्यभिप्राय ॥ ५९ ॥

(मूलम्)

अत्रापि चोदयन्ति । अनुभवात्मनोऽपि विक्रियाभ्युप गमे अनभ्युपगमेऽपि दोष एव । यस्मादाह –

वर्षातपाभ्यां किं व्योम्नश्चर्मण्येव तयोः फलम् ।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्समः । ॥ ६० ॥

बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता ।
अथाविकृतिरेवायं प्रमातेति न युज्यते ॥ ६१ ॥

अस्य परिहारः –

ऊर्ध्वं गच्छति धूमे खं भिद्यते खिन्न भिद्यते ।
न भिद्यते चेत्स्यात्तुल्यं भिद्यते चेद्भिदास्य का ॥ ६२ ॥

इत्येतत्प्रतिपत्त्यर्थमाह –

अविक्रियस्य भोक्तृत्वं स्यादहंबुद्धिविभ्रमात् ।
नौयानविभ्रमाद्वृक्षगेषु गतिकल्पनम् ॥ ६३ ॥

( क्लेशापहारिणी )

सिद्धान्ते साक्षिणः स्वयंसिद्धत्वेऽभ्युपगतेऽपि दोषस्तदवस्थ इति शङ्कामुत्थापयति – अत्रापीति ॥ कथमात्मनो सविक्रियत्वेऽविक्रियत्वे वा अभ्युपगते दोषादनिस्तारः ? – इत्याशङ्क्य आक्षेप्ता स्वाशयमुत्तरश्लोकेनाचष्ट इत्याह – यस्मादाहेति ॥

वर्षातपाभ्यामिति । अस्या वैनाशिककारिकाया अयमभिप्राय.। वर्षेण आतपेन वा अविकार्ये आकाशे न कोऽप्यतिशयः क्रियते । चर्मण्येव तु विकार्यस्वभावे तयोर्वर्षातपयोः फलमस्ति सङ्कोचविकासरूपम् । तयोर्भयम् इति क्वचित् पाठः । तत्राप्ययमेवार्थः । तत्राऽऽत्मा चर्मोपमश्चेत् विकार्य-स्वभावश्चेत्, तर्हि तस्यानित्यता ध्रुवेति व्यर्थः साक्षित्वसाधनप्रयासः । अथ खतुल्य, नास्मिन् विक्रिया अभ्युपगम्यते, तर्ह्यसत्समः । न हि तदा अर्थक्रियाक्षमो भवेदात्मा – इत्यभिप्रायः ॥ ६० ॥

एतदेव विशदयति – बुद्धिजन्मनीति । विषयवेदनादिना बुद्धि-जन्मनि तद्यज्ज्ञानोत्पत्तौ पुंसश्च साक्षिरूपस्य पुम्पस्यापि यदि विकृतिः स्यात्, तर्हि तस्यानित्यतैव स्यात् । चर्मादेरिव । ततश्च परमपुरुषार्थस्याभाव एव

प्रसज्येत । तदुपभोक्तु स्थायिन कस्यचिदसिद्धे –इति भाव । अथाविकृति रेवात्मनि ज्ञानसुखदु खादिभिर्बुद्धिविकृतावपि, तदायमात्मा प्रमाता ज्ञातेति, भोक्तेति वा न युज्यते । न हि प्रमाणफलमभुञ्जान प्रमाता, क्रियाफल मभुञ्जानो भोक्तेति वा उपपद्यत इत्यभिप्राय ॥ ६१ ॥

आक्षेप प्रतिबन्ध्या परिहरिष्यन्नाह – अस्येति ॥

ऊर्ध्वमिति । धूमे ऊर्ध्वं गच्छति सति खमाकाश भिद्यते विदीर्यते वा आहोस्विन्न भिद्यते । न भिद्यते चेत् स्यात्तुल्य स्थितिरेव स्याद्धूमस्य न गति – इति दृष्टविरोध । अथ भिद्यते खम् अस्य धूमस्य गमनेन, तस्मिन् पक्षे कास्य भिदा ? कीदृशोऽस्य विभाग इति वक्तव्यम् । तत्तु नैव शक्य निर्वक्तुम् । आकाशस्य विभागे विभक्तावयवयोरन्तरा अनाकाशप्रसङ्गात् इत्यर्थ ॥ ६२ ॥

इत्येतत्प्रतिपत्त्यर्थमिति ॥ एतत्प्रतिबन्दीन्यायोपस्थापने विवक्षि ताशस्य इदमित्थमिति प्रतिपत्त्यर्थम् आह । उत्तरश्लोकेनेति शेष ॥

अविक्रियस्येति ॥ अविक्रियस्यैवाऽऽकाशस्य धूमगमनेन भेद इव भवति धूमगत्युपाध्यविवेकात्, एवमहबुद्धिविभ्रमात् अहविक्रियाविषया बुद्धिरहबुद्धि । तस्या विभ्रमात् अहङ्कार एव ■ परिणामी ■ त्वात्मा इति विवेकाग्रहनिबन्धनभ्रान्ते, अविक्रियस्यैव सत प्रमातृत्वमिव क्रियाफलभोक्तृत्व मिव च भवतीत्यर्थ । तथा च वास्तविकविक्रियाभावान्नानित्यता, अहमात्मनो रन्योन्याध्यासवशात् कल्पितप्रमातृत्वस्यापि संभवान्न दृष्टविरोधोऽपीति नोक्तविकल्पनावकाश इति भाव । तत्र सक्रियोपाध्यविवेकान्निष्क्रियेऽपि क्रियाध्यासे निदर्शनमाह – नौयानेति । यथा नौस्थस्य नावि गच्छन्त्यां तटस्थेष्वगतिष्वपि, नगेषु प्रातिकूल्येन गच्छन्ति वृक्षा इति कल्पनम् नौगति विवेकाभावनिमित्तविभ्रमात्, एव प्रकृतेऽपीत्यर्थ । यथोक्त भगवत्पादै – ' नौस्थस्य प्रातिलोम्येन नगाना गमन यथा । आत्मन संसृतिस्तद्वद्ध्यायतीवेति हि श्रुति ॥ ' (उप ५–३) इति ॥ ६३ ॥

(मूलम्)

यथोक्तार्थविष्करणाय दृष्टान्तान्तरोपादानम् –

यथा जात्यमणेः शुभ्रा ज्वलन्ती निश्चला शिखा ।
संनिध्यसंनिधानेषु घटादीनामविक्रिया ॥ ६४ ॥

अयमंशो विवक्षित इति ज्ञापनायाऽऽह –

यदवस्था व्यनक्तीति तदवस्थैव सा पुनः ।
भण्यते न व्यनक्तीति घटादीनामसंनिधौ ॥ ६५ ॥

तत्र च –

सर्वधीव्यञ्जकस्तद्वत्परमात्मा प्रदीपवः ।
संनिध्यसंनिधानेषु धीवृत्तीनामविक्रियः ॥ ६६ ॥
न प्रकाशक्रिया काचिदस्य स्वात्मनि विद्यते ।
उपचारात्क्रिया सास्य यः प्रकाश्यस्य संनिधिः ॥ ६७ ॥

(क्लेशापहारिणी)

कूटस्थताया जात्यमणिदृष्टान्तः –

कूटस्थनित्येऽपि प्रमातृत्वं कर्तृत्वं भोक्तृत्वं चोपपद्यते उपाध्यविवेकवशादित्येतेव दृष्टान्तान्तरमुच्यत इत्याह – यथोक्तेति ॥

यथा जात्यमणेः उत्कृष्टजात्युत्पन्नस्य महार्घस्य रत्नस्य शिखा प्रभा घटादीनां संनिधानेषु असंनिधानेषु वा यथा शुभ्रा शुद्धैव न तु तत्तद्विषयसंनिधौ तत्तद्रूपिता सती तदसंनिधौ अन्यथा भवति । ज्वलन्त्येव तिष्ठति घटादिप्रकाशनसमय एव तु ज्वलति प्रकाशते, तदसंनिधौ तु न तथा– इति वैलक्षण्यं न भजते , निश्चला न पुनश्चञ्चला विषयप्रकाशकाले स्वयमपि चञ्चला, स्थिरवस्तुप्रकाशनकाले च स्थिरा । एवं यथा सा शिखा अविक्रिया विकारहीनैव तिष्ठति । 'तद्वत्' इति दार्ष्टान्तिकश्लोकस्थेनान्वयः ॥ ६४ ॥

दृष्टान्तदार्ष्टान्तिकयोः कस्मिन्नंशे साम्यं विवक्षितमित्युत्तरश्लोकेन ज्ञापयतीत्याह – अयमंशेति ॥

यदवस्था सा शिखा घटादीनां संनिधौ तान् व्यनक्तीति भण्यते व्यपदिश्यते तदवस्थैव शुभ्रा ज्वलन्ति निश्चला चैव सतीत्यर्थः । तेषामसंनिधौ न तान् व्यनक्तीति भण्यते । न व्यञ्जनसमये केनचिद्व्यापारेण भूततया विकारवतीत्यभिप्रायः ॥ ६५ ॥

अथ दार्ष्टान्तिके विवक्षितांशसाम्यं संगमयति – तत्र चेति । दार्ष्टान्तिके परमात्मनि चेत्यर्थः ॥

सर्वधीव्यञ्जक इति । न केवलमेकस्मिन्नेव पुरुषे बुद्धिवृत्तिव्यञ्जकत्व मात्मनः, यावत् सर्वेष्वपि प्राणिष्वित्यभिप्रायेणोक्तं सर्वधीव्यञ्जक इति । उक्तं हि उपदेशसाहस्र्याम् 'यथा स्वबुद्धिचाराणां साक्षी तद्वत् परेष्वपि ।' (उप ७–२) इति । अथवा संनिध्यसंनिधानेषु धीवृत्तीनामविक्रियः प्रदीपको भवतीति वाक्यशेषात् विषयसंनिध्यसंनिधिषु समान एवाविक्रियः आत्मनः प्रकाश इत्यंशस्यैवात्र विवक्षितत्वात् सर्वासामेव धियां बुद्धिवृत्तीनां व्यञ्जको भण्यत इत्येवार्थः । तदपि युक्तं भगवत्पादैः – 'विकारित्वमशुद्धत्वं भौतिकत्वं न चात्मनः । अशेषबुद्धिसाक्षित्वाद्बुद्धिवच्चाल्पवेदना ॥' (उप ७ २) इति ॥ ६६ ॥

नन्वविक्रिय एव धीवृत्तीः प्रकाशयतीति कथमुच्यते । न हि प्रकाश क्रिया आत्मानमाश्रयमाणा तमविकुर्वती स्वरूपं लभत इत्याशङ्क्य अत्रापि मणिसाधर्म्यमस्त्येवेत्याह – न प्रकाशक्रियेति । अस्यात्मनः प्रकाशनाम्नी क्रिया, स्वात्मनि स्वरूपाश्रिता काचित् ॥ विद्यत एव । कथं तर्हि प्रकाशयतीति उच्यते । यः प्रकाश्यस्य धीवृत्तिजातस्य संनिधिः सैव अस्य क्रियेत्युपचारात् व्यपदिश्यते । यथा मणेर्व्यञ्जनक्रिया मणिस्वरूपभूतैव व्यङ्ग्यसंनिध्यपेक्षया तयोपचर्यते तद्वदित्यभिप्रायः ॥ ६७ ॥

(मूलम्)

मेदं शङ्क्यं सांख्यराद्धान्तोऽयमिति । यतः –

यथा विशुद्ध आकाशे सहसैवाभ्रमण्डलम् ।<br>
भूत्वा विलीयते तद्वदात्मनीहाखिलं जगत् ॥ ६८ ॥

तस्मादेष कूटस्थो न द्वैतं मनागपि स्पृशति । यतः —

शब्दाद्याकारनिर्भासाः क्षणप्रध्वंसिनीर्दृशः ।
नित्योऽक्रमदृगात्मैको व्याप्नोतीव धियोऽनिशम् ॥ ६९ ॥

( क्लेशापहारिणी )

आत्मनोऽद्वैतता —

नन्वेवं यद्यात्मा सर्वबुद्धिवृत्तिसाक्षी कूटस्थचैतन्यमात्रस्वरूप, बुद्धिरेव परिणामिनी तत्तद्विषयसंस्पर्शात् सुखदु खे अनुभवन्ती संसरति, बुद्ध्यात्मनो रविवेकादेव चाऽऽत्मनि संसार कल्प्यत इत्यङ्गीक्रियते, तर्हि प्रकृतिरेव तु कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेप इति वदता साङ्ख्याना सिद्धान्त एवाय वेदान्तापरनाम्नी भवद्भि स्वीकृत इत्याप्नोतीत्याद्यङ्कय परिहरति — मेन शङ्किष्ठा इति ॥

यथेति ॥ आकाशे विशुद्धस्वभाव एव यथा येन प्रकारेण तस्मा देवाकाशात् वाय्वग्निक्रमेण जात जल मेघमण्डलरूपेण प्रादुर्भूय कञ्चित्काल स्थित्वा पुनस्तत्र विलीयमान तिष्ठन्त्यपि जन्मस्थितिलयावस्थास्वाकाशात्मता न व्यभिचरति, तद्वदेवात्मन एव जायमान तेनैव लब्धस्थितिक लीयमान च तिष्ठत्यप्येवम्यान्त्वात्मस्वरूप न व्यभिचरतीत्यभ्युपेमो वयम् । आत्मैव सर्वं बुद्ध्यादिक जगदिति हि वेदान्तसिद्धान्त । नैव साङ्ख्यैरात्मैकत्व प्रकृते परमार्थत आत्मानन्यत्व वा अभ्युपगम्यते । अतो महदत्र वैषम्यमित्यर्थ । अत्रेद तत्त्वम् । नैव वेदान्तनये बुद्धे प्रमातृत्व कर्तृत्व भोक्तृत्व वा तात्पर्येण विवक्ष्यते, किं तर्हि आत्मन कूटस्थनित्यता प्रतिपादयितु बुद्धौ तत्सर्वम् अध्यारोप्यते । वस्तुतस्तु नैवात्मा प्रमातृत्वादिमान्, अविनिर्यत्वात् नापि बुद्धि प्रमातृत्वादिभागिनी । अचेतनत्वात्, अविद्याकल्पितत्वाच्च । तस्मादात्मनि सर्वविशेषरहित एवाद्वितीये स्वरूपविवेकाभावनिबन्धनोऽय प्रमातृत्वादिव्यवहार इति । अत्र तु ग्रन्थभागे प्रतिपत्तिसौकर्यार्थं साङ्ख्यप्रक्रियामवलम्ब्य तावद्बुद्धे परिणाम उच्यते अध्यारोपापवादन्यायेन आत्मन कूटस्थनित्यताबोधनार्थ मिति सर्वमनवद्यम् ॥ ६८ ॥

यस्मादेवमाकाशवत् कूटस्थोऽसङ्गश्च, तस्माद् द्वैतसंबन्धरहित एवाय मात्मा परमार्थत स्वकार्यसंसृष्ट इवाऽऽकाश इत्युत्तरश्लोकार्धमवतारयति – तस्मादिति ॥

अथ द्वैत मनागपि न स्पृशतीति कथमित्येतद्विवरीतुकाम आह – शब्दादीति ॥ अत्रेत्थमाशङ्का भवेत् । यथा हि बुद्धिवृत्तयो स्वस्वविषयान् व्याप्नुवन्ति प्रकाशयन्ति च तथैवायमात्मा बुद्धिवृत्तीर्व्याप्नोति प्रकाशयति च । तत्र कथ बुद्धेरेव विषयसंस्पर्श, न त्वात्मनो बुद्ध्यादिद्वैतसंस्पर्श इति विश्वसिम इति ? अत्र परिहार । यदा धिय बुद्धिवृत्तय शब्दाद्याकारेण परिणता एव तत्तन्निर्भासा भवन्ति, तदा आत्मचैतन्याभासयुक्ता एव च विषयान् प्रकाशयन्ति न तु स्वतन्त्रमेवेति सूचयितु शब्दाद्याकारनिर्भासा इति विशेषणमिति ध्येयम् । किं च ता वृत्तय क्षणप्रध्वंसिन्य । न हि शब्दाकारेण परिणता बुद्धि स्पर्शाकारेण परिणतिमन्तरेण तदाकारनिर्भासा भवेत् । अतस्तस्या विकारित्व विषयिसंस्पर्शेनाशुद्धत्व चावश्यमाचीति भाव । अत एव क्रमदर्शित्वमपि बुद्धे । एकैकविषयाकारतया परिणामेनैव क्रमशो तत्तद्विषयप्रकाशनसामर्थ्यात् । आत्मा पुनर्धियो यथोपवर्णिता व्याप्नोतीव, न तु तत्त्वतस्तदाकारपरिणामेन व्याप्नोति । सदैकरूपत्वात् । बुद्धिवृत्तयो हि जायमाना एव चिद्व्याप्ताश्चिदभासयुक्ताश्च चिदात्मानमाश्रित्यैव जायन्ते यथा आकाशेऽभ्रमण्डलम् इत्युक्तम् । अत एवास्य न द्वैतसंस्पर्शोऽस्तीति भाव । अत एव चायम् अक्रमदृक्, युगपदेव स्वप्रकाशेन तदवस्थेनैव सर्वा धिय प्रकाशयति । जात्यमणिरिव घटादीन् इत्यर्थ । किं चायम् एक एव सर्वा धिय प्रकाशयति । तेन सर्वज्ञश्चाय नाल्पविद्बुद्धिवदित्यर्थ । यथोक्त भगवत्पादैः 'विकारित्वमशुद्धत्व भौतिकत्व न चात्मन । अशेषबुद्धि साक्षित्वाद्बुद्धिवच्चाल्पवेदना ॥' (उप ७–२) इति। तत्राप्यनिश व्याप्नोतीव न तु बुद्धिवृत्तिवत् स्वव्याप्तिक्षणावच्छेदेनेत्यर्थ । यत एवरूप, तस्मादेव कूटस्थो द्वैत मनागपि ईषदपि न संस्पृशतीति संबन्धवाक्यमथयत शब्द योजना ॥ ६९ ॥

( मूलम् )

एवं च सति बुद्धेः परिणामित्वं युक्तम् –

अतीतानागतेहत्यान् युगपत्सर्वगोचरान् ।
वेत्त्यात्मवन्न धीर्यस्मात्तेनेयं परिणामिनी ॥ ७० ॥

( क्लेशापहारिणी )

बुद्धेः परिणामित्वोपपत्तिः –

अपरिणामित्वादेव बुद्धेः परिणामित्वमित्याह – एवं च सतीति ॥ तदेव स्पष्टयति –, अतीतेत्यादिना ॥ कालत्रयगतान् सर्वविषयानपि युगपत् यथा आत्मा वेत्ति तथा न वेत्ति, किं तर्हि क्रमेणैव वेत्ति यस्मात् तेन हेतुना इयं परिणामिनी भवितुमर्हतीत्यर्थः ॥ ७० ॥

( मूलम् )

ततश्चैतत्सिद्धम् –

अपश्यन् पश्यतीं बुद्धिमशृण्वन् शृण्वतीं तथा ।
निर्यत्नोऽविक्रियोऽनिच्छन्निच्छन्तीं चाप्यलुप्तदृक् ॥ ७१ ॥

द्विषन्तीमद्विषन्नात्मा कुप्यन्तीं चाप्यकोपनः ।
निर्दुःखो दुःखिनीं चैव निःसुखः सुखिनीमपि ॥ ७२ ॥

अमुह्यमानो मुह्यन्तीं कल्पयन्तीमकल्पयन् ।
स्मरन्तीमस्मरंश्चैव शयानामस्वपन्मुहुः ॥ ७३ ॥

सर्वाकारां निराकारः स्वार्थोऽस्वार्थां निरिङ्गनः ।
निस्त्रिकालस्त्रिकालस्थां कूटस्थः क्षणभङ्गुराम् ॥ ७४ ॥

निरपेक्षश्च सापेक्षां पराचीं प्रत्यगद्वयः ।
सावधिं निर्गतेयत्तः सर्वदेहेषु पश्यति ॥ ७५ ॥

( क्लेशापहारिणी )

आत्मनः कूटस्थता सर्वबुद्धिसाक्षित्वादेव –

सर्वबुद्धीनामपि साक्षित्वादेवाऽऽत्मन कूटस्थत्वसिद्धिरित्याह – ततश्चेति ॥

अपश्यन्नित्याद्याः 'सर्वदेहेषु पश्यती'त्यन्ता पञ्च श्लोका सुगमार्था। बुद्धिरेव श्रोत्रादिरूपपरिणामवतीत्येतत् महाभारते दर्शितम् शृण्वती भवति श्रोत्रम्' (मो ध २४८–४) इत्यादिना । आत्मनश्च श्रोत्रादिसाक्षित्व श्रुत्यैव दर्शितम् 'दृष्टेर्द्रष्टा श्रुते श्रोता' (बृ ३–४–२) इत्यादिना । सुखदु ख संनिपातेऽन्त करणे स्वात्मान प्रतिलभमानौ प्राप्तपरिहारविषयकवृत्तिविशेषौ इच्छाद्वेषौ । कामप्रतिघातनिमित्तोऽपराधित्वेन विभावितवस्तुनिमित्तो वा अमर्ष कोप । सुखदु खे प्रसिद्धे इष्टानिष्टप्राप्तिनिमित्ते हर्षविषादजनके । मोहोऽविवेक निमित्तो भ्रम । कल्पन विषयसङ्कल्पविकल्पनादिरूपम् । स्मरण कालान्तरेऽनु भूतस्य तत्संस्कारोद्बोधे सति वर्तमानकाले एवमसावासीदिति विषयाकरणम् । इष्टयादय स्मरणान्ता सर्वासामनुक्तानामपि वृत्तीनामुपलक्षणार्था । शयन सुप्तिस्तमोनिमित्त सर्वव्यापारोपरम । तदेव सर्ववृत्तिभि सर्वाकारां तत्तद्विषया कारेण परिणामिनीं बुद्धिं स्वय निराकारो निर्विकार एव सन् अस्वार्थो शुक्तिरजतादिवत् परार्था स्वार्थ सर्वविकल्पास्पदत्वात् शुक्त्यादिस्थानीय स्वतन्त्रसत्तारूप इत्यर्थ । 'स्वार्थदेश परार्थोऽर्थ ' (बृ वा १–४–३०१) इत्यादिवार्तिकप्रयोगदर्शनात् त्रिकालस्था त्रैकाल्यविषयवृत्तिमत्त्वेन तिष्ठतीति तथोक्ताम् निस्त्रिकाल कालादीनामपि साक्षित्वात्, अत एव कूटस्थ । कूटवदेव एकरूपेणैव स्थित । परमार्थनित्य इति यावत् । क्षणभङ्गुरां विविध वृत्तिरूपेण प्रतिक्षण दृष्टनष्टस्वरूपाम् । सापेक्षां ग्राह्यविषयापेक्षयैव लब्ध स्थितिकाम् । अथवा आत्मसांनिध्यापेक्षयैव लब्धसत्ताकाम्–इत्यर्थ । प्रतीत रूपेण तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वात् । निरपेक्ष स्वयसिद्ध सच्चिदानन्दघन स्वभाव । पराचीना परागेव बहिर्विषयेष्वञ्चन्तीं प्रत्यक् सर्वान्तरस्वभाव । अत एव धीवनानात्वादित्याद्द्वय । सावधि देशकालवस्तुपरिच्छिन्ना

निर्गतेयत्तोऽपरिच्छिन्नस्वभावः । अत एव च सर्वदेहेषु स्थितः पश्यति । 'समं सर्वेषु भूतेषु' (गी. १३-२७) इति स्मृतेः । देहेष्वेव सर्वसाक्षितया समुपलभ्यमानत्वात् देहेषु पश्यन्तमित्युच्यते न तु तदधिकरणकत्वेन स्थिततया । न हि निर्गतेयत्तस्य क्वचिदाधेयत्वं संभवतीति ध्येयम् । स्वरूपभूतचित्प्रकाशेन सर्वशरीरस्थितां बुद्धिमवभासयन् पश्यतीव – इत्यर्थः ॥ ७५ ॥

(मूलम्)

एतस्माच्च कारणादयमर्थो व्यवसीयताम् –

दुःखी यदि भवेदात्मा कः साक्षी दुःखिनो भवेत् ।
दुःखिनः साक्षिताऽयुक्ता साक्षिणो दुःखिता तथा ॥ ७६ ॥

पूर्वस्यैव व्याख्यानार्थमाह –

नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः ।
धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥ ७७ ॥

(क्लेशापहारिणी)

आत्मनो दुःखित्वाभावे युक्तिः –

बुद्धिरेवोक्तविधया विविधपरिणामभागिनी न त्वात्मेत्यत्र हेत्वन्तरं वक्ष्यामीत्याह – एतस्माच्चेति ॥

दुःखीति ॥ यद्यात्मा दुःखी भवेत्, तर्हि दुःखित्वसिद्धिरेव कथमिति प्रष्टव्यो भवान् । न हि निःसाक्षिकस्य कस्यचिदपि सिद्धिरिष्यते । न चात्मानं विहाय साक्षी नामान्योऽस्तीत्याशयेनाह – कः साक्षीति । ननु स्वयमेव स्वदुःखित्वसाक्षीति किं न भवेत् ? अत आह दुःखिन इति । दुःखित्वसाक्षित्वयोस्तमःप्रकाशवद्विरुद्धस्वभावयोः कथमपि न युगपदेकत्र सद्भावसंभव इत्यभिप्रायः ॥ ७६ ॥

कथं न युक्ता दुःखिनः साक्षिता, साक्षिणो वा दुःखिता ?–इत्याशङ्क्य तद्व्याख्यानायैव परश्लोकप्रवृत्तिरित्याह – पूर्वस्यैवेति ॥

नर्ते स्यादिति । दुःखित्वं हि नाम दुःखरूपविकाराश्रयत्वम् । साक्षित्वं तु सर्वविकारद्रष्टृत्वम् । अतः परस्परव्यावृत्तस्वभावे दुःखित्वसाक्षित्वे इत्यर्थः । यथोपदिष्टं भगवत्पादैः –'दुःखी स्यां न्यहमनाद्दुःखिनो दर्शनात्र वा । संहतेऽङ्गुलिभिर्दृष्टा दुःखी दुःखस्य नैव सः ॥' (उप १६–९) इति ॥ ७७ ॥

( मूलम् )

एवं सर्वस्मिन् व्यभिचारिणि, आत्मवस्त्वेवाव्यभिचारि – इत्यनुभवतो व्यवस्थापनायाह –

प्रमाणतन्निभेष्वस्या नोच्छित्तिर्मम संविदः ।
मत्तोऽन्यद्रूपमाभाति यत्तत्स्यात्क्षणभङ्गि हि ॥ ७८ ॥

उत्पत्तिस्थितिभङ्गेषु कुम्भस्य वियतो यथा ।
नोत्पत्तिस्थितिनाशाः स्युर्बुद्धेरेव ममापि च ॥ ७९ ॥

( क्लेशापहारिणी )

आत्मनः संविद्रूपत्वादेवाव्यभिचरद्रूपत्वम् –

एवं चात्मबुद्ध्योः कूटस्थत्वपरिणामित्वदर्शनादेवात्मनोऽव्यभिचरद्रूपस्य परमार्थता, बुद्धेश्च व्यभिचरद्रूपाया अपरमार्थता चानुभवसिद्धेत्याहोत्तरश्लोकद्वयमिति संबन्धमाह – एवं सर्वस्मिन्निति ॥

प्रमाणेति । प्रमाणतन्निभेष्वित्युपलक्षणं प्रमाणाभावस्यापि । उक्तं हि बृहद्वार्तिके 'प्रमाणमप्रमाणं च प्रमाभासं च यद्भवेत् । चैतन्याकारमेवैतत् प्रथते सर्वमेव तत् ॥' (वा २–४–१२४) इति । बुद्धेः परिणामा हि प्रमाणादीनि । तेषूच्छिन्नेष्वपि मम संविदः चैतन्यरूपस्य नोच्छित्तिः । सर्वबुद्धिपरिणामतदभावसाक्षित्वात् । संविदभावस्य कल्पयितुमप्यशक्यत्वाच्चेति भावः । यत्तु मत्तोऽन्यदचेतनं बुद्धिपरिणामरूपम् आभाति तत् क्षणभङ्गि हि । सर्वस्या अपि वृत्तेर्वृत्त्यन्तरमभिभूयैव स्वात्मलाभदर्शनादिति भावः ॥ ७८ ॥

न च बुद्धिगतैः परिणामैरात्मा किञ्चिदपि संस्पृश्यते, असङ्गत्वादाकाश इवेत्याह – उत्पत्तीति । कुम्भस्येव बुद्धेरुत्पत्तिस्थितिनाशेषु मम प्याकाशस्थानीयस्योत्पत्तिस्थितिनाशादि स्युरिति दृष्टान्तदार्ष्टान्तिकयोस्तौल्यमित्यर्थः ॥ ७९ ॥

( मूलम् )

सुखदुःखतत्संबन्धानां च प्रत्यक्षत्वात्, न श्रद्धामात्रग्राह्यमेतत् –

सुखदुःखादिसंबद्धां यथा दण्डेन दण्डिनम् ।
गाधको वीक्षते बुद्धिं साक्षी तद्वदसंहतः ॥ ८० ॥

( क्लेशापहारिणी )

ननु 'सुख्यहम्', 'दुःख्यहम्' इत्यादिप्रतिपत्तेः प्रत्यक्षत्वात् कथमिदं श्रद्ध्याम यदनात्मधर्मत्वमेव सुखादीनामिति ? न ह्यनुभवमपि युक्तिरपबाधितु प्रभवेदित्याशङ्क्य सुखित्वदुःखित्वाद्यभिमानस्य मिथ्याभिमानत्वमवसेयम्, तेषामप्यनात्मधर्मत्वस्य सार्वत्रिकानुभवसिद्धत्वादित्यभिप्रायकम् उत्तरश्लोकमवतारयति – सुखदुःखेति ॥

यथा कश्चिद्दारापत्रो दण्डविशिष्टस्य यतेर्द्रष्टृत्वादेव तेन दण्डेन स्वयमसंहत, एवं सुखदुःखादिविशिष्टबुद्धिद्रष्टृत्वादेवायमात्मा तेन सुखदुःखादिना स्वयमसंहत इत्यवगम्यत इत्यभिप्रायः ॥ ८० ॥

( मूलम् )

एतस्माच्च हेतोर्धियः परिणामित्वं युक्तम् –

येनैवात्मा भवेद्योगः सुखकुम्भादिना धियः ।
तं विदन्ती तदैवान्यं वेत्ति नातो विकारिणी ॥ ८१ ॥

अस्याश्च क्षणभङ्गुरत्वे स्वयमेवात्मा साक्षी । न हि कूटस्थावबोधमन्तरेण बुद्धेराविर्भावतिरोभावादिसिद्धिरस्ति –

परिणामिधियां धृत्तं नित्याक्रमदृगात्मना ।
षड्भावविक्रियामेति व्याप्तं स्वेनाङ्कुरो यथा ॥ ८२ ॥

( क्लेशापहारिणी )

**बुद्धेः परिणामित्वे युक्त्यनुभवौ —**

एवं तावदात्मनः सुखदुःखादिमत्त्वाभावेऽनुभवानुसारिणी युक्तिः प्रदर्शिता । बुद्धेश्च तत्सवद्धत्वमनुभवसिद्धमिति युक्तम् । अथेदानीं बुद्धेः परिणामित्वे युक्त्यन्तरमुपन्यस्यते । तदाह — एतस्माच्चेति ॥

येनैवास्येति । सुखसम्बन्धकाले सुखमेव वेत्ति न दुःखादिकम्, घटसम्बन्धकाले च न पटादिकम् — इत्येवं येनैव विषयेण, आध्यात्मिकेन बाह्येन वा योगस्तमेव वेत्ति न तद्वेदनकाले एवान्यं विषयं वेदितुं प्रभवति । अतस्तत्तद्विषयाकारेण परिणममानैव वेत्तीति सा विकारिणीत्यवगम्यत इत्यर्थः । विदन्तीत्यपाणिनीयं रूपं कथञ्चित् समाधेयम् ॥ ८१ ॥

न केवलं युक्तिः, अपि त्वात्मानुभवोऽपि बुद्धेः परिणामित्वे जागर्तीत्याह अस्याश्चेति । प्रतिक्षणं भज्यते विपरिणमते ताच्छील्येनेति क्षणभङ्गुरा परिणामिनी । अस्या बुद्धेरेतत्स्वभावत्वे स्वयमेव प्रमाणान्तरनिरपेक्ष आत्मा साक्षी साक्षाद्द्रष्टेति स एव प्रमाणम् इत्यर्थः । कथमेतत् ? तत्राह—न हीति । न तावद्बुद्धिः स्वयमेव स्वस्याः साधयित्री । एकस्या एव कर्मकर्तृभावस्य विरोधात्, न चात्मानं विहायान्यदस्ति तस्याः ग्राहकम् । अत आह — न हीति । आविर्भावतिरोभावौ आद्यन्तविकारौ । आदिशब्देन मध्यभाविनोऽपि विकारा गृह्यन्ते । न हि कूटस्थावबोधमन्तरेण बुद्धेरेवाविर्भावादीनां सिद्धिरस्ति। यदि तावद्बुद्धिरपि परिणाम्यन्तरादेव सेत्स्यति, किं कूटस्थापेक्षया इति मन्येत, तदापि तस्याः परिणामवस्त्वं स्वसिद्धये परिणाम्यन्तरमपेक्ष्येत, तथा तस्यापीत्येवमनवस्था स्यात् । तस्मात् कूटस्थावबोधरूप एवात्मा स्वयं तत्साक्षीति सिद्धमित्यभिप्रायः । एवं स्वस्य तिरोभावम् आविर्भावं वा न स्वयमेव साधयेद्धी, तदानीं स्वस्या अभावादेव । न चात्मनोऽन्योऽस्ति तदवबोधने इति द्रष्टव्यम् ॥

परिणामिधियामिति ॥ यथा येन आकाशेन व्याप्त एवाङ्कुरो जायते, आकाशाव्याप्तप्रदेशस्य चिन्तयितुमप्यशक्यत्वात्, अङ्कुरस्यापि परम्परया आकाशकार्यत्वेन तदनन्यत्वाच्च । विविधविक्रियाश्चानुभवति । एवं नित्यात्मदृगात्मना नित्यश्चासौ आत्मदृक्चेति नित्यात्मदृक् युगपदेव कूटस्थचैतन्यप्रकाशेन कात्स्न्यादिसर्वविकारावभासकत्वात् । तादृशेनात्मना व्याप्तमेव परिणामिधिया स्वभावेनैव विकारिणीनां बुद्धीनां वृत्त स्वरूपं षड्भावविक्रिया जायते, अस्तीत्यादिलक्षणामेति प्राप्नोतीत्यर्थः । परिणामिन्या हि बुद्धेः शब्दाद्याकाराव भासा आत्मचैतन्यस्य विषयभूता उत्पद्यमाना एव नित्याविलुप्तदृगात्म चैतन्येन व्याप्ता एव जायन्ते इत्यत एव ते सर्वास्वप्यवस्थासु ज्ञानशब्दवाच्या भवन्ति । न ह्यन्यथा तेषां सिद्धिरवकल्पते ॥ ८२ ॥

( मूलम् )

सत आत्मनश्चाविकारित्वे युक्तिः –

> स्मृतिस्पर्शबोधेषु न कश्चित्प्रत्ययो धियः ।
> दृशाऽव्याप्तोऽस्त्यतो नित्यमविकारी स्वयंदृशिः ॥ ८३ ॥

एवं बुद्धेः परिणामवत्त्वं साक्षिप्रत्यक्षेण प्रसाध्य, सर्वप्रत्ययसाक्षित्वादेव द्रष्टुरात्मनोऽपरिणामित्वं सेत्स्यतीति वस्तुमुत्तरश्लोकप्रवृत्तिरित्याह–सत इति ॥ बुद्धिवृत्तीनां व्यभिचारस्वरूपत्वात्, साक्षित्वतदन्यत्वाभ्यामनिर्वचनीयत्वाच्चा सत्त्वमभिप्रेत्य तद्विपर्ययेणात्मनः स्वयंसिद्धस्य कूटस्थस्वरूपस्य चेत्याशयेन 'सत' इति विशेषणम् ॥

स्मृतीति ॥ धियः स्पर्शनप्रत्ययनिश्चयप्रत्ययस्मृतिरूपेषु प्रत्ययेषु व्यभिचारिषु मध्ये न कश्चिदपि प्रत्ययो दृशा चैतन्येन अव्याप्तोऽस्ति । अव्यभिचारी हि सर्वेषां भा चैतन्यरूपेणेत्यर्थः । अतो दृशिरात्मा स्वयं नित्यमविकार्येवेति सिद्धमित्यभिप्रायः स्वयंदृशिः स्वयंप्रकाशः विकारभूत प्रत्ययनिरपेक्ष एवेत्यभिप्रायः ॥ ८३ ॥

(मूलम्)

एवं तावत् पराभ्युपगतप्रक्रियाप्रस्थानेन निरस्ताशेषविकारैकात्म्यं प्रतिपादितमुपपत्तिभिः । अथाधुना श्रौतीं प्रक्रियामवलम्ब्योच्यते –

अस्तु वा परिणामोऽस्य दृशेः कूटस्थरूपतः ।
कल्पितोऽपि मृषैवासौ दण्डस्येवाप्सु वक्रता ॥ ८४ ॥
षट्सु भावविकारेषु निषिद्धेष्वेवमात्मनि ।
दोषः कश्चिदिहासक्तुं न शक्यस्तार्किकश्वभिः ॥ ८५ ॥

(क्लेशापहारिणी)

श्रौतप्रक्रिययाप्यात्मनो निर्विकारत्वम् –

यत्तत् सूत्रित कूटस्थनित्यत्वमात्मन परिणामशीलाया बुद्धेर्वैलक्षण्य च '*एष सर्वधियां नृत्तम्*' (२–५८) इति, तदेतत् प्रपञ्चितम् एतावता ग्रन्थेन । बुद्धिस्तावत् तत्तद्विषयाकारपरिणामेनैव विषयान् क्रमेण पश्यति, सा च शुक्तिरजतादिवत् परार्था, व्यभिचरत्स्वरूपविविधवृत्तिमती । आत्मचैतन्य निर्भासमन्तरेण तु स्थितिसिद्धिकस्वरूपस्थितिका, सदा चिद्व्याप्तैव परिणममाना चेति प्रतिपादितम् । आत्मा पुनरेक एव युगपत् सर्वबुद्धिवृत्ती प्रकाशयति । स च शुक्त्यादिवत् स्वार्थ एवाव्यभिचरच्चिन्मात्रस्वरूप, स्वत सिद्ध, सर्व विकाररहितश्चेति प्रसाधितम् । एतच्च सर्वं प्रकृतिरेव कर्त्री पुरुषस्तु पुष्कर पलाशवन्निर्लेप – इति साङ्ख्यप्रक्रियामवलम्ब्य तदीयेनापि प्रस्थानेनास्मन्मतमेव सेत्स्यतीत्यभिप्रायेणोक्तम् । तदाह – एव तावदिति ॥ निरस्ताशेषविकारैकात्म्यम् इति । सर्वशरीरेष्वपि सर्वबुद्धिवृत्तीनां साक्षी एक एव । तद्भेदे मानाभावात् । शरीरभेदबुद्धिभेदतद्वृत्तिभेदाना साक्षिचैतन्यबलादेव प्रसिद्धे, तेषा तद्व्यतिरिक्तत्वे मानाभावाच्चेति भाव । आत्मा च सर्वथा निर्विकार इत्येषा साङ्ख्यप्रक्रियेत्यभाणि । इदानीं त्वात्मापि कल्पितपरिणामभागिति श्रौतप्रक्रिया मवलम्ब्योक्तमेव पुनरवधार्यत इत्याह – अथाधुनेति ॥

सांख्यवेदान्तप्रक्रिययोर्वैलक्षण्यम् —

अयमत्र सांख्यवेदान्तप्रस्थानयोर्विशेष । सांख्यास्तावदाहु — त्रिगुणात्मिका प्रकृति प्रधानापराभिधाना स्वतन्त्रा, आध्यात्मिकबुद्ध्यादिरूपेण आधिभौतिकशब्दादिरूपेण च स्वय परिणमते । पुरुषाणा च भोगापवर्गौ सपादयति च स्वव्यापारेण । प्रधानपुरुषसयोगा नित्यानुमेया इति । वेदान्तिनस्तु ब्रुवते सेयमनुपपन्ना कल्पना । स्वतन्त्रस्य प्रधानस्याचेतनत्वात् स्वय प्रवृत्त्यनुपपत्ते परिणामासभवात्, अनाधेयातिशयेऽसङ्गे च पुरुषे तत्कृतभोगापवर्गससर्गानुपपत्तेश्च । अत एव च पुरुषबहुत्वे प्रमाणाभाव । 'एको देव सर्वभूतेषु गूढ '(श्वे ६–११) इत्यादिश्रुतिविरोधाच्च । तस्मात्, एकस्मिन्नेव पुरुषेऽविद्याकल्पितनामरूपमायाद्युपाधिवशेन नानात्वम्, जगद्रूपेण परिणाम, जीवभावो, भोगापवर्गव्यवहारश्चेत्यभ्युपगन्तव्यम् । 'अजायमानो बहुधा विजायते' (तै आ. ३–१३–२९) इति श्रुतिप्रामाण्यादिति ॥

तदेतत्सर्वमभिसंधायाह — अस्तु वेति । अस्तु वा दृशो कल्पित परिणामोऽपि । तथाप्यस्य कूटस्थरूपत स्वतोऽव्यभिचरितस्वभावत्वात् असौ परिणाम, अप्सु दण्डस्य वक्रतेव मृषैव मिथ्यैवेत्यर्थ ॥ ८४ ॥

किमतो यद्येवम् ? तत्राह — षड्स्विति । आत्मनि षट्स्वपि भावविकारेषु जायते अस्तीत्यादिषु एवम् उक्तरीत्या मायिकस्य स्वासदसंस्पर्शितमानेन निषिद्धेषु सत्सु इह नित्यशुद्धबुद्धमुक्ते आत्मनि तार्किकैरभि दूरतो मपद्भिरिव श्वभि शुष्कतर्कप्रयोक्तृभि, कश्चिदपि दोष कर्तृत्वभोक्तृत्वानित्यत्वादि आसञ्जयितुमासञ्जयितु न शक्यते । अथवा इह श्रौतप्रक्रियायां न कश्चन दोष प्रसञ्जयितु शक्यते इत्यर्थ । न ह्यध्यस्तगतेन दोषेण तदास्पद वस्तु मनागपि संबध्यते, न ह्यध्यस्तेन जलेनोषरभूमि पङ्कीक्रियते इत्यभिप्राय । श्रूयते हि 'न जायते म्रियते वा विपश्चित्' (का १–२–१८) इति, 'अजायमानो बहुधा विजायते' (तै आ ३–१३–३०) इति च ॥ ८५ ॥

( मूलम् )

प्रकृतमेवोपादाय बुद्धेः परिणामित्वम् आत्मनश्च कूटस्थत्वं युक्तिभिरुच्यते —

प्रत्यर्थं तु विभिद्यन्ते बुद्धयो विषयोन्मुखाः ।
न भिदावगतेस्तद्वत्सर्गास्ताश्चिन्निभा यतः ॥ ८६ ॥

स्वसंग्रहार्थ एव —

साक्षशेषपरिच्छेदिन्यत एव न कृत्स्नवित् ।
नो चेत् परिणमेद्बुद्धिः सर्वज्ञा स्वात्मवद्भवेत् ॥ ८७ ॥

अतोऽवगतेरेकत्वात् —

चण्डालबुद्धेर्यद्द्रष्टृ तदेव ब्रह्मबुद्धिदृक् ।
एवं तदुभयोर्ज्योतिर्भास्यभेदादनेकवत् ॥ ८८ ॥

कस्मात् ?

अवस्थादेशकालादिभेदो नास्त्यनयोर्यतः ।
तस्माज्जगद्धिया वृत्तं ज्योतिरेकं सदेक्षते ॥ ८९ ॥

( क्लेशापहारिणी )

आत्मनः कूटस्थतायां बुद्धेश्च परिणामित्वे युक्तिः —

इदं च प्रसङ्गादुक्तं वेदान्तप्रक्रियामवलम्ब्यात्मनो मिथ्यापरिणामवत्त्वम् । प्रकृतं तु साक्ष्यन्वयसाक्ष्यव्यतिरेकार्थमात्मनः कूटस्थताप्रदर्शनम्, बुद्धेश्च परिणामित्वव्यवस्थापनम् । अतस्तदेवानुवर्त्यत इत्याह — प्रकृतमेवोपादायेति ॥

बुद्धयः प्रत्यर्थं तु विभिद्यन्ते । तुशब्दोऽवधारणार्थको भिन्नक्रमः । अर्थमर्थं प्रति भिद्यन्त एवेत्यर्थः । तत्र हेतुसमर्पकं विशेषणं विषयोन्मुखा इति । यस्मात् तत्तद्विषयाकारा इत्यर्थः । न हि घटाकारपरिणतिमन्तरेण घटबुद्धिः समस्तीति भावः । तद्वत् यथा बुद्धीनां भिदा, तथा तदवगतेर्न भिदास्ति ।

यतः सर्वास्ताश्चिन्निभा एव, चिदाभासा एव । अयं भावः । यो यो बुद्धेः प्रत्ययो घटादिविषयमवभासयतीति व्यवह्रियते, स स सर्वोऽप्यात्मचैतन्याभासफलावसान एव तत्तद्बुद्धित्वेन व्यपदिश्यते इत्यतो विषयानुवर्तिन्यो बुद्धयः सर्वा आत्मचैतन्यानुविद्धा एव स्वविषयावभासनक्षमाः । न त्वेवमात्मचैतन्यं कदापि बुद्धिमपेक्षते स्वप्रकाशनायेत्यतो यदाभासाव्यभिचारित्वं सर्वासा बुद्धीनाम्, तदेकं भेदरहितमिति ॥ ८६ ॥

बुद्धिस्तु नैवमव्यभिचरितस्वरूपेत्याह – स्वसंबद्धार्थ एवेति ॥ श्लोकस्य 'परिच्छेदिनी'त्यनेनास्य सम्बन्धः ॥

सावशेषपरिच्छेदिनीति ॥ बुद्धिः स्वसम्बद्धार्थ एव सावशेषपरिच्छेदिनी, संबद्धार्थमेव परिच्छिनत्ति, तत्रापि सावशेषमेव परिच्छिनत्ति न त्वन्यमप्यर्थं तदेव वेत्ति । नापि कृत्स्नं वेत्तीत्यभिप्रायः । अत एवेयं न कृत्स्नवित् । नो चेत् तत्परिच्छेदार्थं तत्तदर्थाकारेण परिणमेत् तदा अशेषस्वप्रचारसाक्षित्वात्मवत् स्वयमपि सर्वज्ञा भवेत् । युगपदेव सर्वविषयप्रकाशिनी भवेदित्यभिप्रायः । न चैतदस्तीत्यतः परिणामिनीत्यवगम्यत इति भावः । यद्यप्यात्मनोऽव्यभिचरत्स्वरूपत्वेन सर्वावभासकत्वं बुद्धेः परिच्छिन्नार्थप्रकाशकत्वं च पूर्वमप्युक्तम् । तथापि तदेवानूद्यैतेनात्मन एकत्वं स्फुटीक्रियत इत्यदोषः ॥ ८७ ॥

सर्वदेहेष्वात्मैकत्वम् –

न भिदावगतेरस्तीत्युक्तम् । ततः किं सिध्यतीत्याशङ्क्याह – यतोऽवगतेरिति ॥ एकवान्, एकरूपत्वादित्यर्थः ॥

चण्डालबुद्धेरिति ॥ चाण्डालोऽहम् इति अत्यन्ताशुद्धवस्तुगोचरबुद्धेर्यच्चैतन्यं द्रष्टृ साक्षिभूतं तदेव ब्रह्मबुद्धिदृक् हिरण्यगर्भबुद्धिसाक्षिभूतमपि ब्राह्मणबुद्धिसाक्षिभूतं वा । उभयोरपि ज्योतिः प्रकाशकं चैतन्यम् एकमेव सत् उपाधिभूतभास्यवस्तुवशादनेकवद् विभाव्यते । अतः सर्वदेहेष्वपि साक्षी एक एवेति सिद्ध इत्यभिप्रायः ॥ ८८ ॥

कथमेकमेव भासकज्योति सर्वत्रेति शक्य संभावयितुं तत्तदवस्था-देशकालादिभेदकेषु सत्सु ? — इति शङ्कामुत्थापयति — कस्मादिति ॥

समाधत्ते—अवस्थेति ॥ अनयो चण्डालबुद्धिब्रह्मबुद्धिद्रष्टो , अवस्थादि भेदो नास्ति । यद्यद्धि भेदकत्वेनोच्यते, तत् तत् सर्व प्रति साक्षित्वादेव , साक्षिणश्च साक्ष्यधर्मसंस्पर्शानुपपत्तेरिति भाव । यस्मादेव तस्मात् जगद्धिया जगति विद्यमानाना सर्वासामपि धिया वृत्त चारित्रम् चैतन्य ज्योतिरेकमेव सदा कालानवच्छेदेन ईक्षते स्वयमविक्रियमेव सदवभासय-तीत्यर्थ ॥ ८९ ॥

( मूलम् )

सर्वदेहेष्वात्मैकत्वे प्रतिबुद्धपरमार्थतत्त्वस्याप्यप्रतिबुद्धदेह-संबन्धात् , अशेषदुःखसंबन्ध इति चेत् , तन्न —

बोधात्प्रागपि दुःखित्वं नान्यदेहोत्थमस्ति नः ।
बोधादूर्ध्वं कुतस्तत्स्याद्यत्र स्वगतमप्यसत् ॥ ९० ॥

( क्लेशापहारिणी )

एकात्मतावादे ज्ञानिनो न सर्वजीवदुःखानुभवप्रसङ्गः —

तदेव साङ्ख्यप्रक्रियाभ्युपगमेनाप्यात्मैकत्व प्रसाधितममृष्यमाण पर शङ्कते — सर्वदेहेष्विति ॥

परिहरति — बोधादिति ॥ अन्यदेहोत्थ परदेहगत दु ख बोधात् प्रागपि आत्मैकत्वज्ञानात् पूर्वमपि न अस्माक पक्षे नास्ति । साङ्ख्यप्रक्रिया मवलम्ब्य पुरुषबहुत्वाभ्युपगमेऽपि हि साक्ष्यधर्माणा साक्षिणि सक्रमानुपपत्ते र्नास्त्यन्यदेहोत्थदु खस्यैतद्देहावच्छिन्नात्मनि संभव । न च साङ्ख्योऽपि पुरुषस्य वस्तुत सुखदु खादिमत्त्वमिच्छति । बुद्धिसम्बन्धाभ्युपगमात्सुखदु खादीनाम् । अस्माक तु पुरुषबहुत्व घटाकाशन्यायेन कल्पितम् । न च कल्पितदु खस्या प्येकजीवगतस्य सर्वजीवेषु संभव । घटाकाशन्यायेनैव । यथाहुरभियुक्ताः— ' यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते । न सर्वे सम्प्रयुज्यन्ते तद्वज्जीवा

सुखादिभि' ' (गौ. का. ३-५) इति । साक्षिणस्तु परमार्थात्मन. सर्वदेह-गतत्वेऽपि न दु.खसंबन्धः । ' अनश्नन्नन्योऽभिचाकशीति ' (मुं. ३-१-१) इति श्रुते' इत्यभिप्रेत्योक्तं 'न.' इति । तदेतद्बोधात्पूर्वमविद्याकल्पितजीव-बहुत्वाभ्युपगमदशायामुक्तम् । बोधादूर्ध्वं तु कुत एव हेतोस्तत् परदेहगतं दु खमात्मनि प्रसञ्जनीय स्यात् ? साङ्ख्यानामपि तावदविवेकेनैव बुद्धिगतं दु ख पुरुषेऽध्यारोप्यत इति पुरुषसतत्त्वबोधादूर्ध्वं निर्विशेषाः सर्वे चेतनमात्रा आत्मान इत्यवबोधात् परस्परात् न स्वदेहगतदु खसंबन्धोऽस्ति । दु खस्य बुद्धिधर्मत्वाभ्युपगमादेव । अस्माकं पुनर्यत्र जीवे स्वगतमप्यसत् । जीवस्य ब्रह्मणोऽनन्यत्वेन जीवत्वस्यैव मिथ्यात्वावगमात् 'तत्त्वमसि' (छा. ६-८-७), ' नान्योऽतोऽस्ति विज्ञाता ' (बृ. ३-७-२३) इत्यादिश्रुतिभ्य· । तत्र कैव कथा परगतदु.खस्य – इत्येवमाशयेन 'न:' इत्युभयतोऽप्यन्वयिपदं प्रयुक्तमिति ध्येयम् ॥

व्याख्यानान्तरदूषणम् –

बोधादूर्ध्वमिति ब्रह्मात्मैक्यापरोक्ष्येण मूलाज्ञाने बाधिते इति केचिच्छाङ्कुर्वते । तदनादेयं व्याख्यानम् । ब्रह्मात्मैक्यापरोक्ष्यस्यात्राप्रकृतत्वात्, मूलाज्ञानस्य ग्रन्थकृदनभिमतत्वाच्च । अत्र ह्यविद्यापरिकल्पित साक्षित्वमाश्रित्य कर्तृत्वाद्यशेषपरिणामप्रतिषेधः प्रतिज्ञातो (५८) ग्रन्थकृता । मूलाज्ञान च तदभिमतप्रक्रियान्तर्गतमिति दर्शितं प्रागेवेति ॥ ९० ॥

( मूलम् )

न चेयं स्वमनीषिकेति ग्राह्यम् । कुत ? श्रुत्यवष्टम्भात् –

शब्दाद्याकारनिर्भासा हानोपादानधर्मिणी ।
भास्येत्याह श्रुतिर्दृष्टेरात्मनोऽपरिणामिनः　　॥ ९१ ॥

का त्वसौ श्रुतिः ?

दृष्टेर्द्रष्टारमात्मानं न पश्येद्दृश्यमानया ।
विज्ञातारमरे केन विजानीयाद्धियां पतिम्　　॥ ९२ ॥

( क्लेशापहारिणी )

उक्तार्थे श्रुतिप्रमाणोदाहरणम् –

बुद्धि परिणामिनी कूटस्थस्त्वात्मा इत्येतच्छ्रुतिबलादेवोच्यतेऽस्माभि । युक्तयस्तु श्रुत्यनुगृहीता एवानुभवाङ्गत्वेनाश्रीयन्त इत्याह – न चेति ॥

आत्मचैतन्याभासानुगृहीतत्वात् शब्दाद्याकारनिर्भासा हेयोपादेयविषयत्वाद् हानोपादानधर्मिणी च दृष्टि , अपरिणामिन स्वभास्यानुगुणपरिणामशून्यस्याहेयानुपादेयस्वभावस्यात्मनश्चैतन्यभासा भास्या – इत्याह श्रुति । तामेवावलम्ब्येदमुक्तमस्माभिरपीत्यर्थ ॥ ९१ ॥

तादृशी श्रुतिमेव नोपलभामहे इत्याशयेन पृच्छति पूर्वपक्षी–का न्वसौ श्रुतिरिति ॥

तदुत्तरत्वेन श्रुतिमुदाहरति – दृष्टेर्द्रष्टारमिति ॥ 'न दृष्टेर्द्रष्टारं पश्येर्न श्रुते श्रोतार शृणुया ' (बृ ३–४–२) इत्याद्या श्रुती रूपाकारेण परिणामिन्या दृष्टे द्रष्टार कूटस्थचैतन्येनावभासक दृष्टेरप्यात्मान सन्त न पश्ये , दृश्यमानया चैतन्यविषयभूतया दृष्ट्या विषयीकर्तु शक्नुया । एव शब्दाकारेण परिणामिन्या श्रुते श्रोतारमवभासक श्रुतेरप्यात्मान न शृणुया , विषयभूतया श्रुत्या विषयीकर्तु शक्नुया इत्याह । अत्र हि दृष्टिश्रुत्यादिशब्दव्यपदेश्या बुद्धि रूपशब्दाद्याकारेण परिणामिनी द्रष्टृश्रोत्रादिशब्दगम्येनात्मना भास्येत्युच्यते । 'येनेद सर्वं विजानाति त केन विजानीयाद्विज्ञातारमरे केन विजानीयात्' (बृ २–४–१४) इतीय श्रुतिस्तु सर्वमिद बुद्ध्यन्त येन चैतन्येन विज्ञात्रा विषयीकरोति त केन करणेन विजानीयात् ? न हि करणेन कर्ता विषयीक्रियेत, सर्वस्यापि करणस्य विज्ञेये विनियुक्तत्वात्, नाप्यात्मा स्वात्मनैव विज्ञायेतेति । बोधादूर्ध्वमपि विज्ञातार केवलमद्वय सन्त केन विजानीयात्, विज्ञातृव्यतिरिक्तस्यैवाभावादिति कूटस्थात्मचैतन्यस्य सर्वथाप्यविषयत्वमाहेत्यभिप्राय । 'धियां पतिम्' इति विशेषण तु सर्वा धीवृत्तय आत्मानमाश्रित्यैव जायन्ते स्वविषयनिर्भासनक्षमाश्च भवन्ति, स तु ता अनपेक्ष्यैव स्वेनैव ज्योतिषा भाति । सुषुप्त्यादिषु तासा प्रत्यस्तमयेऽपि तद्भानात्रिपरिशेषादित्यभिप्रायकमिति मन्तव्यम् ॥ ९२ ॥

(मूलम्)

यस्मात् सर्वप्रमाणोपपन्नोऽयमर्थस्तस्मात् अतोऽन्यथावादिनो जात्यन्धा इवानुकम्पनीया इत्याह –

तदेतदद्वयं ब्रह्म निर्विकारं कुबुद्धिभिः ।
जात्यन्धगजदृष्ट्येव कोटिशः परिकल्प्यते ॥ ९३ ॥

प्रमाणोपपन्नस्यार्थस्याऽसंभावनात् तदनुकम्पनीयत्वसिद्धिः । तदेतदाह –

यद्यद्विशेषणं दृष्टं नात्मनस्तदनन्वयात् ।
खस्य कुम्भादिवत्तस्मादात्मा स्यान्निर्विशेषणः ॥ ९४ ॥

अतश्चात्मनो भेदासंस्पर्शः । भेदस्य मिथ्यात्वस्वाभाव्यात् । अत आह –

अवगत्यात्मनो यस्मादागमापायि कुम्भवत् ।
साहङ्कारमिदं विश्वं तस्मात्तत्स्यात् कचादिवत् ॥ ९५ ॥

(क्लेशापहारिणी)

आत्मनः कूटस्थत्वमनतिशङ्कनीयम् –

एवं श्रुत्युपपत्तिविद्वदनुभवेभ्य. साधितत्वादेवात्मनः कूटस्थत्वमनतिशङ्कनीयमित्याह–यस्मादिति ॥ यद्यपि प्रमाणसङ्कलवादो नाङ्गीक्रियते सिद्धान्ते, तथापि कूटस्थसाक्षी तावत् स्वयंसिद्ध एवानुभवमात्रात्मा । तद्गताज्ञाननिवर्तनमुखेन श्रुत्युपपत्ती तत्रोपकुरुत इति सर्वप्रमाणोपपन्नत्ववाचोयुक्तिर्न विरुध्यत इति ध्येयम् । तस्मात्, अतोऽन्यथावादिन. कूटस्थस्वरूपतोऽन्यथा आत्मानमूरीकृत्य अहंप्रत्ययगम्यम्, ज्ञानसुखदुःखादिगुणकम्, क्षणिकविज्ञानरूपम्, शून्यरूपं वा–इत्येवं विविधं कल्पयन्त., 'एवमात्मा', 'नैवमात्मा'– इति च विवदन्तः परिच्छिन्नात्मबुद्धयो जात्यन्धा इव अनुकम्पनीया अनाद्यविद्याविमूढत्वादित्याहेत्यर्थः ॥

**तदेतदद्वयमिति** ॥ कुबुद्धिभि कुत्सितबुद्धिभि । अप्रतिष्ठिततर्कमात्रशरणै आगमवदाचार्यानाहितमस्कारबुद्धिभिरित्यर्थ । अद्वयम्, सजातीय विजातीयस्वगतभेदरहितम् अत एव स्वतो वा परतो वा विकारासहमपि सत् तदेतद् यथोपवर्णित ब्रह्म, जात्यन्धगजदृष्ट्येव यथैव जात्यन्धा मूढा स्पर्शमात्रगृहीतगजावयवा एव अवयवमात्रधर्मिणि गजे अतिदिश्य कृत्स्नगज बुद्धिं अवयवमात्रे परिकल्पयेयु, तथैवाद्वयब्रह्मदृष्ट्या 'अस्ति' 'नास्ति', 'सगुणम्' 'निर्गुणम्', 'सक्रियम्' 'निष्क्रियम्' – इत्यादिप्रकारै कोटिश परिकल्प्यते इत्यर्थ ॥ ९३ ॥

अद्वैत ब्रह्मेत्यपि तव विकल्पमात्र किं न स्यात् ? इत्यत आह – **प्रमाणोपपन्नस्येति** । 'असंभावनात्' इत्युपलक्षणम् । विपरीतभावनया विकल्पाच्चेति द्रष्टव्यम् । एव कुबुद्धिजात्यन्धदृष्टान्त उपपद्यते । **तदेतदाहेति** – उपपन्नत्वमेवाहेत्यर्थ ॥

**यद्यदिति** ॥ यथा कुम्भादय – 'कुम्भाकाश', 'करकाकाश' – इत्यादिव्यवहारे खस्य आकाशस्य विशेषणीभूतान्यपि – न तद्धर्मा आकाशान्वयेऽपि तद्व्यतिरेकात्, एव सशरीरत्वसप्राणत्वसमनस्त्वसुखित्वदु खित्वादिक यद्यदात्मविशेषणत्वेनाविवेकिभि दृष्टम्, न तत् तस्यात्मन । आत्मान्वयेऽपि तद्व्यतिरेकात्, तस्मादात्मा निर्विशेषण स्यात् इति प्रमाणोपपन्नम् इत्यर्थ ॥ ९४ ॥

न केवलमात्मानन्वयित्वात्, किं त्वागमापायित्वरूपत्वादितरेतर व्यभिचारादप्यनात्मधर्मत्व सुखदु खादीनामित्याह – **अतश्चेति** ॥ भेदासंस्पर्शो, भेदस्य मिथ्यात्वाभाव्यात् सर्पधारादिलक्षणविकल्पितभेदस्य मिथ्यात्वादेव यथा रज्ज्वादेस्तदसंस्पर्श, तद्वदित्यर्थ । 'अत आह' इत्युक्तहेतोरेव हृदि स्थितमाशय स्पष्टमाहोत्तरश्लोकेनेत्यर्थ ॥

**अगमत्यात्मन इति** ॥ साहङ्कारमिद विश्व अवगत्यात्मन यस्मात् आकाशापेक्षया कुम्भवदागमापायि – आगच्छति कुम्भ आकाशधर्मत्वेन प्रतीतो भवति 'कुम्भाकाश' इति प्रतीतिकाले, अपैति च विनष्टो भवति, 'आकाशमेवेदम्' इत्यवधारणकाले यथा, तथा अहमादिविश्वमप्यवगत्यात्मनि

आगच्छति तस्मादपैति च इति आगमापायीति दृष्टनष्टस्वरूपत्वमेवात्र विवक्षितम् । 'मिथ्यात्वाभाव्योपपादकत्वेन दृष्टान्तप्रणयनादिति बोध्यम् । विवेकिदृष्ट्या आकाशविकारा हि कुम्भादयस्तद्व्यतिरेकेण वस्तुतो न सन्त्येव ; एवमहङ्कारादेरपि आत्मविकारत्वात् तदव्यतिरिक्तत्वमेवेति भावः । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छां. ६-१-४) इत्यादिश्रुतिभ्य इत्यर्थः । अत एवाह 'तस्मात्सत्स्यात्कचादिवत्' इति । यथा तैमिरिकदृष्टकेशमशक-मक्षिकादेर्न वस्तुसत्त्वम्, एवमहङ्कारादिविश्वस्यापीत्यर्थः ॥ ९५ ॥

## १०. अन्वयव्यतिरेकन्यायोपसंहारः

( मूलम् )

सर्वस्यैवानुमानव्यापारस्य फलमियदेव यद्विवेकग्रहणम् । तदुच्यते—

बुद्धेरनात्मधर्मत्वमनुमानात् प्रसिध्यति ।

आत्मनोऽप्यद्वितीयत्वमात्मत्वादेव सिध्यति ॥ ९६ ॥

( क्लेशापहारिणी )

अन्वयव्यतिरेकलब्धोऽर्थः —

तदेवं द्रष्ट्रन्वयदृश्यव्यतिरेकाभ्यां साक्ष्यन्वयसाक्ष्यव्यतिरेकाभ्यां च सिद्धमर्थमुपसंहरति—सर्वस्यैवेति ॥ अनुमानव्यापारस्येति, यथोपदर्शितान्वय-व्यतिरेकदर्शनलक्षणमानसव्यापारस्येत्यर्थः । न तु तार्किकाभिमतानुमानप्रमाण-मिहाभिप्रेतम् इति स्पष्टमेव । अनुमातुः परमार्थस्वरूपस्यैवात्मत्वेन, एकस्यैव युगपन्मातृमेयत्वासंभवात् । यथोक्तान्वयव्यतिरेकदर्शनस्यानुमानत्वव्यपदेशस्तु, अनुभवरूपप्रत्यक्षमनुसारिव्यापारत्वात्, अनात्मन आत्माभासत्वसिद्धौ मानत्वाच्चेति सतोऽन्यम् ॥

बुद्धेरिति ॥ बुद्ध्यादेरित्यर्थः । आत्मविलक्षणस्य सर्वस्याप्यनात्म-त्वात् । तस्यात्मधर्मत्वाभावः, अन्वयव्यतिरेकरूपानुमानात् प्रसिध्यति । आत्मनोऽपीति । आत्मनस्तु इत्यर्थः । आत्मत्वादेव, सर्वमाप्नोतीत्यात्मा । सर्वस्यापि तदीयचैतन्येन व्याप्तेस्तदन्यथासिद्धेः, आत्मनोऽद्वितीयत्वं सिध्यति । अद्वितीयत्वमात्मनः स्वभाव एवेति नात्र प्रमाणकृत्यमस्तीत्यर्थः ॥ ९६ ॥

# ११. आत्मनः स्वतःसिद्धाद्वितीयत्वम्

( मूलम् )

यद्यप्ययं गृहीतृग्रहणग्राह्यगृहीतिफलात्मक आब्रह्मस्तम्बपर्यन्तः संसारोऽन्वयव्यतिरेकाभ्याम् अनात्मतया निर्माल्यवदपविद्धः ; तथापि तु नैवासौ स्वतःसिद्धात्मव्यतिरिक्तानात्मप्रकृतिपदार्थव्यपाश्रयः साङ्ख्यानामिव, किं तर्हि स्वतःसिद्धानुदितानस्तमितकूटस्थात्मप्रज्ञानमात्रशरीरप्रतिबिम्बिताविचारितसिद्धात्माऽनवबोधाश्रय एव, तदुपादानत्वात् तस्य – इतीममर्थं निर्वक्तुकाम आह –

ऋते ज्ञानं न सन्त्यर्था अस्ति ज्ञानमृतेऽपि तान् ।<br>
एवं धियो हिरुग् ज्योतिर्विविञ्च्यादनुमानतः ॥ ९७ ॥

यस्मात् प्रमाणप्रमेयव्यवहार आत्माऽनवबोधाश्रय एव, तस्मात् सिद्धमात्मनोऽप्रमेयत्वम् । नैव हि कार्यं स्वकारणमतिलङ्घ्य अन्यत्राकारके आस्पदमुपनिबध्नाति । अत आह –

व्यवधीयन्त एवामी बुद्धिदेहघटादयः ।<br>
आत्मत्वादात्मनः केन व्यवधानं मनागपि ॥ ९८ ॥

स्वयमनवगतात्मकत्वात्, अनवगमात्मकत्वं च मोहमात्रोपादानत्वात् –

प्रमाणमन्तरेणैषां बुद्ध्यादीनामसिद्धता ।<br>
अनुभूतिफलार्थित्वादात्मा ज्ञः किमपेक्षते ॥ ९९ ॥

( क्लेशापहारिणी )

उत्तरग्रन्थसंबन्धः –

एतावता ग्रन्थेन सिद्धमर्थम् अनूद्य वर्तिष्यमाणग्रन्थस्योत्थानमाह – यद्यपीति ॥ गृहीता प्रमाता, ग्रहणं प्रमाणम्, ग्राह्यं प्रमेयं गृहीतिफलं तु

प्रमेयपरिच्छित्ति । अत्र गृहीतितत्फलम् इति पठित्वा 'गृहीतिरर्थज्ञानम्, तत्फलमर्थावच्छिन्न स्फुरणम्' इति व्याचक्र केचित् । तन्न युक्तम् । प्रमिति व्यतिरिक्तफलस्य कुत्रापि वार्तिके अपरामृष्टत्वात् । प्रमितेरेव गृहीतिशब्दे नागामिन्यध्याये परामर्श्यमाणत्वाच्च । अत 'गृहीतिफलम्' इत्येव मूले लिखित लेखकप्रमादेन 'तत्फलम्' इति क्वचित् परावर्तित स्यादित्यनुमीयते । 'अनुभूतिफलार्थित्वात्' (९९) इत्यस्मिन्नेवाध्याये उत्तरत्र प्रयोगादप्येवमवसीयते इत्यलमनपेक्षितपाठकल्पनेन । यद्यपि प्रमितिर्नामात्मचैतन्यतो न भिन्ना, तथापि प्रत्यक्षादिवृत्तिवृत्त्युदयान्ते साऽभिव्यक्ता तत्तत्प्रमाणफलत्वेनोपचर्यते । वृत्त्युदयेन च प्रमितिरभ्युदितेवाविवेकिभिर्विभाव्यत इत्यतो वृत्त्युपहितत्वेन रूपेण तस्या अप्यनात्मत्वमिह परिगणितमित्यदोष । फलस्य संविदमेदस्तु संबन्धवार्तिके स्फुटमुद्घोषित 'पराग्यर्थप्रमेयेषु या फलत्वेन संमता । संवित् सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणत ॥'(सं वा १५९) इति सर्वमनाकुलम् ॥

प्रकृतमनुसराम । आनक्षत्रम्बपर्यन्तो व्याकृतप्रपञ्चो यथोपप्रदर्शित गृहीत्रादिरूप ससार सर्वोऽप्यनात्मैव, साक्षिचैतन्यावभास्यत्वात्, तदन्वयेऽपि तद्व्यतिरेकाच्च इत्यन्वयव्यतिरेकाभ्या निर्माल्यवदपविद्ध, यथा तत्दिने पूजात प्राक् पूर्वपूर्वदिनार्पितपुष्पपत्रादिक निसृज्यते, तथा परमात्मज्ञानेऽनुपयोगित्वात् परित्यक्त । योऽसौ तथा परित्यक्त, नैवासौ साख्यानामिव प्रकृतिपदार्थाश्रय — स्वतन्त्रमूलप्रकृतित्वेनाभिमतप्रधानमाश्रयतेऽसौ तद्विकारत्वादनात्मजातस्येति साख्या यथाहु, तथा नास्माभिरभ्युपगम्यते, किं तर्हि, स्वत सिद्धानुदितानस्तमितकूटस्थात्मप्रज्ञानमात्रशरीरप्रतिबिम्बिनाविचारितसिद्धात्मानवबोधाश्रय एव । अनुदित च तत् अनस्तमित चानुदितानस्तमितम् । जन्मविनाशरहित मित्येतत् । तादृश यत् कूटस्थात्मन निर्विकारपरमात्मन प्रज्ञानमात्र शरीर चैतन्यघनस्वरूपम्, तस्मिन् प्रतिबिम्बिन प्रतिभासमान, अविचारितसिद्ध — न जानामीति स्वाभाविकानुभवबलादेव सिद्धो न तु वास्तविक योऽयमात्मनोऽनवबोध, तदाश्रय एवेत्यर्थ । एतदुक्त भवति । यद्यपि नित्यशुद्धबुद्धमुक्ताद्वितीयस्वभाव एव सर्वस्यात्मा, तथापि प्राकृतजनस्याविचारदशाया यत्

स्वभावतो वर्तते ऽज्ञानम् । 'ममात्मस्वरूपं न जानामी'ति, तदाश्रयस्तत्कार्यभूत एवायं प्रमातृप्रमाणाद्यात्मप्रपञ्चः । अज्ञानभावे भावात्, तदभावेऽभावाच्चेति । तदाह – तदुपादानत्वात्तस्य । तादृशानवबोधनिमित्तत्वात् तस्य गृहीत्रादिससारस्येत्यर्थः । वास्तविकोऽनवबोधस्तु न कथ्यनात्मनि सिध्यतीत्यभिप्रायेण विशेषणद्वयम् 'प्रतिबिम्बित', 'अविचारितसिद्ध' इति च । न ह्यरूपस्याचिदात्मनः प्रतिबिम्बोद्ग्राहित्वम्, अभावलक्षणस्याज्ञानस्य प्रतिबिम्बत्वं वा कथंचिदपि सभवेत् । ये त्वज्ञानस्यानिर्वचनीयभावरूपतां स्वीचक्रुः, 'तदुपादानत्वात् तस्य' इति यथाश्रुतग्रन्थमाश्रित्य, ते प्रकरणसन्दर्भग्रन्थव्याख्यानेनैव वारिताः, 'स्वतःसिद्धाद्वितीयात्माऽनवबोधमात्रोपादानत्वाच्चास्य' इत्यस्य विवरणप्रस्तावे इति न तेषामिह पुनरवकाशः । प्रज्ञानघनेऽप्यात्मनि प्रागैकात्म्यप्रबोधात् स्वानुभवसिद्धमज्ञानम् इति बृहद्वार्तिकेऽप्युक्तम् 'तस्मिन्नपहतध्वान्तेऽप्यविद्या स्वानुभूतितः । स्वानुभूतिर्न वेद्मीति ज्ञानैकात्म्यप्रबोधतः ॥' (बृ वा १–४–२१६) इति । अनात्मनोऽविद्याविजृम्भितमात्रत्वात्, तस्याप्यविद्यात्वम्, अविद्यातिरिक्तशरीराभावश्च – इति स्पष्टमुक्तम् तैत्तिरीयवार्तिके 'न जानामीत्यविद्यैका नित्या तत्कारणं मता । स्वप्रसिद्ध्यैव सा सिध्येन्निशोलूकीव वासरे ॥ अनात्मेतीह यद्भाति तदविद्याविजृम्भितम् । तस्मादविद्या साप्युक्ता विद्या त्वात्मैकरूपिणी ॥ आत्माग्रहातिरेकेण तस्या रूपं न विद्यते । अमित्रवदविद्येति सत्येन घटते सदा ॥' (तै वा १–१७६, १७८, १७०) इति ॥

तदेवमनात्मनो ग्रहीतृग्रहणादिप्रपञ्चस्यात्मानवबोधमात्राश्रयत्वमनूद्य, आत्मनः स्वतः सिद्धता समनन्तरग्रन्थभागेनोच्यत इत्याह – इतीममर्थम् इति । ससारस्यानवबोधमात्रनिमित्तत्वम्, आत्मनश्च स्वतः सिद्धत्वम् इत्यर्थः । निर्गमयितुकामः, निष्कृष्य वक्तुमिच्छन् । आहोत्तरश्लोकेनेत्यर्थः ॥

ऋते ज्ञानमिति ॥ चैतन्यं विना अर्था अहङ्कारादयो न सन्ति, ज्ञानं तु तान् ऋतेऽप्यस्ति । सुषुप्तादौ तथा अनुभवात् इति भावः । एवं धियः सकाशात् हिरुक् – बुद्धितद्वृत्तिभ्यो विलक्षणम् इत्यभिप्रायः – ज्योतिः,

आत्मचैतन्यम् अनुमानतः, अन्वयव्यतिरेकलक्षणेन तर्केण विविञ्च्यात् । विवेकेन निर्धारयेदित्यर्थः । अर्थेभ्यो विविञ्च्यादिति वक्तव्ये, धियो विविञ्च्यादिति विशेषग्रहणम् धीप्रयुक्तत्वादात्मनः प्रमातृत्वस्य धीविवेकेन प्रमातृत्वस्याप्यनात्मपक्षपातित्वं यथा ज्ञापितं भवेदिति । तथा च 'सर्वोऽपि प्रमाणप्रमेयव्यवहारो निर्माल्यवदपविद्ध' इत्युक्तं सम्यक्तया दृढीकृतं भवति । धियोऽपि ह्यविशिष्टम् आत्मज्योतिरायत्तसत्तास्फुरणत्वम्, आत्मनश्च सुषुप्तादौ ऋतेऽपि धियं स्वतःसत्तास्फुरणं चेति ॥ ९७ ॥

आत्मनोऽप्रमेयत्वे युक्त्यवतरणम् –

एवमात्मनः स्वतःसिद्धत्वं बुद्ध्यादीनां च तदधीनसिद्धिकत्वं प्रदर्श्य, अथेदानीं तत एवात्मनोऽप्रमेयत्वं सिध्यतीत्याह – यस्मादिति ॥ यस्मादुक्तविधया प्रमाणप्रमेयव्यवहारः सर्वोऽप्यात्मानवबोधाश्रयः । आत्मानवबोधं विना बुद्ध्यादीनामसिद्धेः, बुद्धिसंबन्धं विना चात्मनः प्रमातृत्वासिद्धौ प्रमाणप्रमेयव्यवहारस्य सुतरामसिद्धेः, तस्मात् सिद्धमात्मनोऽप्रमेयत्वम् । प्रमेयत्वं ह्यनवबोधकार्यम् । तस्माच्चैवादोऽनवबोधं जातुचिदप्येतुं पारयति, तदसंस्पृष्टमात्मानं वा समाश्रयितुम् । तत्र न्यायमाह – नैव हीति । न हि कार्यं घटादि स्वकारणं मृदादिमतिलङ्घ्य अन्यत्राकारणे तून्त्वादौ आसक्तमुपनिबध्नाति । कार्यस्य कालत्रयेऽपि स्वकारणायत्तत्वनियमात् । अत्र प्रमातृत्वस्याविद्याकार्यत्वेऽपि तत्रैव प्रमेयत्वं न संभवति – प्रमातुर्हि प्रागेव सिद्धस्य प्रमेयसिद्ध्ये प्रमाणान्युपादीयन्ते – इति स्थिते, तत्राहंप्रत्ययग्राह्यताऽस्तीति विवदमानान् सुखेनैव दूरीकर्तुम्, यत्र प्रमाणप्रमेयव्यवहार एव सुतरां न संभवति तत्र किमु वक्तव्यं प्रमेयत्वं नास्तीत्याशयेनैवमुच्यत इति बोध्यम् । अत आहेति । अतः प्रमेयत्वस्यानवबोधकार्यत्वात्, आत्मनि सुतरामसंभवत्वात्, अप्रमेयत्वे युक्तिं प्रदर्शयितुमाहेत्यर्थः ॥

आत्मा न प्रमेयः, अव्यवहितस्वरूपत्वात् –

व्यवधीयन्त इति ॥ बुद्धेरज्ञानापेक्षत्वात् व्यवहितत्वम् । तदपेक्षयैव तदुत्थानात् । देहस्य तु बुद्धीन्द्रियव्यवहितत्वम् । तदपेक्षयैव देहसिद्धेः ।

घटादीना तु तनोऽपि व्यवहिततरत्वम् । बुद्धीन्द्रियदेहसापेक्षत्वात् तत्सिद्धे – इत्येव बुद्धिदेहघटादीना अज्ञानादिभिर्व्यवहिततरात्, न व्यवधानपरिहार-मन्तरेण तेषा संसिद्धि स्यादिति युक्त तत्परिहारार्थं प्रमाणापेक्षा । प्रमाणापेक्ष त्वाच्च तेषा प्रमेयत्वमिति युज्यत इति भाव । 'आत्मनस्तु' इति तुशब्दस्ततो वैलक्षण्यद्योतनार्थोऽत्र द्रष्टव्य । आत्मन केन व्यवधानम् ? न केनापि मनागपि ईषदपि व्यवहितत्वमुपपद्यते । कुत ? आत्मत्वादेव । आत्मा नाम स्वरूपम् । न च स्वस्यैव स्वेन व्यवहितत्व शक्यकल्पनम्, अन्येन वा । सत्येव हि प्रमाणप्रमेयव्यवहारे प्रमातु प्रमेयाणा व्यवहितत्व नाम, केनचिदपि देशेन, कालेन, वस्तुना वा । स तु व्यवहारो नात्मानं संस्पृशतीत्युक्तम् । अतो नैवात्मा आत्मन केनचिद् व्यवधीयते, अत एव न व्यवधानापसारणा पक्षा तत्रेत्यभिप्राय ॥ ९८ ॥

बुद्धयादीना व्यवहितत्वात्, व्यवधानापनयनाय तत्र प्रमाणमपेक्षितम् इत्युक्तम् । अथ तेषा प्रमाणव्यापारापेक्षत्वे हेत्वन्तरमपि विद्यत इत्याह – **स्वयमिति** ॥ न हि बुद्धिदेहघटादयश्चैतन्यप्रकाशयुक्ता, येन स्वयमेवान्य निरपेक्ष प्रकाशेरन् । अनवगमात्मानस्तु ते, अचेतनस्वभावा । अनवगमात्म कत्वमेव कथमिति ? तदुपपादयति – '**मोहमात्रोपादानत्वात्**' इति । अज्ञानमात्रमेव हि तेषा स्वरूपम् । अज्ञान चाचेतनमिति न स्वय स्फुरण तस्येत्यर्थ ॥

**प्रमाणमन्तरेणेति** ॥ एषा बुद्धयादीनाम् प्रमाणमन्तरेण प्रमाण व्यापार विना, असिद्धत्वा अज्ञातत्वम् । स्वावभासकप्रमाणेन विषयीक्रियमाणा एवैते ज्ञाता भवन्ति नान्यथेत्यर्थ । तदेतत्कुत ? **अनुभूतिफलार्थित्वात्** । यदा यदा हि प्रमाणम् एतान् व्याप्नोति, तदा अनुभवरूपेण वा चिद्यास चिदाभासं च सदेव वा व्याप्नोति । प्रमाणान्ते तत्तदनुभूतिरूपेण आत्म चैतन्यमेव तत्त्वमित्यज्यते इति फलमेव भवतीति फलमित्युपचर्यत इत्यवोचाम (श्लो ९७) । अतस्तेषा स्वसिद्धयर्थं प्रमाणापेक्षास्ति । आत्मा पुन स्वय ज्ञ, नित्यचैतन्यस्वरूप एवेति किमपेक्षते ? न हि लोके घटादय स्वप्रकाशनाय

सूर्यादालोकमपेक्षन्त इति सूर्यादेरपि तदपेक्षा भवेदिति भावः । अत एवमपि सिद्धमात्मनोऽप्रमेयत्वमित्यभिप्रायः । यथा प्रमेयभूतघटादीनामनुभूतिफलार्थित्वम्, एवं नात्मन इत्येतद् बृहद्वार्तिकेऽप्युक्तम् 'आत्मनैवात्मविज्ञानं ज्ञेयं रागादिवर्जितम् । स्वयमेव फलात्मत्वात् फलं चास्मान्न भिद्यते ॥' (बृ वा १-४-१४०१) इति । यत्तु केचित् कल्पयन्ति – घटादीन् प्रमेयान् धीवृत्तिस्तत्स्थचिदाभासश्चेति द्वावपि व्याप्नुतः, तत्र धिया अज्ञानं नश्यति, आभासेन तु विषयः स्फुरतीति । तत् कल्पनामात्रम् । धीवृत्तिर्हि जायमानैव चिद्व्याप्ता चिदाभासा च जायते, तत्र वृत्तिमात्रेणाज्ञाननाश इति कथङ्कारं शक्यं विविच्य कल्पयितुम् ? यदि चिदाभासयुक्तवृत्तिरूपसाधनेन घटादेरज्ञाननाशेन स्फुरणं नाम सैव प्रमितिरवगतिशब्दवाच्या सा चात्मनोऽव्यतिरिक्तेति भाष्यवार्तिककारयोरुभयोरपि सम्मतमेव सम्मतमिति यथाव्याख्यात एव श्लोकार्थ इति शिवम् ॥ ९९ ॥

## १२. आत्मानात्मनोरितरेतराध्यासोऽविद्यानिमित्तः

(मूलम्)

वक्ष्यमाणेतरेतराध्यासमिद्ध्यर्थम् उक्तव्यतिरेकानुवादः –

घटबुद्धेर्घटाद्यार्थाद्बुद्धेरहङ्ग्मिन्नता ।
अहंबुद्धेरहंगम्याद्दुःखिनश्च तथा दृशेः ॥ १०० ॥

एवमेतयोरात्मानात्मनोः स्वतः परतः सिद्धयोः, लौकिकरज्जुसर्पाध्यारोपवदविवेकाश्रय एवेतरेतराध्यारोप इत्याह –

*अप्रयत्नं यथा मोहाज्ज्ञायमृत्स्नमस्पृशि ।*
सुखित्वादीन् धियो धर्मान्मूढात्मनि मन्यते ॥ १०१ ॥

दग्धृत्वं च यथा वह्नेरयसो मन्यते कुधीः ।
चैतन्यं तद्वदात्मीयं मोहात् कर्तरि मन्यते ॥ १०२ ॥

( क्लेशापहारिणी )

आत्मनः सर्वमेयवैलक्षण्यम् —

उक्तन्यायेनात्यन्तविविक्तयोरप्यात्मानात्मनोरविवेकनिमित्त परस्पराध्यास इति वक्तुकाम पुनरपि तयोर्वैलक्षण्यमन्वारम्भेणानुवदतीत्याह—वक्ष्यमाणेति ॥

घटबुद्धेरिति ॥ अर्थात् घटात् तद्विषयिण्या घटबुद्धेरपि द्रष्टु प्रमातुर्यद्वद् विभिन्नता, तथा अहंगम्याद्दु खिन, तद्विषयकाहबुद्धेरपि दृशे तदवभासकसाक्षिचैतन्यस्य विभिन्नताव्यतिरिक्तत्वं वैलक्षण्यं पूर्वस्मिन् ग्रन्थे प्रसाधितम् इति शेष. ॥ १०० ॥

अध्यासस्याविद्यानिबन्धनत्वम् —

एवमिति ॥ यथा लौकिकरज्जुसर्पयोरत्यन्तविविक्तस्वभावयोरेव स्वार्थपरार्थयो — तद्विवेकाग्रहनिबन्धनो यथा परस्पराध्यारोपो भवति 'अय सर्प' इति व्यवहारे । एवमात्मानात्मनोरपि यथाप्रदर्शितन्यायेन स्वत परत सिद्धयोरेव — अविद्याश्रय, आत्माज्ञानाश्रय, स्वार्थपरार्थयोरविवेकनिमित्त एनेतरेतराध्यारोप इत्येतदाहेत्यर्थ । अविद्योपाश्रय इत्येतत् 'आत्मानव बोधाश्रय' इतिवदेव व्याख्येयमिति न प्रसर्तव्यम् ॥

अभ्रयानमिति ॥ यथा शशभृति चन्द्रे निश्चलेऽपि मोहात् अविवेकात्, अभ्राणा मेघाना यान गमनमध्यवस्यति मिथ्यैवाध्यारोपणेन चन्द्रो यातीति निश्चिनोति, तद्वदेवात्मनि सुखित्वादीन् धियो धर्मान् मन्यते अभिमन्यते । अमूताभिनिवेशमात्रमेतत् इत्यर्थ. ॥ १०१ ॥

अथैतद्विपर्ययेण, अनात्मन्यप्यहङ्कारे आत्मधर्मं चैतन्यमध्यारोपयतीति दर्शयति — दग्धृत्वमिति ॥ न ह्ययसि दग्धृत्वमस्ति मिथ्यामत्यारोपित-व्यतिरेकेण, एवं चैतन्यमप्यहङ्कारे इत्यभिप्राय ॥ १०२ ॥

## १३. आत्मज्ञानेनाविद्यानिवृत्तिः

(मूलम्)

सर्व एवायम् आत्मानात्मविभागः प्रत्यक्षादिप्रमाणवर्त्मन्यनुपतितोऽविद्योत्सङ्गवर्त्येव, न परमात्मव्यपाश्रयः । अस्याश्चाविद्यायाः सर्वानर्थहेतोः कुतो निवृत्तिरिति चेत् तदाह –

दुःखराशेर्विचित्रस्य सेयं भ्रान्तिश्चिरन्तनी ।
मूलं संसारवृक्षस्य तद्बाधस्तत्त्वदर्शनात् ॥ १०३ ॥

'तद्बाधस्तत्त्वदर्शनात्' इति कुतः संभाव्यत इति चेत्, अत आह – आगोपालाविपालपण्डितम् इयमेव प्रसिद्धिः –

अप्रमोत्थं प्रमोत्थेन ज्ञानं ज्ञानेन बाध्यते ।
अहिरज्ज्वादिवद् बाधो देहाद्यात्ममतेस्तथा ॥ १०४ ॥

लौकिकप्रमेयवैलक्षण्यादात्मनः, नेहानधिगताधिगमः प्रमाणफलम् –

अविद्यानाशमात्रं तु फलमित्युपचर्यते ।
नाज्ञातज्ञापनं न्याय्यमनन्यत्वैकरूपतः ॥ १०५ ॥

यस्मादनवबोधमात्रोपादानाः प्रमात्रादयः, तस्मात् –

न विदन्त्यात्मनः सत्तां द्रष्टृदर्शनगोचराः ।
न चान्योन्यमतोऽमीषां ज्ञेयत्वं नियमाधनम् ॥ १०६ ॥

(क्लेशापहारिणी)

उत्तरश्लोकसंबन्धः –

सर्व एवेति ॥ आत्मानात्मविभागो न सांख्यानामिव वास्तविकः । एष हि विभागः प्रत्यक्षादिप्रमाणवर्त्मन्यनुपतित एव, प्रमाणगोचर एवेत्यर्थः । अज्ञातात्मन एव हि विभागोऽयं भातीत्यविद्योत्सङ्गवर्त्येव । अविद्याश्रित

एवेति यावत् । प्रत्यक्षादीनि हि प्रमाणानि प्रमातृत्वं विना नात्मानं लभन्ते । प्रमातृत्वं चात्मानात्मनोरितरेतराध्यासनिबन्धनमित्युक्तम् । अतोऽविद्याश्रय एवायं विभागो न परमात्मन्यपाश्रयः । यथोक्तं बृहद्वार्तिके "आत्मानात्मविभागोऽपि नायमात्मस्पृगीक्ष्यते । अज्ञातात्मैकसाक्षित्वादज्ञानोत्थं न वस्तुगम् ॥" (बृ. वा. १-४-७२४) इति । अस्याश्चाविद्यायाः कुतो निवृत्तिरिति चेत् 'तदाह' । उत्तरश्लोके इति शेषः ॥

दुःखराशेरिति । स्पष्टार्थः श्लोकः ॥ १०३ ॥

अविद्योत्थस्य तत्त्वदर्शनेन बाध इति सुप्रसिद्धमेतदित्याह – **तद्बाध इति** ॥ प्रसिद्धिरेव तूत्तरश्लोकेन प्रदर्श्यत इत्याशयः ॥

अप्रमोत्थम् इति ॥ यथा अप्रमोत्थं ज्ञानम् मिथ्याज्ञानम्, प्रमोत्थेन ज्ञानेन सम्यग्ज्ञानेन – 'अहिरज्ज्वादिवत्' इति दृष्टान्तः । रज्ज्वज्ञानोत्थं अह्यादिज्ञानं रज्ज्वादिज्ञानेनेवेति बाध्यते । देहाद्यात्ममतेरपि तथा बाधः, आत्मन्यात्ममत्या शास्त्रजन्यया बाधः स्यादिति नासंभावनीयम् इत्यर्थः ॥ १०४ ॥

ननु अनधिगताधिगमयितृ प्रमाणमिति लोके प्रसिद्धम् । तद्वदिहापि किमात्मा प्रागनवगतः सन् ज्ञानेनावगतो भवति ? इत्याशङ्क्याह – **लौकिकेति** ॥ तदिदमुत्तरश्लोकेन विशदीक्रियते इति शेषः ॥

अविद्यानाशमात्रम् इति ॥ घटादेर्ह्यचेतनत्वात् तत्परिच्छिन्नचिद्रूपेण प्रत्ययावसाने जाता चैतन्याभिव्यक्तिः फलमित्युच्यते लोके । चिदाभासप्रत्ययेनैव विषयो ज्ञापित इति चाभिमन्यते लोकः । शास्त्रगम्ये आत्मनि पुनर्नित्यचैतन्यस्वरूपत्वान्न ज्ञापनमावश्यकम् । अविद्यानाशमात्रमेव त्वलमत्र । तावतैवात्मा ज्ञात इति व्यवहारो भविष्यतीत्यर्थः ॥

इदमप्यभ्युपगमवादेन । यतोऽनात्मविषयेऽप्यज्ञाननिवृत्तिरेवालं तदधिगमनाय । अत एव माण्डूक्यभाष्ये एवमुक्तम् – "येषां पुनस्तमोपनय-

व्यतिरेकेण घटाधिगमे प्रमाणं व्याप्रियते तेन छेद्यावयवसंबन्धवियोगव्यतिरेकेण अन्यतरावयवेऽपि छिदिर्व्याप्रियत इत्युक्तं स्यात्। यदा पुनर्घटतमसोर्विवेककरणे प्रवृत्तं प्रमाणमनुपादितज्ञानं तमोनिवृत्तिफलावसानं छिदिरिव छेद्यावयवसंबन्धविवेककरणे प्रवृत्ता तदवयवद्वैधीभावफलावसाना तदा नान्तरीयकं घटविज्ञानं न तत् प्रमाणफलम्" (मा भा ७) इति। तस्मादङ्गीकृत्यैव मीमांसकमतमत्रोक्तं लोके घटादीनामनधिगताधिगमः प्रमाणफलमिति – इति बोध्यम् ॥ १०५ ॥

न केवलमवगत्येकरूपत्वादात्मा प्रमाणानधिगम्यः, किं तु द्रष्ट्रादेरात्मनैव ज्ञेयत्वाच्चेत्याह – यस्मादिति ॥ अनवबोधमात्रोपादाना द्रष्ट्रादयः प्रमात्रादय, आत्माज्ञानमात्रस्वरूपा इत्युदाहृतमेव तैत्तिरीयकवार्तिकवाक्यम् 'आत्माग्रहातिरेकेण तस्या रूपं न विद्यते' (तै वा १७९) तदिहाप्यनुसर्तव्यम्। 'तस्मात्' इति 'न विदन्ति' इति श्लोकस्थेन संबध्यते। **न विदन्तीति ॥**

अत एव ते नात्मनः सत्तां स्वयमेव वेदितुं शक्नुवन्ति। अचेतनत्वात्। अत एव च नाप्यन्योन्यं वेदितुं शक्नुवन्ति। अतोऽमीषां द्रष्टृदर्शनगोचराणां ज्ञेयत्वं भिन्नसाधनम्। स्वव्यतिरिक्तेनैवात्मना ते ज्ञायन्ते। तत्र कुत एतत् स्यात्, आत्मा स्वज्ञेयं येन निष्पन्नस्वरूपेण प्रमाणेन सिध्येदितीदमभिप्रायः। यद्यपि माता मेयं मानेन करणेन वेत्तीति लोकप्रवादः, तथापि न माता नित्यविकारित्वात् स्वयमात्मानं वेदितुमलम्। नापि मानेन वेद्यः सः, मानस्य मेयविषयत्वात्। एवं च यदा द्रष्टुर्मातुरेवासिद्धिः, तत्सिद्ध्यपेक्षाणां दर्शनगोचराणां प्रमाणप्रमेयाणां सुतरामसिद्धिः। न च दर्शनगोचरौ स्वयमेव स्वात्मानं जानानौ। नाप्यन्योन्यम्। स्वप्रसिद्धदर्शनगोचरवत् – इति वस्तुवृत्तपरीक्षणेन सिद्धमिदं 'न विदन्त्यात्मनः सत्ताम्' इत्यादीनि मन्तव्यम्। एतेन 'द्रष्टा दर्शनेन दृश्यं वेत्ति' इति व्यवहारसिद्धयर्थमेव समारोपी समपेक्षितम् इति संभावितं भवति ॥ १०६ ॥

# १४. शोधितत्वंपदार्थस्याद्वैतता

(मूलम्)

द्रष्ट्रादेरसाधारणरूपज्ञापनायाह –

बाह्य आकारवान् ग्राह्यो ग्रहणं निश्चयादिमत् ।
अन्वय्यहमिति ज्ञेयः साक्षी त्वात्मा ध्रुवः सदा ॥ १०२ ॥

सर्वकारकक्रियाफलविभागात्मकसंसारशून्य आत्मा सर्वकारक-क्रियाफलविभागसाक्षित्वादात्मनः । तदाह –

ग्राहकग्रहणग्राह्यविभागे योऽविभागवान् ।
हानोपादानयोः साक्षी हानोपादानवर्जितः ॥ १०८ ॥

(क्लेशापहारिणी)

साक्षिणो ग्राहकादिविलक्षणत्वम् –

अथेदानीं साक्ष्यात्मन शोधितत्वपदार्थतां वक्तु तद्भास्यग्राह्यादि त्रयस्वरूप तावदनुवदति तदाह– द्रष्ट्रादेरिति ॥ द्रष्टृदर्शनदृश्यानामित्येतत् ॥

बाह्य इति ॥ बाह्य, आध्यात्मिकाभ्या ग्रहीतृग्रहणाभ्यां पराग्भूत आकारवान् सामान्यविशेषवान् ग्राह्यः गोचरो विषय इति ज्ञेय । ग्रहण दर्शन तु निश्चयादिमत् । निश्चयस्मरणसशयादिरूपेण विभक्त ज्ञानम् । अन्वयी तेषु निश्चयादिरूपेण जन्मविनाशवत्सु 'अह निश्चिनोमि', 'अह स्मरामि', 'अह सशये' इति योऽहरूपेणान्वेति स ग्रहीता द्रष्टा – इति ज्ञेय । यस्त्वात्मा तेष्वागमापायिषु स्वय ध्रुव, साक्षी ग्राह्यादित्रितय विलक्षण इत्यर्थ ॥ १०७ ॥

साक्षिणो हानोपादानलक्षणसंसारराहित्यम् –

मातृमानमेयविभागसाक्षित्वात् । यथा तद्विभागराहित्यमात्मन, एव कारकक्रियाफलविभागसाक्षित्वात् तद्विभागराहित्यमपीत्यधुना प्रदर्श्यत इत्याह

– सर्वेति ॥ 'आत्मेति' इतीनिशब्दस्तु मिथ्यतीनि शेषपूरणेन योजनीयः। लेखकप्रमादादागतो वा ॥

ग्राहकेति ॥ माहकग्रहणभावविभागो यत्र तत्रैव ग्राहकेण कस्यचिदर्थस्य हानमुपादानं वा, तत्फलभोक्तृत्वं वा, तत्रैव च ग्राहकस्य हानोपादानतत्फलभोक्तृत्वरूपः संसारो भवेत्। तादृशविभागे ये हानोपादाने भवतः, तयोः साक्षी, स्वयं ग्राहकग्रहणादिविभागरहितश्च सः, हानोपादानवर्जितः। सर्वक्रियाकारकफललक्षणसंसारशून्य इति सिद्धमित्यर्थः ॥

यद्वा – ग्राहकः केनचित्करणेन ग्राह्यं विषयं गृह्णाति, तत्र भोक्ता च भवतीति प्रसिद्धम्। अविभागवांस्त्वात्मा ग्राहकादित्रिभागरहित इति न ग्राहकाद्यवभासनमात्रेण तद्भोक्ता भवितुमर्हति। ननु तथापि ग्राहकादेर्हानमनावगमनं सुषुप्तादौ, पुनस्तदुपादानं च जागरितादौ – इति तद्धानोपादानयोः कर्ता किं न भवेत्? इत्याशङ्क्याह – **हानोपादानयोः साक्षीति**। *न ह्यात्मा हानोपादानयोः कर्ता भवति, यथा ग्राहको ग्रहणाग्रहणयोः। कुतः? तत्साक्षित्वात्। स हि केवलं साक्षाद्द्रष्टा हानोपादानयोः, न तत्र करणद्वारेण व्यापारवान्, यथा ग्राहकः। नापि स्वत, निर्व्यापारस्वभावत्वात्।* अत एव हानोपादानवर्जितः। अपि च यथा हानकर्मत्वमुपादानकर्मत्वं च ग्राहकादेरवस्थाभेदेन, यथावर्णितनीत्या न तथा आत्मन इत्यतोऽपि हानोपादानवर्जितः सः। तस्मात्, हानोपादानसाक्षित्वादेव साक्षिणि प्रसङ्गे न साक्ष्यहेयत्वादेः संसर्गसंभवोऽस्ति – इत्येवमपि व्याख्यायेन श्लोक इत्यनुसंधेयम् ॥ १०८ ॥

(मूलम्)

ग्राहकादिनिष्ठेन ग्राहकादिभावाभावविभागसिद्धिः कस्माद्वेति चेत्, तदाह –

स्वमाधनं स्वयं नष्टो न नाशं वेत्त्यभावतः।
अत एव न चान्येषामतोऽसौ भिन्नमासिद्धः ॥ १०९ ॥

ग्राहकादेरन्यसाक्षिपूर्वकत्वसिद्धेः स्वसाक्षिणोऽप्यन्यसाक्षिपूर्वकत्वात् अनवस्था इति चेत्, तन्न। साक्षिणो व्यतिरिक्तहेत्वनपेक्षत्वात्। अत आह –

धीवन्नापेक्षते सिद्धिमात्मान्यस्मादविक्रियः।
निरपेक्षमपेक्ष्यैव सिध्यन्त्यन्ये न तु स्वयम् ॥ ११० ॥

( क्लेशापहारिणी )

ग्राहकादीनां साक्ष्यपेक्षयैव सिद्धत्वम् –

ननु ग्राहकादिविभागसिद्धिः, तद्धानोपादानसिद्धिश्च स्वत एवेति किं न स्यात्, येन तत्साक्षी तद्व्यतिरिक्त एवं समानीयेतेत्याशङ्कावारणाय श्लोकान्तरोपादानम् इत्याह – ग्राहकादिनिष्ठैवेति ॥ तदाह तत्राहेत्यर्थः ॥

स्वसाधनमिति ॥ अत्र 'स्वयं न वेत्ति' इत्युभयान्वयीति गृहीत्वा एवं व्याख्येयम् – ग्राहकादि स्वसाधनं स्वयं न वेत्ति। कुतः ? अभावतः। स्वसिद्धेः पूर्वं स्वस्यैवाभावात्, इत्यर्थः। न हि कस्यचिदपि पूर्वं स्वस्यैव भावः शक्यसंभावनः। एवं स्वसिद्धिं स्वयमेव वेत्तीति चेत् कल्प्यते, सिद्धेः प्राक् स्वस्यैवाभावात्, न तद्वेदितृत्वं संभवतीत्यभिप्रायः। सिद्धं भूत्वा साधयिष्यतीति चेत्। न। तदा सिद्धत्वादेव साधनापेक्षाभावात्। तदेवं स्वसिद्धिं न स्वयं वेदितुमर्हतीति स्थितम्। एवं स्वयं नष्टो स्वनाशं न वेत्ति। अभावत एव। न ह्यभावः कस्यचित्साध्यस्य साधनं भवेदित्यर्थः। अत एव स्वसिद्धेः पूर्वं अन्येषां भावं न वेत्ति, स्वनाशात् परं तु नतरामिति स्पष्टम्। स्वस्य तदानीमभावादेव। तदेवं ग्राहकादिविभागसिद्धिः, तद्भावाभावसिद्धिर्वा, न ग्राहकादिनिष्ठम्, ग्राहकाद्यन्यत एव तत्सिद्धिरिति सिद्धस्तदतिरिक्तः साक्षीत्यर्थः ॥

यद्यपि साक्षिसिद्धिर्नानुमानादिप्रमाणान्तरायत्ता उपपत्त्यायत्ता वा। प्रमाणोपपत्तीनामपि साक्षिरूपाधारेणैव प्राणधारणात्, स्वयंसिद्धस्य सर्वथा तदनपेक्षणाच्च। तथापि ग्राहकग्रहणयोरेव स्वयंसिद्धत्वमास्थाय साक्षिण

प्रतिक्षेप्तुमीहमानानां मीमांसकसौगतादीनां दूरीकरणार्थमेव युक्तिरियं प्रतानिता। ग्राहकस्याहम्प्रत्ययगम्यत्वं स्वीकुर्वाणानां विज्ञानस्य स्वयंवेद्यत्वं स्वीकुर्वाणानां च पक्षे ग्राहकग्रहणयोरस्तित्वकाले स्वात्मनि क्रियानुपपत्तेः, स्वाभावकाले च सर्वथा ग्रहणासामर्थ्याच्चेति प्रबोधयितुमित्यनवद्यम् ॥ १०९ ॥

ग्राहकादीनां साक्षिसिद्धत्वाङ्गीकारे नानवस्था –

ननु युक्तिमात्रमिदं साक्षिण्यपि सञ्चारयितुं शक्यते। अतः परापशब्दनाय स्वनासिकाच्छेदोऽयम्। कथम्? यथा ग्राह्या विषयाः स्वव्यतिरिक्तेन ग्राहकेण वेद्यन्ते, तथा चेद् ग्राहकादित्रयमपि स्वव्यतिरिक्तसाक्षिवेद्यमित्यङ्गीक्रियते, तर्हि ग्राहकवदेव साक्षिणोऽपि करणान्तरापेक्षत्वप्रसङ्गः। न चैवमिष्टं भवन्। किञ्चान्यत्, यथैव ग्राहकादेर्व्यतिरिक्तसाक्षिपूर्विका सिद्धिरिष्यते, तथैव ग्राहकादिसाक्षिणोऽपि स्वव्यतिरिक्तसाक्षिपूर्विकैव सिद्धिरिति प्राप्नोति। एवं तस्य तस्याप्यन्यान्यसाक्षिवेद्यत्वम्, तस्य च साक्षिणः करणान्तरापेक्षत्वं चेत्यनवस्थेत्यतोऽप्यनिष्टापत्तिः – इत्याशङ्क्य स्वयंसिद्धत्वादेव साक्षिणोऽन्यानपेक्षत्वमित्येतदुपपादयितुमुत्तरं श्लोकं इत्याह – ग्राहकादेरित्यादिना ॥ अत आह – तस्मात् साक्षिणोऽन्यानपेक्षत्वसिद्धिकत्वमुपपादयितव्यमिनीत्यर्थः ॥

धीवदिति ॥ बुद्धिः परिणामिनी, तत्साक्षी त्वात्मा कूटस्थः – इति बह्वीभिरुपपत्तिभिः प्रदर्शितम्, श्रुत्युदाहरणेन च। तत्र परिणामिनी परिणामित्वादेव स्वभावाभावौ वेदितुं नात्मानमपेक्षते स्वान्यतः सिद्धिमिति युक्तम्। आत्मा तु धीवदन्यस्मात् सिद्धिं नापेक्षते, यस्मादविक्रियोऽपरिणामी, कूटस्थोऽसौ इति यावत्। यदुच्यते तस्यापि करणान्तरापेक्षा, स्वव्यतिरिक्तसाक्षिपूर्विकैव च सिद्धिः – इत्यनवस्था प्राप्नोतीति। तदसत्। न तावदस्ति नियमः, यत्र यत्रान्योऽन्येन गृह्यते, तत्र तत्र ग्राह्यग्राहकव्यतिरेकेण करणेनापि केनचिद् भाव्यमिति। अन्यथापि दर्शनात्। तद्यथा घटश्चक्षुषा दृश्यते आलोकेन करणेन। आलोकस्तु स्वव्यतिरिक्तचक्षुर्ग्राह्योऽपि न तथा करणान्तरमपेक्षते। तथा ग्राहकादेरपि साक्षिग्राह्यस्य करणान्तरानपेक्षत्वं भविष्यति। अतो न करणद्वारा अनवस्था। एवं साक्ष्यन्तरद्वारापि नास्त्यनवस्था। ग्राह्यत्वभावनादेव हि

ग्राहकादे साक्षिपूर्विका सिद्धिरङ्गीक्रियते, विकारित्वस्वाभाव्यात्। अनात्मत्वेन व्यवधीयमानत्वाच्च। साक्षी तु ग्राहक एव न जातुचिद् ग्राह्य, अविक्रिय, न केनचिद्व्यवहित। अतो नास्त्यस्यान्यापेक्षेति युक्तम्। नन्वेवं सर्वथास्य ग्राह्यत्वाभावे, कथं तस्य सिद्धि? आत्मत्वादेवेति वदाम। आत्मनो ह्यप्रत्याख्येयस्वभावस्य स्वयंसिद्धत्वादेव नान्यत्र सिद्ध्यपेक्षेति। तदेतत्सर्वमनुसंधायाह – निरपेक्षमपेक्ष्यैव सिद्ध्यन्त्यन्ये न तु स्वयमिति ॥ ॥ ११० ॥

( मूलम् )

यतो ग्राहकादिष्वात्मभावोऽविद्यानिबन्धन एव, तस्मादन्वयव्यतिरेकाभ्यां विभज्यानात्मनः, स्वयम् –

उत्पत्तिस्थितिनाशेषु योऽवगत्यैव वर्तते।
जगतोऽविकारयावेहि तमस्मीति न नश्वरम् ॥ १११ ॥

स्वतःसिद्धात्मचैतन्यप्रतिबिम्बिताविचारितसिद्धिकात्मानवबोधोत्थेतरेतरस्वभावापेक्षासिद्धत्वात्, स्वतश्चासिद्धेरनात्मनो द्वैतेन्द्रजालस्य –

न स्वयं स्वस्य नानात्वं नावगत्यात्मना यतः।
नोभाभ्यामप्यतः सिद्धमद्वैतं द्वैतबाधया ॥ ११२ ॥

( क्लेशापहारिणी )

आत्मनोऽवगत्येकस्वरूपत्वम् –

इदानीम् एतावता विचारेण सिद्धमर्थं निगमयितु त्वंपदार्थस्य निष्कृष्टस्वरूपमाहोत्तरश्लोक इति संबन्धमाह – यत इति ॥ 'अन्वयव्यतिरेकाभ्याम्' साक्ष्यन्वयसाक्ष्यव्यतिरेकाभ्यामित्यर्थ। अनात्मन अविद्यानिबन्धनात्मभावालम्बनस्य ग्राहकादे, विभज्य विविच्य। 'स्वयम्' इत्यस्य श्लोकस्थेन 'योऽवगत्यैव वर्तते' इत्यनेन संबन्ध.। अन्वयव्यतिरेकाभ्यामित्यादेः

पयगन्धितामालोक्य, अस्य सिद्धिग्रन्थशरीरे एवान्तर्भावः कर्तव्य इति केचित्, 'सार्धश्लोकं वाक्यम्। अस्य गाथासंज्ञाचरणषट्केनोपलक्षितत्वात्' इति च ॥

उत्पत्तीति ॥ जगतः अनात्मभूतस्य ग्राहकादेः, उत्पत्तिस्थितिनाशेषु योऽविकारया अवगत्यैव कूटस्थचैतन्यरूपेणैव वर्तते सदा अवतिष्ठते, तम् अयमहमस्मीत्येवेहि विद्धि, न तु नश्वरं विकारिणं प्रमात्रादिरूपमनात्मानम् इत्यर्थः। यद्यपि प्रमात्राद्यधप्रमाणव्यापारेण जायतेऽवगतिः – इति लोके संव्यवहारः, तथापि प्रत्यक्षादिप्रमाणव्यापारजन्यबुद्धिवृत्त्यवसानेऽभिव्यज्यमानत्वादेव तादृशसंव्यवहारयोग्यत्वं नित्याया एव सत्या अवगतेः, तदेव च प्रमातुः पारमार्थिकं स्वरूपमित्यवोचाम प्राक्, तत्र प्रसर्तव्यम्। उक्तं च सूत्रभाष्ये – 'अहमेवेदानीं जानामि वर्तमानं वस्तु, अहमेवातीतमतीततरं चाज्ञासिषम्, अहमेवानागतमनागततरं च ज्ञास्यामि–इत्यतीतानागतवर्तमानभावेनान्यथाभवत्यपि ज्ञातव्ये न ज्ञातुरन्यथाभावोऽस्ति। सर्वदा वर्तमानस्वभावत्वात्। तथा भस्मीभवत्यपि देहे नात्मन उच्छेदो वर्तमानस्वभावादन्यथास्वभावत्वं वा न संभावयितुं शक्यम्' (सू. भा. २–३–७) इति। तदिहानुसंधातव्यम्। भूरिगनुष्टुप्त्वात् तृतीयपादेऽक्षराधिक्यं न दोषायेति मन्तव्यम्। न्यूनाधिकेनैकेन निचृद्भुरिजौ' इति पिङ्गलाचार्योक्तेः। तद्वैतश्लोकचेदसाधारणमिति भरताचार्यवचनाच्चेति ॥ १११ ॥

अथैवं शोधितत्वंपदार्थस्याद्वैततत्त्वमयत्वेनैव रोत्स्यतीत्युत्तरश्लोकार्थः। तदाह – स्वतःसिद्धेति। 'आत्माऽनवबोधोत्थ' इत्येतत्पर्यन्तं 'द्वैतेन्द्रजालस्य' विशेषणं सप्तनवतितमश्लोकसंबन्धमन्यस्य 'स्वत सिद्धानुदितानस्तमितकूटस्थात्मप्रज्ञानमात्रशरीरप्रतिनिष्ठित'– इत्यादिवद् व्याख्येयम्। एवम् अनवबोधोत्थत्वात्, इतरेतरस्वभावापेक्षसिद्धत्वाच्चेति 'स्वत सिद्धेः' इत्यत्र हेतुद्वयमुपक्षिप्तम्। अनवबोधोत्थं रज्जुसर्पादिवत्, अतो न स्वतःसिद्धम्। इतरेतरापेक्षसिद्धं पितृत्वपुत्रत्वादिवत्। एवमुत्पत्तौ आत्माऽनवबोधापेक्षम्, स्थितौ इतरेतरस्वभावापेक्षम् द्वैतेन्द्रजालम्। ग्राहकापेक्षं ग्रहणं तदपेक्षश्च ग्राहकः। एवं

ग्राह्यापेक्षं ग्रहणं ग्रहणापेक्षं ग्राह्यम् । एवं ग्राह्यग्राहकयोरपीतरेतराश्रयसिद्धिकत्वं बोध्यम् । बृहद्वार्तिकेऽपीदमुक्तम् – 'प्रमात्रादीह यत्किञ्चित् प्रत्यगज्ञानहेतुकम् । अन्योन्यापेक्षसिद्धित्वान्मिथ्या तदपि पूर्ववत् ॥' (बृ वा १-४-४७७) इति । ननु तथापि ग्राहकादिशब्दप्रत्ययगोचरत्वात्, व्यवहारेऽर्थक्रियाकारित्वेनाचारोपयोगित्वाच्च स्याद् द्वैतस्य वस्तुसत्त्वमित्याशङ्क्य 'द्वैतेन्द्रजालस्य' इति । ऐन्द्रजालिकनिर्मितमायाहस्त्यादावपि शब्दप्रत्ययगोचरत्वादीनां सत्त्वान्नैतदस्तित्वसाधकम्–इत्याशयः । यथोक्तमभियुक्तैः – 'उपलम्भात् समाचारान्मायाहस्ती यथोच्यते । उपलम्भात् समाचारादस्तिवस्तु तथोच्यते ॥' (गौ. का ४–४४) इति ॥

द्वैतस्यैवंस्वभावत्वे किं फलतीत्यत आह – न स्वयमिति ॥ व्याख्यानप्रायोऽयं श्लोकः 'न पृथङ् नात्मना' (२–४५) इत्यस्य व्याख्यानेन । तत्राहङ्कारादिद्वैतमात्मनि कल्पितमित्युक्तम्, इह तु तत एवाद्वैतं सिद्धमित्युच्यते अध्यायार्थोपसंजिहीर्षया – इति विशेषः । अक्षरयोजना तु 'ग्राहकादिद्वैतेन्द्रजालस्य स्वस्य नानात्वं न स्वयं सिद्धम् । नाप्यवगतिरूपेणात्मरूपेण । तद्रूपेण निरूप्यमाणस्य प्रतीतरूपेणाविद्यमानत्वात् । नाप्युभाभ्याम् । एकस्यैव सत्यानृतोभयरूपत्वानुपपत्तेः । यत एवम्, अतो द्वैतबाधया सर्पादिबाधेन रज्जुस्वरूपवत् अद्वैतं सिद्धम् ॥ ११२ ॥

( मूलम् )

यथोक्तार्थप्रतिपत्तिदृढिम्ने श्रुत्युदाहरणोपन्यासः –

नित्यावगतिरूपत्वात् कारकादिर्न चात्मनः ।
अस्थूलं नेति नेतीति न जायत इति श्रुतिः ॥ ११३ ॥

( चन्द्रिकापहारिणी )

आत्मनः क्रियाकारकफलशून्यत्वे श्रुतिप्रमाणम् –

सर्वकारकक्रियाफलात्मकसंसारशून्य आत्मेति युक्तिभिः प्रसाधिते

श्रुत्युदाहरण प्रतिपत्तिदार्ढ्यार्थमित्याह – यथोक्तेति ॥ द्रढिमा श्रौत सिद्धान्तेन सर्वथा श्रद्धेयमेतदित्यध्यवसाय । 'विज्ञानमानन्द ब्रह्म' (बृ ३-९-२८७) इत्यवगतिरूपत्वे श्रुति । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन क पश्येत् ' (बृ ४-५-१५) इति कारकादिरहितत्वे । 'अस्थूल मनणु ' (बृ ३-८-८) इति विरुद्धधर्मश्रुति सर्वविशेषराहित्ये, 'न जायते ' (का १-२-१८) इति च सर्वभावविकाररहितकूटस्थ स्वभावत्वे– इत्येव श्रुतिरिह जागर्तीत्यर्थ ॥ ११३ ॥

( मूलम् )

सर्वस्यास्य ग्राहकादेर्द्वैतप्रपञ्चस्यात्मानवबोधमात्रोपादानस्य स्वय सेद्धुमशक्यत्वादात्मसिद्धेश्चानुपादेयत्वात् –

आत्मनश्चेन्निरार्यन्ते बुद्धिदेहघटादयः ।
षष्ठगोचरकल्पास्ते विज्ञेयाः परमार्थतः ॥ ११४ ॥

कुतो न्यायबलादेवं निश्चितं प्रतीयते ? यस्मात् –

नित्य संविदमाश्रित्य स्वतःसिद्धामविक्रियाम् ।
सिद्ध्यन्ते धियो बोधास्ताश्चाश्रित्य घटादयः ॥ ११५ ॥

( क्लेशापहारिणी )

आत्मव्यतिरेकेणानात्मा नाम नास्त्येव –

ग्राहकादिप्रतीतिर्मिथ्येत्युक्ते सत्यात्मवस्त्वतिरेकेण तस्यास्तित्वमपि मा शङ्कि केनचिदित्याशयेनोत्तरश्लोकप्रवृत्ति । तदाह – सर्वस्येति ॥ अविद्योपादानत्वात् अचेतनत्वम्, अत एव स्वय सेद्धुमशक्यत्वमित्यस्तु । आत्मरूपेणास्ति सल्तु ग्राहकादे सिद्धिरित्याशङ्क्याह – आत्मसिद्धेश्चेति । तदानीं तेषा प्रातीतिकरूपमेव न विद्यत इत्यनुपादेया सा । न हि ग्राहकादि रूपसिद्धौ अवगतिरूपेण तेषा सिद्धिरुपयुज्यत इति भाव ॥

आत्मनश्चेदिति ॥ आत्मसत्तैव बुद्धिदेहघटादीनां सत्ता । तच्चेत् निवार्यन्ते तद्व्यतिरेकेण निष्कृष्य निरूप्यन्ते तदा परमार्थत ते पष्ठगोचरकल्पा, पञ्चेन्द्रियार्थव्यतिरिक्त इवार्थस्ते नि स्वरूपा एव भवन्तीत्यर्थ ॥ ११४ ॥

आत्मनो व्यतिरेकेण बुद्ध्यादीनां पष्ठगोचरकल्पत्वमित्येतदसहमान शङ्कते – कुतो न्यायबलादिति । पूर्वमेवासकृदुक्तं न्याय स्मारयति – यस्मादिति श्लोकमवतार्य ॥

नित्यमिति श्लोक स्पष्टार्थ ॥ ११५ ॥

## १५. श्रुत्युपदेशेन यथार्थज्ञानप्राप्तिः

( सूत्रम् )

यस्मान्न कयाचिदपि युक्त्या आत्मनः कारकत्वं क्रियात्वं फलत्वं चोपपद्यते, तस्मात् आत्मवस्तुयाथात्म्यानवबोधमात्रोपादानत्वात् – नभसीव रजोधूमतुषारनीहारनीलत्वाद्यध्यासः– यथोक्तात्मनि सर्वोऽयं क्रियाकारकफलात्मकसंसारोऽहंममत्वयत्नेच्छादिर्मिथ्याध्यास एवेति सिद्धम् । इममर्थमाह –

अहम्मिथ्याभिशापेन दुःख्यात्मा तद्बुभुत्सया ।
इतः श्रुतिं तया नेतीत्युक्तः कैवल्यमाश्रितः ॥ ११६ ॥

तस्यास्य मुमुक्षोः श्रौताद् वचसः स्वप्ननिमित्तोत्सारितनिद्रस्येव इयं निश्चितार्था प्रमा जायते –

नाहं न च ममात्मत्वात् सर्वदाऽनात्मवर्जितः ।
भानाविव तमोऽध्यासोऽपह्नुश्च तथा मयि ॥ ११७ ॥

सोऽयमेवं प्रतिपन्नस्वभावम् आत्मानं प्रतिपन्नोऽनुक्रोशति —

यत्र त्वस्येति साटोपं कृत्स्नाद्वैतनिषेधिनीम् ।
प्रोत्सारयन्तीं संसारमप्यश्रौषं न किं श्रुतिम् ॥ ११८ ॥

( क्लेशापहारिणी )

मुमुक्षोः श्रुत्युपदेश एव शरणम् —

प्रपञ्चमिथ्यात्वे निश्चयवत एव वाक्यार्थज्ञानं निरर्गलमिति स्फोरयन् तन्मिथ्यात्वं तावदुपसंहरति — यस्मादिति ॥

अहम्मिथ्याभिशापेनेति ॥ अहंतदुपलक्षितममत्वयत्नेच्छादिरूपेण मिथ्याभिशापेन मिथ्यारोपेण आत्मा दुःखी सन्, तादृशमिथ्याभिशंसनशोधनेच्छया श्रुतिम् इतः शरणं गतः तया 'नेति नेत्यात्मा' (बृ. ३–९–२६, ४–२–४, ४–४–२२, ४–५–१५) 'त्वं सर्वथा सर्वदैव सर्वविधानात्मसंसर्गरहित इत्युक्तः प्रायश्चित्तादिशुद्ध इव कैवल्यं नित्यशुद्धाद्वितीयभावम् आस्थितो भवतीत्यर्थः ॥ ११६ ॥

श्रुत्युपदेशेन प्रमोत्पत्तिः —

ननु श्रुतिरेव तावत् वास्तवी काल्पनिकी वा ? तस्या वास्तवत्वे नाद्वैतसिद्धिः, कल्पितत्वे तु ज्ञानजनकत्वानुपपत्तिः । कथं हि स्वयमसती श्रुतिः सत्यं ज्ञानं जनयेत् ? — इत्याशङ्क्य मिथ्याभूतस्यापि सत्यवस्तुप्रतिपत्तिहेतुत्वमुपपद्यत एवेति सदृष्टान्तमाह — तस्यास्येति ॥ यथा स्वाप्नसिंहगर्जितादिना मिथ्याभूतेनैव उत्सारिता निद्रा यस्य तादृशस्यास्य मुमुक्षोः, अनाद्यविद्यानिद्रात उत्थितस्य मिथ्याभूतादेव श्रौताद् वचसो निमित्तभूतात्, इयं 'प्रमा जायते । यथा स्वप्ननिद्रापि मिथ्यैव सती स्वाप्नगर्जितादिश्रवणेनापनीयते, तावन्मात्रेण च सुप्तः प्रबुध्यतेऽपि, एवमिहापि मिथ्याभूता अविद्या मिथ्याभूतश्रुतिवाक्यश्रवणेनापनीयते, श्रुतिरपि मिथ्यात्वेनाध्यवसीयते, श्रोता तु नित्यशुद्धबुद्धमुक्तस्वरूप एवावतिष्ठत इति न किञ्चिच्चित्रम् । तथा ह्याहुः संप्रदायविदः — 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते । अजमनिद्रमस्वप्नमद्वैतं

वुच्यते तदा ॥ '(मा का. १-१६) इति । 'प्रमा जायते' इति तु श्रुतिप्रमाण जनितप्रत्ययान्ते प्रमितिस्वरूपानन्यभूत चैतन्यमभिव्यज्यत इत्यभिप्रायेण — इति सम्बन्धग्रन्थाशय । एव च सर्वप्रमाणव्यवहाराणामपि प्रागज्ञानमत्व विज्ञानात् सत्यत्व स्वप्नव्यवहारस्येव प्राक्प्रबोधात्, श्रौतस्य तु वचसस्तत्त्व मस्यादेरन्त्यप्रमाणत्वम् । अज्ञाननिवृत्तिपूर्वकं सकलप्रमाणव्यवहारबाधनादिति सूचित भवतीति ध्येयम् ॥

कीदृशी प्रमा जायत इति प्रदर्शयति — **नाहमिति** ॥ मयि नाहम्, न च मम, अहता ममता वा नैव जातुचिन्मम धर्मौ । यतोऽह सर्वदा कालत्रयेऽपि अनात्मवर्जित, आत्मत्वादेव । न ह्यात्मनोऽनात्मधर्मता जातुचिद् — इति भाव । कथ तर्हि अहममतादीनामध्यास, कथ वा 'नाहम्' इत्यादि रूपेण तत्प्रतिषेधो घटते ? तत्राह — भानाविवेति ॥ यथा भानौ न जातु चिदपि रात्र्यहनी । अथ च तत्रोडुकादिभि तत्र सम्बन्धोऽध्यस्यते, चक्षुष्मद्भिश्च पुम्भिस्तन्निषेधोऽनुभूयते, एव मय्यात्मनि सर्वथा अनात्मतद्धेर्मज्ञानयो संबन्धो न कदापि विद्यते, अथाप्यध्यस्यते नाह वेद्मीति, तदपह्नवश्च क्रियते श्रुतिजन्यज्ञानेन । अतोऽध्यासाध्यासनिषेधोऽयमविद्याव्यवहारदृष्ट्यैवेति न दोष इत्यर्थ ॥ ११७ ॥

अथ वाक्यार्थप्रतिपत्तौ न केवलमन पर सर्वाज्ञानसम्बन्धाभावज्ञान मनुवर्तते, किं तु नित्यबुद्धस्वरूपेऽप्येतावन्त कालमीदृश नित्यनिरस्ताज्ञान तत्त्व कथमह न ज्ञातवान् इत्यात्मानमनुक्रोशत्यपीत्याह — **सोऽयमिति** ॥

यत्र त्विति ॥ 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्र केन क पश्येत्' (बृ ४-५-१५) इति साटोप सरम्भेण समस्तद्वैतससारं प्रोत्सारयन्तीं निषेधन्तीमपि श्रुतिं किं नाशौषं मिमिति कर्णे न कृतवान् ? अहो धिङ्माम् ! — इत्यनुक्रोशती यथे । यद्यप्यनुक्रोशादिकमपि नास्त्येव विदुष परमार्थत, 'तत्र को मोह क शोक' (ई ७) इति श्रुते । तथाप्यनुक्रोशविव अज्ञातमनिवृत्तेव काल नयते, तस्यैपदप्यविद्यात्कार्यसंबन्ध शङ्कनीय इति मोक्षसाधनप्ररोचनार्थैवेय ज्ञानस्तुतिरिति ध्येयम् ॥ ११८ ॥

# १६. अध्यायार्थोपसंहारः

( मूलम् )

इत्योमित्ययमुद्धात्मा निष्कलोऽकारकोऽक्रियः ।
विरक्त इव बुद्ध्यादेरेकाकित्वमुपेयिवान् ॥ ११९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादशिष्यश्रीसुरेश्वराचार्यविरचितायां नैष्कर्म्यसिद्धौ समन्वयोक्तौ द्वितीयोऽध्यायः

( क्लेशापहारिणी )

अथाध्यायार्थमुपसंहरति विद्याफलं जीवन्मुक्ततां प्रदर्शयन् – इत्योमितीति ॥ यथा जायापुत्राद्यभिमानाद्विरक्तस्ततो व्युत्थाय संन्यस्तसर्वकर्मा परमहंसपरिव्राजको भूत्वा निष्परिग्रह एकाकी चरति यथेच्छम्, एवमयमपि शोधितत्वंपदार्थ, बुद्ध्यादेर्विरक्तः, एकाकित्वमुपेयिवान्, क्रियाकारकफलरहितेऽद्वैते स्वात्मन्येवावस्थानं प्राप्नोतीत्यर्थः । इत्योमिति-इतीदं तु ओंकारोपलक्षितम् अभिधानाभिधेयविभागातीतं नित्यनिरस्तसर्वाद्वैतं तत्त्वं स्वात्मत्वेन प्रतिपन्न इति सूचनार्थम् । तथा हि संप्रदायविदः 'अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः । ओङ्कारो विदितो येन स मुनिर्नेतरो जनः ॥' (गौ. का. १–२९) इति – इति सर्वं शिवम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीपूज्यपादशङ्करभगवच्चरणस्मरणपरिस्पन्दमानान्तःवेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण श्रीसच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीतायां नैष्कर्म्यसिद्धिव्याख्यायां क्लेशापहारिण्यां द्वितीयोऽध्यायः.

ॐ तत्सत्

# अथ तृतीयोऽध्यायः

( वेदान्तवाक्यार्थव्याख्यानम् )

—: § :—

## १. अध्यायसंबन्धः

( मूलम् )

सर्वोऽयं प्रमितिप्रमाणप्रमेयप्रमातृलक्षणः, आब्रह्मस्तम्बपर्यन्तः मिथ्याध्यास एव – इति बहुशः उपपत्तिभिः अतिष्ठिपम्[1]। आत्मा च जन्मादिषड्भावविकारवर्जितः कूटस्थबोध एवेति च स्फुटीकृतम् । तयोश्च मिथ्याध्यासकूटस्थात्मनोर्नान्तरेणाज्ञानं संबन्धः, अन्यत्र चोदनापरिप्रापितात् यथा 'इयमेवर्गग्निः साम' (छां॰ १-६-१) इति । तच्च अज्ञानं स्वात्ममात्रनिमित्तं न संभवतीति कस्यचित् कस्मिंश्चिद् विषये भवति – इत्यभ्युपगन्तव्यम् ॥

इह च पदार्थद्वयं निर्धारितम् आत्मा, अनात्मा च । तत्र अनात्मनस्तावत् नाज्ञानेन अभिसंबन्धः । तस्य हि स्वरूपमेवाज्ञानम् ; न हि स्वतोऽज्ञानस्य अज्ञानं घटते । संभवदपि अज्ञानस्वभावे अज्ञानं कमतिशयं जनयेत् ? न च तत्र ज्ञानप्राप्तिरस्ति । येन तत्प्रतिषेधात्मकम् अज्ञानं स्यात् । अनात्मनश्च अज्ञानप्रसूतत्वात् । न हि पूर्वसिद्धं सत् ततो लब्धात्मभावस्य सेत्स्यतः आश्रयस्य आश्रयि संभवति । तदनपेक्षस्य च तस्य निःस्वभावत्वात् । एतेभ्य एव हेतुभ्यः, नाऽनात्मविषयम् अज्ञानं संभवति इति ग्राह्यम् । एवं तावत् नाऽनात्मनोऽज्ञानित्वम्, नापि तद्विषयम् अज्ञानम् ॥

---

1. 'अभिहितम्' पा

पारिशेष्यात् आत्मन एवास्त्वज्ञानम् । तस्य 'अज्ञोऽस्मि' इत्यनुभवदर्शनात् । 'सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित्' (छां- ७-१-३) इति श्रुतेः । न चात्मनोऽज्ञानस्वरूपता । तस्य चैतन्यमात्रस्वाभाव्यात् । अतिशयश्च संभवति ज्ञानविपरिलोपः ज्ञानप्राप्तेश्च संभवः । तस्य ज्ञानकारित्वात् । न च अज्ञानकार्यत्वम् । कूटस्थात्मस्वाभाव्यात् । अज्ञानानपेक्षस्य च आत्मनः स्वत एव स्वरूपसिद्धेः युक्तम् आत्मन एवाज्ञत्वम् । किंविषयं पुनस्तदात्मनोऽज्ञानम् ? आत्मविषयम्– इति ब्रूमः । ननु – आत्मनोऽपि ज्ञानस्वरूपत्वात्, अनन्यत्वाच्च, ज्ञानप्रकृतित्वादिभ्यश्च हेतुभ्यो नैवाज्ञानं घटते, घटत एव । कथम् ? अज्ञानमात्रनिमित्तत्वात् तद्विभागस्य, सर्पात्मतेव रज्ज्वाः ॥

तस्मात् तदपनुत्तौ द्वैतानर्थाभावः । तदपनोदश्च वाक्यादेव तत्त्वपदार्थाभिज्ञस्य । अतो वाक्यव्याख्यानाय अध्याय[1] आरभ्यते ॥

( क्लेशापहारिणी )

अतीताध्यायार्थानुवादः –

अतीतानागतयोरध्याययो सम्बन्धं दर्शयिष्यन् द्वितीयाध्यायगतं विषयं संगृह्णाति 'सर्वोऽयम्' इत्यादिवाक्यद्वयेन । प्रमित्यावनात्मनो मिथ्याध्यासत्वम् । आत्मन कूटस्थचैतन्यत्वं च अतीताध्यायस्य समुदायार्थ इत्यर्थ । 'न विदन्त्यात्मन सद्य द्रष्टृदर्शनगोचरा '(२–१०६), 'ग्राहकग्रहणग्राह्यविभागे चोऽविभागवान्' ,(२–१०८), 'न पृथङ् नात्मना सिद्धि' (२–४५), 'अभूताभिनिवेशेन' (२–५१) – इत्यादिभिर्हि हेतुभिरात्मन प्रमितिप्रमाणादिविभागासस्पर्शी क्रियाकारकफलात्मताभावश्च स्थापित । अनात्मा चात्मानवबोधोत्थ , इतरेतरस्वभावापेक्षसिद्ध स्वतश्चासिद्ध -इत्यतो मिथ्याध्यास एवेति च । 'मिथ्याध्यास' इति मिथ्यैवाध्यस्त इत्यर्थ । अस्मिन् हि ग्रन्थे

1 'अध्यायस्तृतीयोऽयम्' इति पाठान्तरम् ॥

अध्यासशब्दो यथैगातसिस्तद्बुद्धिरित्यर्थे तथैवाध्यस्यमानप्रातीतिकपदार्थ इत्यर्थेऽपि बहुल प्रयुज्यते । तद्यथा 'भानाविव तमोऽध्यास' (२–१०७), 'अध्यस्यात्मनि देहादीन् मूढस्तद्बुद्धिचेष्टते' (२–५९) इत्यादिस्थलेषु अध्यास शब्दार्थो अध्यसनम्, अध्यारोप ; 'क्रियाकारकफलात्मकसंसारोऽहममत्व यत्नेच्छादि मिथ्याध्यास एव' (२–११६) इत्यादिस्थलेषु ■ अध्यस्यमान- पदार्थ एव तदर्थ । 'अतिष्ठिपम्' इत्यविवक्षितणिजन्तापेक्षया 'अभिहितम्' इति पाठान्तरादाने तु प्रक्रमभङ्गवारण फलम् । आत्मन कूटस्थबोधरूपत्व तु 'सदाऽविलुप्तसाक्षित्वम्' (२–३६), 'एष सर्वधियां नृत्तम् वीक्षते' (२ ५८), 'सर्वधीव्यञ्जक' (२-६६), 'अपश्यन् पश्यतीं बुद्धिम्' (२ ७१), 'परिणामिधिया वृत्तम्' (२–८२), 'तस्माज्जगद्धिया वृत्तम्' (२–८९) – इत्यादिश्लोकै स्फुटीकृतम् । तदिह द्वयमप्यनूद्यते वर्तिष्यमाणाध्यायस्य सङ्गतिं दर्शयितुमिति बोध्यम् ॥

आत्मानात्मनोः संबन्धोऽज्ञानकारितः –

अथ तृतीयाध्यायार्थं वाक्यव्याख्यानमवतारयितु वाक्यार्थज्ञानमात्र- निवर्त्यमज्ञान तावदवतारयति – तयोश्चेत्यादिना । 'तयोश्च मिथ्याज्ञान कूटस्थात्मनोर्नान्तरेणाज्ञान सम्बन्ध' ■ हि रज्जुसर्पयो रज्ज्वज्ञानमन्तरेण सबन्धो घटते । रज्ज्वज्ञानादेव हि तत्र सर्पमध्यस्यति । रज्जुज्ञानाभावकृत सर्पत्वेन विकल्पनमेव हि, अध्यस्तसर्पस्य रज्ज्वा सबन्धो नाम । प्रत्येत्येव हि केवल सर्प इति, न तु रज्ज्वां सर्पोऽस्ति वस्तुवृत्तेनेति । यथाहुर्वेदान्त वृद्धा –

> अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता ।
> सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पित ॥ गौ ■ २–१७

इति । दृश्यते च व्यवहारे प्रमितिप्रमाणादिविभागरूपस्य द्वैतस्य संबन्ध कूटस्थो आत्मनि । अतोऽवश्यं संबन्धग्राहक ज्ञानम् अभ्युपेयम् इति भाव । नन्वप्रमाणरूपयो प्रमाणपरिप्रापितोऽपि सबन्धो दृश्यते । तद्यथा 'इयमेवर्गग्नि साम' (छां ) इत्यत्र श्रुतिप्रमाणपरिप्रापितैर ऋचि पृथिवीदृष्टि, साम्नि च अग्निदृष्टि ; तद् कथम् अज्ञानमेवाध्यासहेतुरिति ? नैष दोष । न हि

त्र ध्याता ऋच ऋक्त्वेनाजानन् पृथिवीत्वेन प्रत्येति रज्जुमिव सर्पत्वेन ,
न तर्हि श्रुतिं प्रमाणत्वेन गृह्णन्, ऋक्त्वेन ज्ञातायामेव ऋचि पृथिवीदृष्टिम्
अध्यस्यति । तथा च तत्र दृष्टिक्षेप एव केवलम्, न तु अतस्मिन् भ्रान्त्या
तद्बुद्धि , अत्र पुन प्रमाणादिक विकल्पमात्रम् आत्मन कूटस्थतामविजान
अध्यस्यति अतदात्मकेऽप्यात्मनि । अत साधूच्यते कूटस्थमिथ्याध्यासयोरज्ञान
मन्तरेण न सम्बन्ध इति — इत्यभिप्राय । तदिदमात्मानात्मनो सम्बन्धस्य
मिथ्याज्ञानमात्रत्वात् तद्विवेकाभावलक्षणाज्ञानमात्रनिमित्तत्व भगवत्पादैरपि
सुस्पष्टमुद्घोषित गीताभाष्ये —

" क पुनरय क्षेत्रक्षेत्रज्ञयो सयोगोऽभिप्रेत ? न तावद्, रज्ज्वेव घटस्य, अवयवसश्लेषद्वारक सम्बन्धविशेष सयोग क्षेत्रेण क्षेत्रज्ञस्य सभवति, आकाशवन्निरवयवत्वात् । नापि समवायलक्षणस्तन्तुपटयोरिव, क्षेत्रक्षेत्रज्ञयो रितरेतरकार्यकारणभावानभ्युपगमात् इति । उच्यते — क्षेत्रक्षेत्रज्ञयो विषयविषयिणो भिन्नस्वभावयो इतरेतरतद्धर्माध्यासलक्षण सयोग , क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धन , रज्जुशुक्तिकादीना तद्विवेकज्ञानाभावात् अध्यारोपितसर्परजतादिसयोगवत् ॥ "

इति ॥

अज्ञानस्याश्रयविषयसापेक्षता —

तदेव कूटस्थात्ममिथ्याध्यासयो सम्बन्धसिद्ध्यर्थमज्ञानमवश्यमभ्युपगन्तव्यम् इत्युपपादितम् । अथेदानीं ' बाधकज्ञानस्य ज्ञात्राश्रयत्वात् तद्बाध्याज्ञानस्यापि तदाश्रयत्वमिति युक्त लोकानुसारत । ' अय सर्प ' इत्यज्ञानस्य, तस्यैव तद्बाधक रज्जुज्ञानम् इति नियमदर्शनात् । अज्ञानविषयेण तु तद्व्यतिरिक्तेनैव केनचिद् भाव्यम् । न हि स्वात्मानमेव ज्ञातु प्रयतते कश्चित्, किं तु, अज्ञान स्वव्यतिरिक्त ज्ञेयम् इति सुविदितमेतत् । अत्र पुनर्वेदान्ताश्रयज्ञाने आत्मैव ज्ञाता स एव च ज्ञातव्य —इत्यज्ञानाश्रयताविषयते तस्यैवेत्यापतति । तत्कथमेतदुपपाद्यताम् ' इति शङ्कयित्वा तदुपपादयितुमारभमाणोऽज्ञानस्याश्रयविषयसापेक्षत्व तावदभ्युपगमयति — तच्चाज्ञानमिति । अज्ञान स्वात्ममात्रनिमित्त न संभवति । जानात्यभिधेयैव तावद् धात्वर्थक्रिया कर्तृस्था परविषया

चेति प्रसिद्धमेतत् , अतो ज्ञानाभावरूपमपि अज्ञानम् अनपेक्ष्य कञ्चिदाश्रय विषय न स्वात्ममात्रनिमित्त स्वरूपलाभमाप्नुयादिति युक्तम् । तदेतदाह – कस्यचित् कस्मिंश्चिद्विषये भवतीत्यभ्युपगन्तव्यम् इति । एतेन, यदाहु केचित् 'द्वैतोपादानतया कल्पितमज्ञान प्रकृतिमायादिशब्दवाच्य विवक्षित प्रकरणे' इति तद् ग्रन्थकर्त्रैव कण्ठरवेण निराकृत भवति । न हि नामरूपबीजलक्षणा प्रकृति 'कस्यचित् कस्मिंश्चित् विषये' भवति । किञ्च 'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च' (गी १३-५) इति अव्यक्ताख्यप्रकृते क्षेत्रकुक्षि॰ निक्षिप्तत्वात्, तस्य चाव्यक्तस्य ज्ञेयत्वात्, न ज्ञात्राश्रय तदित्यतोऽपि 'कस्यचित् कस्मिंश्चित् विषये' इति व्यवहृताज्ञानपदभाग्भवति वाचभ्युपगत मुपादानात्मक नामरूपबीजमिति स्पष्टम् । ग्रन्थकृदप्युक्तश्लोकमुदहार्षीद् द्वितीयाध्याये (२-४३) इति स्मर्तव्यम् । उपपादितमेतत् प्रथमाध्याय व्याख्यान एवेत्यास्ता तावत् । प्रकृतामेवाज्ञानगतां चिन्ता विततुम ॥

अनात्मा नाज्ञानाश्रयः –

भवत्वाश्रयविषयसापेक्षत्वमज्ञानस्य तथाप्यात्माश्रयविषयत्व तस्य कथम् ? – इत्याशङ्क्य तदुपपादयितुमारभते – इह चेति ॥ न तावज्ज्ञानाज्ञानेच्छादयोऽनालम्ब्य कञ्चित् स्वार्थपदार्थ सत्ता प्रतीतिं वा अश्नुवन्ति । परार्थत्वात् तेषाम् । तथा विषय कञ्चिद्व्याप्यैव तेषा स्थितिर्वक्तव्या। सकर्मकत्व स्वाभाव्यात् । तथा चोपपादितमधस्तात् । तथा च प्रकृतेऽज्ञान प्रति आश्रयत्व विषयत्व च आत्मानात्मनोर्मध्ये कतरस्य संभावयितु युक्तम् इति निर्धारणीयमित्याशय ॥

भवतु तर्हि, अनात्मन एव द्वयमपात्यत आह – तत्रानात्मनस्तावत् इति । आत्मानात्मनोर्मध्ये अनात्मनस्तदाश्रयत्वविषयत्वे न सभवत इति प्रथमम् उपपादयिष्याम , तत ऊर्ध्वम् आत्मनि तत् सभवति वा न वा–इत्येतद् विमृश्याम इति तावच्छब्दादानेनाभिप्रेतम् । तत्राप्याश्रयत्व प्रथम निषेद्धु मारभते, सिद्धे ह्याश्रये अज्ञानस्य स्थितिस्तावदुपपादिता भवेदिति । 'तस्य हि' इति । (१) आत्माज्ञानादेव हि स प्रथते, रज्ज्वज्ञानादिव सर्पे । अत

अज्ञानमेवानात्मनः स्वरूपम्, अज्ञानं विना स्वातन्त्र्येण तस्य भावाभावा-दिति भावः। यदुक्तं तैत्तिरीयवार्तिके —

न जानामीत्यविद्यैका नित्या सत्कारणं मता ॥ तै. वा २-१७६

अनात्मेवीह यद् भाति तदविद्याविजृम्भितम्।
तस्मादविद्या साप्युक्ता (विद्या?)स्वात्मैकरूपिणी ॥ तै. वा २-१७८

आत्मानात्मातिरेकेण तस्या रूपं न विद्यते।
अस्मिन्नवद्यविद्येति सत्येऽर्थे घटते त(मौ?)दा ॥ तै. वा. २-१७९

इति च। ततः किम्? तत्राह — न हि स्वतोऽज्ञानस्याज्ञानं घटत इति। तस्माच्चाज्ञाना-श्रयत्वं यथा न घटमानम्, तथैवेदमपीति भावः। तस्माच्चाज्ञाना-श्रयत्वमनात्मनः संभवति। हेत्वन्तरमाह — संभवदपीति। (२) अज्ञानेन हि स्वाश्रये ज्ञानलोपसंशयविपर्यासान्यतमरूपोऽतिशयः क्रियते। न चानात्मा जातुचित् ज्ञाननाशमात्मनि वेदयते, कस्मिंश्चिद् विषये संशेते, विपर्यस्यतीति वा लोके दृष्टम् इति भावः। अस्ति हेत्वन्तरमपीत्याह — न च तथाज्ञानप्राप्तिरस्तीति। (३) तस्य ह्यज्ञानत्वं युक्तम्, यस्य जातुचित् ज्ञानप्राप्तिः संभाव्यते। न च घटादीन् प्रतिबोधयितुम्, प्रतिबोधनेन ज्ञानं संपादयितुं वा समीहन्ते प्रेक्षावन्तः। ननु ज्ञानप्राप्तिर्मास्तु घटादिषु, ततः किम्?— इत्यत्राह 'येन तत्प्रतिषेधात्मकमज्ञानं स्यात्' ज्ञानप्रतिषेधा-त्मकत्वं ह्यज्ञानस्य, न च प्रतियोगिनो ज्ञानस्य जातुचिदपि प्राप्तिरस्ति घटादौ, तत्र का कथा ज्ञानाभावलक्षणाज्ञानाश्रयत्वस्येति भावः। अत्र ज्ञानप्रतिषेधात्मकत्वोक्तिरज्ञानस्य व्याकृतजगदुपादानभूतान्याकृतस्वरूपत्व-मज्ञानस्येच्छतां पक्षं विरुणद्धीति स्मर्तव्यम्। चतुर्थं हेतुमाह — (४) 'अनात्मनश्चाज्ञानप्रसूतत्वात्' इति। एतच्च 'तस्य स्वरूपमेवाज्ञानम्' इति हेतुविशदीकरणावसरे स्फुटितम्। 'अज्ञानप्रसूतत्वेऽप्यनात्मनः, तदाश्रयत्वं किं न स्यात्' इति शङ्कमानमतिमन्दं प्रत्याह — न हि पूर्वसिद्धमिति। पूर्वमेव सिद्धमज्ञानम्, ततो जायमानस्य आश्रयान्युपहासमेतत्, न हि अज्ञानादुत्पद्यमानं तत् पूर्वमेवाज्ञानाश्रयत्वेनापि वर्तते इत्यनुन्मत्तो ब्रूयादिति

भावः । तत्पत्समानाकारेणाश्रयत्वं मास्तु, आकारान्तरेण त्वनात्मनोऽज्ञानाश्रयत्वं किं न संभवेदिति शङ्कामिमां व्युत्पादयति – तदनपेक्षस्य च इति । अज्ञानापेक्षैव हि स्वरूपप्राप्तिरनात्मनः । अतो नैवास्ति स आकारविशेषो यत्प्रागपि समान्वेताज्ञानाश्रयत्वेन । तस्मादपि नानात्मनोऽज्ञानाश्रयत्वमित्यर्थः ॥

अनात्मा नाज्ञानविषयः –

ननु भवतु अज्ञानाश्रयत्वासंभवोऽनात्मन यथोक्तहेतुभ्य, विषयत्वं तु किं न स्यात् ? 'घटं न जानामीति' व्यवहारदर्शनाद्धि अज्ञानविषयत्वं तस्य समवतीति युज्यते । तत्राह ' एतेभ्य एव हेतुभ्यः ' इत्यादि । (१) अनात्मनोऽज्ञानमात्रस्वरूपत्वात् न तस्याज्ञानाश्रयत्वम् (२) अज्ञानस्य स्वसिद्धेवातिशयाधायकत्वासंभवात्, (३) अज्ञानविषयकज्ञानोत्पत्त्यसंभवात्, तत्प्रतिषेधात्मकाज्ञानविषयत्वानुपपत्ते, (४) अज्ञानस्य स्वजन्यात्मत्मन पूर्वमेव सिद्धस्यानात्मविषयकत्वासंभवाच्च – इत्यर्थः । यद्यपि 'घटं न जानामि', 'अज्ञानं नष्टम्', 'इदानीं ज्ञातो घट' – इति च व्यवहारे घटाद्यनात्मविषयम् अज्ञानम्, तत्परिहारेण ज्ञानोदयश्च उपलभ्येते, तथापि स्वप्नोपलब्धघटाज्ञानतत्परिहारज्ञानवत् प्रतीतिमात्रं तदिति न तृतीयचतुर्थहेत्वोरसिद्धिरिति ध्येयम् ॥

आत्मन एवाज्ञानित्वम्, अज्ञानविषयत्वं च –

यथाप्रतिपादितमर्थं हेतूकृत्य अज्ञानस्याश्रयविषयविशेषनिर्धारणार्थम् वृत्तार्थं तावदुपसंहरति – एवं तावदिति । अत्रैतत् प्रतत् प्रमातृप्रमाणादिलक्षणस्य द्वैतस्य शुक्तिरजतादिवदसत्त्वम्, आत्मनश्च नित्यचैतन्यरूपत्वं च पूर्वाध्यायनिर्णीतमनूद्य तयोः कः संबन्धः ? – इत्येतन्निरूप्यम् इति प्रतिज्ञाय नूतपनि यच्चैतन्ये निभाव्यमानस्य प्रमात्रादिविभागलक्षणद्वैतस्य मिथ्याध्यासमात्रत्वात् सत्यानृतयोर्न वास्तविकः कश्चन संबन्धोऽवकल्पत इत्यत, अज्ञानत एव तयोः संबन्ध इति निर्णीतमिति । तत्राज्ञानम् नाज्ञानजन्यस्य मिथ्याध्यासरूपस्यानात्मन, नापि तद्विषयकं भवितुमर्हतीति

युक्तिभिरादर्शितम् । न चाज्ञानस्य आश्रयं विषयं वा अनपेक्ष्य स्वरूपमात्रनिमित्तत्वं संभवतीत्युक्तम् । ततः परिशिष्ट आत्मैव तदाश्रयो विषयश्चेति बलादायातीत्याह – **पारिशेष्यात् इति** ॥

आत्मनोऽज्ञानाश्रयत्वोपपत्तिः –

न केवलं गत्यन्तराभावात् परिशिष्ट आत्मैवाश्रयत्वेन विषयत्वेन चाश्रीयते किं तूपष्टम्भकहेतुसद्भावाच्चेत्येतद्दर्शयितुमारभते – तस्येत्यादिना । (१) 'अज्ञोऽस्मि' इत्यनुभवस्तावदुपन्यस्यते । अनुभवस्य सर्वप्रमाणमूर्धन्यत्वात् । अनात्मनो घटादेरचेतनस्य 'अज्ञोऽयम्' इति संभावना नास्ति, अनुभवविरोधात् ; आत्मविषये तु 'अज्ञोऽस्मि' इति सार्वत्रिकानुभवबलादेव अज्ञानाश्रयत्वं संभाव्यते । अज्ञानपरिहारायैव हि सर्वोऽपि ज्ञानं संपादयितुमीहत इति । (२) श्रुतिश्चात्र मानमित्याह 'सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित्' (छा. ७–१–३) इति नारदस्य चेतनस्य स्वानुभूतित एव स्वात्मविषयकाज्ञानं विज्ञाय तत्परिहारार्थमात्मविद्याप्रार्थना श्रूयते । न च नारदः संशेते, 'अहमज्ञो वा न वा' इति । अतोऽपि सिद्धमिदं यदज्ञानम् आत्माश्रयमित्यनुभववेद्यमिति इति भावः । प्रतिज्ञातं चेदं ग्रन्थकृता ग्रन्थारम्भे एव 'ऐकात्म्याप्रतिपत्तिर्या स्वात्मानुभवसंश्रया' (१–७) इत्यत्र । अत्राधिकमपेक्षितं तद्व्याख्यानादधिगन्तव्यम् । अथानात्मनोऽज्ञानाश्रयत्वविषयत्वयोराश्रितयोर्ये दोषाः प्रसञ्जिता ते अत्र नावकाशं लभन्त इत्याह – **न चात्मनोऽज्ञानस्वरूपता** – इत्यादिना । (१) चैतन्यस्वरूपत्वादेवात्मनोऽज्ञानस्वरूपत्वानुपपत्तिः । अतस्तस्याज्ञानाश्रयत्वं संभवति । (२) अज्ञानकृतातिशयश्च संभवति, ज्ञानाभिपरिलोपलक्षणः, संशयादिलक्षणश्च । मेघावरणकृतभानुप्रकाशाभाववत् । (३) ज्ञानप्राप्तिसंभवोऽप्यस्ति, 'ज्ञातं मया' इत्यादिव्यवहारे अज्ञानविनाशकचैतन्याभासोत्पत्तिहेतुत्वात् । अतश्च 'इदानीं न जानामि' इति ज्ञानप्रतिषेधात्मकाज्ञानाश्रयत्वोपपत्तिः । (४) न चाज्ञानकार्यत्वम्, अनात्मवत् । कूटस्थनित्यचैतन्यस्वाभाव्यात्, तत्र कारणान्तरानपेक्षणात् । अज्ञानमनपेक्ष्यैव तत्प्रकाशकत्वेनापि स्वत एव सिद्धत्वादात्मनोऽ-

ज्ञानाश्रयत्वोपपत्ति । तदेवम् अनुभवसिद्धम्, श्रौतव्यवहारसिद्धम्, बाधक-हेतुरहितम्, साधकयुक्त्युपेतं च पारिशेष्यन्यायसमावितमज्ञानाश्रयत्वमात्मन इत्यभिप्राय ॥

आत्मनोऽज्ञानविषयत्वोपपत्तिः –

अथैवमाश्रयत्वोपपत्तावपि नात्मनोऽज्ञानविषयत्वमुपपद्यत इत्याक्षिपति – 'किंविषयम्' इति। न हि य एवाज्ञानस्याश्रय स एव तद्विषयोऽपीति घटते – 'अहमिदं न जानामि' इति खल्वात्मनो भिन्नस्यैवाज्ञानविषयत्वेन लोके प्रसिद्धे – इति भाव । समाधत्ते – आत्मविषयमिति । 'मामप्यहं न ज्ञातवानस्मि' इति सुप्तोत्थितादीनां प्रतिबोधसमये व्यवहारदर्शनात्, देह व्यतिरिक्तकर्तृभोक्त्रात्मवादिनापि 'अहं मनुष्य' इत्याकारकात्मविषयाज्ञानकृत मिथ्याज्ञानस्य स्वीकार्यत्वात्, ज्ञानाभावकृतातिशयवत्त्वोपपत्ति, तद्विषयक ज्ञानोत्पत्तौ, तत्कृतातिशयश्चाज्ञानपरिहारलक्षण इत्युपपद्यते । अनात्मन स्त्वज्ञानापेक्षसिद्धिकत्वाभावेन स्वत सिद्धरूपस्यैव तस्याज्ञानविषयत्वसम्भव – इत्येवमनवद्यमात्मन एवाज्ञानविषयत्वमिति इति भाव ॥

अज्ञानाश्रयत्वतद्विषयत्वे न वास्तविके –

अथैतदज्ञानाश्रयत्वं विषयत्वं च किं वास्तविकमेव, उताज्ञानकृतम् ?– इति विचिकित्सायां वास्तविकत्वे सर्वथापि निवृत्त्यनुपपत्तेरज्ञानकृतमेव तदिति स्वीकार्यमिति प्रतिपादयिष्यन् शङ्कामुत्थापयति – नन्विति ॥

आत्मनोऽपि नैवाज्ञानम् आश्रयित्वेन विषयित्वेन वा घटते । कुत ? तस्य (१) ज्ञानस्वरूपत्वात् । ज्ञानाज्ञानयोस्तम प्रकाशयोरिव विरुद्ध स्वभावयो संसर्गानुपपत्तेरिति भाव । (२) अनन्यत्वाच्च । न ह्यद्वितीय कूटस्थचैतन्यस्वभावात् अन्यत् संभवत्यज्ञान नाम, यस्याश्रयो विषयो वा भवेदात्मा इत्यर्थ । इतश्च । (३) ज्ञानप्रकृतित्वात् । अज्ञाननिवर्तक-प्रमाणज्ञानकारणत्वात् इत्यर्थ । न हि तमोनिवर्तकप्रकृष्टप्रकाशस्य भानोस्तम आश्रयत्वं विषयत्वं वा घटत इत्यभिप्राय । (४) 'ज्ञानप्रकृतित्वादिभ्यश्च' इति 'आदि'शब्देन असंसर्गस्वाभाव्यादाकाशवत्, अज्ञानादिसर्वसाक्षित्वेन,

स्वसाक्ष्यभूताज्ञानाश्रयत्वविषयत्वयोरनवक्लृप्तेः, कूटस्थनित्यस्वभावस्य च ज्ञानाज्ञानकृतविशेषानुपपत्तेः, अज्ञानादिसर्वानात्मव्यापकस्य चिद्रूपस्यात्मनः स्वव्याप्याज्ञानकृतावरणासंभवाच्च – इत्यादयो हेतवो गृहीतव्याः ॥

अथ समाधत्ते – घटत एवेति । पूर्वपक्षी शङ्कते – कथमिति । परिहारमाह – अज्ञानमात्रनिमित्तत्वात् तद्विभागस्य सर्पात्मतेव रज्ज्वाः – इति । अयमाशयः । भवेदयमवष्टम्भो यदि वयं वास्तविकेनैव वृत्तेन आत्मन्यज्ञानाश्रयत्वं विषयत्वं चातिष्ठेम । अज्ञानमात्रनिमित्तस्त्वयम् अज्ञानाश्रयत्वादिविभागः, आत्मानात्मविभागश्च । न हि कल्पितम् अकल्पितस्य स्वभावो भवति सर्पात्मतेव रज्ज्वाः । तदुक्तं संबन्धवार्तिके –

> ब्रह्माविद्यावदिष्टं चेन्ननु दोषो महानयम् ।
> निरविद्ये च विद्याया आनर्थक्यं प्रसज्यते ॥ सं. १७५

इत्याशङ्क्य

> नाविद्यास्येत्यविद्यायामेवासित्वा प्रकल्प्यते ।
> ब्रह्मदृष्ट्या त्वविद्येयं न कथञ्चन युज्यते ॥ सं. १७६
> यतोऽनुभवतोऽविद्या ब्रह्मास्मीत्यनुभूतिवत् ।
> अतो मानोत्थविज्ञानध्वस्ता साप्येत्यथात्मताम् ॥ सं. १७७

इति च ॥*

इहाप्युक्तं पूर्वस्मिन्नध्याये 'सर्व एवायमात्मानात्मविभागः प्रत्यक्षादिप्रमाणवर्त्मन्यनुपनिपतितोऽविद्योत्सङ्ग एव, न परमात्मन्यपाश्रयः ॥' (२–१०३) इति । अतः सर्वमनवद्यम् ॥

उपसंहारः –

अस्तु सर्वमेतदेवम्, प्रकृते किमायातम् ?– इत्यत आह– 'तस्मात्' इति । तदेवम् आत्माश्रिताज्ञानमात्रनिमित्तत्वात् द्वैतानर्थस्य तदपनुत्तौ द्वैतानर्थाभावः । अज्ञाननिमित्तस्य हि द्वैतस्य विकल्पमात्रत्वात् मिथ्यात्वे सति तदपनोदोपपत्तिः । अज्ञानाश्रयत्वस्यापि यथोक्तविधया अज्ञानमात्रनिमित्तत्वात् अवास्तविकत्वे सिद्धे तस्याप्यपनोदोपपत्तिः । 'तदपनोदश्च वाक्यादेव'; न ह्यवास्तवं किञ्चिद् वास्तवम् अन्यदपनोदकमपेक्षते,

तत्त्वावस्थतत्त्वज्ञापक वाक्यमात्र मुक्त्वा । न हि रज्ज्वा विकल्पित सर्प सबन्ध, तन्निमित्तमज्ञान वा रज्जुसतत्त्वज्ञापकवाक्यादन्यदपनोदकमपेक्षमाणे दृष्ट इति। तत्र वाक्यार्थज्ञानमेव कथमुत्पद्यताम् ? – इत्याशङ्क्याह 'तत्पद-पदार्थाभिज्ञस्य' इति। तस्मिन् वाक्ये यानि पदानि तत्, त्वम्, असि – इत्येतानि, ये च तेषामर्था, तेषाम् अभिज्ञस्य न वाक्यश्रवणादन्यत् अपेक्षितव्य मवशिष्यत इत्यर्थ । तत्पदस्य हि निर्विकारत्वम्, प्रमेयभूतद्रव्यादिधर्मा-सपृक्तत्वम्, चिदात्मकत्वम् – इत्यादिशास्त्रप्रसिद्धस्वभावकम् अद्वितीय जगत्कारणम् अर्थ, त्वपदस्य च देहादिसर्वात्माभासविलक्षणश्चैतन्यमात्र प्रत्यगात्मा अर्थ । असिपदस्य च तयोरैक्यम्। यस्य ह्येते पदार्था अज्ञान सशयविपर्ययलक्षणप्रतिबन्धाभावात् अभिज्ञाता, तस्य वाक्यश्रवणमात्रादेव सकलमपि द्वैतमपनुद्यते रज्जुवाक्यश्रवणमात्रेणेव रज्जुसर्प । पदार्थाभिज्ञता च सपादिता पूर्वाध्यायार्थनिश्चयेनेति वाक्यार्थाध्यवसितिमात्रमवशिष्टमिति तद्व्याख्यानम् उत्तराध्यायार्थ इत्याह – अतो वाक्यव्याख्यानाय अध्याय आरभ्यते इति ॥

## २. वाक्यादेवावाक्यार्थप्रतिपत्तिः

(मूलम्)

तत्र यथोक्तेन प्रकारेण तत्त्वमस्यादिवाक्योपनिविष्टपदपदार्थयोः कृतान्वयव्यतिरेकः –

यदा ना तत्त्वमस्यादेर्ब्रह्मास्मीत्यवगच्छति ।
प्रध्वस्ताहममो नैति तदा गीर्मनसोः सृतिम् ॥ १

यदैव तदर्थं त्वमर्थोऽवैति तदैव अवाक्यार्थतां प्रतिपद्यते गीर्मनसोः सृतिं न प्रतिपद्यते – इति कुत एतदध्यवसीयते ? यस्मात् –

तत्पदं प्रकृतार्थं स्यात् त्वंपदं प्रत्यगात्मनि ।
नीलोत्पलवदेताभ्यां दुःख्यनात्मत्ववारणे ॥ २ ॥

एवं कृतान्वयव्यतिरेको वाक्यादेव अवाक्यार्थं प्रतिपद्यत इत्युक्तम् । अतस्तद्व्याख्यानाय श्लोकोपन्यासः —

सामानाधिकरण्यं च विशेषणविशेष्यता ।
लक्ष्यलक्षणसंबन्धः पदार्थप्रत्यगात्मनाम् ॥ ३ ॥

( क्लेशापहारिणी )

ननु वाक्यार्थप्रतिबन्धस्त्वंपदार्थविवेकात् अपनुद्यत — इत्युक्तम् । तथापि पदार्थसंसर्गस्यानिवारणात् कथं वाक्यमात्रात् निर्विशेषम् अवाक्यार्थं विजानीयादिति ? तत्प्रकारं विवृण्वन् आदौ वाक्यतद्गतपदकृत्यं तावत् प्रतिजानीते द्वाभ्यां श्लोकाभ्याम् । तत्र द्वितीयाध्यायार्थमनूद्य वाक्यार्थज्ञानफलमाह — तत्रेत्याद्यवतारिकापूर्वकम् 'गीर्मनसोः स्तुतिम्' इत्यन्तेन श्लोकेन । पदपदार्थयोः कृतान्वयव्यतिरेकः पदस्य पदार्थस्य च विवेकं कृतवान् प्रत्यगात्मावगतिं यदा प्राप्नोति तदा गीर्मनसोः स्तुतिम् नैति इति योजना । अथवा 'पदविषये वाक्यविषये च कृतान्वयव्यतिरेकः' इति सप्तम्यन्ते एव पदे 'पदपदार्थयोः' इति समस्तपदावयवत्वेन ग्राह्ये । तत्र पदविषये अन्वयव्यतिरेकौ यथा 'तत्त्वमसि', 'अहं ब्रह्मास्मि'— इत्यादिवाक्येषु त्वम्, अहम्—इत्यादीनि पदानि संसारित्वेनावभासमानात्मपराणि, 'तत्', 'ब्रह्म'—इत्यादीनि तु प्रकृतजगत्कारणवस्तुपराणीति वाक्यसंदर्भपर्यालोचनया निर्धारणफलकौ । पदार्थविषये तु त्वंपदार्थः, न देहादिः किं तु सर्वान्तरप्रत्यगात्मभूतं चैतन्यमेव, तत्पदार्थस्तु निरस्तसर्वसंसारधर्मकं ब्रह्मसञ्ज्ञकं वस्तु — इति सर्वत्र पदार्थानुगमेन निर्धारणफलकः ॥

एवं च वाक्ये ये तत्त्वंपदे, यौ च तयोरर्थौ, तयोः कृतान्वयव्यतिरेकः सन् यदा 'ब्रह्मास्मीत्यवगच्छति' इति श्लोकस्थेन संबन्धः — इति प्रदर्शयितुं श्लोकं पठति — यदेत्यादि । यदा ना मुमुक्षुः पुरुषः,

प्रध्वस्ताहंमम समनन्तरपूर्वाध्यायोक्तप्रकारेण, अहंममत्वयत्नेच्छादीनाम् अनात्मतां मिथ्यात्वं च आकलय्य, तत्त्वमस्यादेर्वाक्यात् ब्रह्मात्मैकत्वबोधकात् 'अहं ब्रह्मास्मि' इत्यवगच्छति स्वस्य ब्रह्मात्मतामनुभवति, तदा गीर्मनसो सृतिं वाङ्मनसयोर्गोचरता नैति, वाङ्मनसव्यवहारातीतनिर्विशेषवस्त्वात्मनैवावतिष्ठते इत्यर्थः ॥ १ ॥

प्रश्नमुत्थाप्य द्वितीयश्लोकेनोत्तरमाह – यदैवेत्यादिना । यदैव सदर्थे त्वमर्थेऽवैति त्वंपदार्थभूते प्रत्यगात्मनि तत्पदार्थे निरस्तनिखिलसंसारधर्मकं शुद्धचैतन्यं जानाति, तदैवावाक्यार्थता भेदसंसर्गरहितं निर्विशेषमेव वस्तु सपद्यते वाक्यार्थवेदिता इति कुतो निश्चीयते ? – इति प्रश्नः । उत्तरत्वेन श्लोकमवतारयति 'यस्मात्' इति ॥

तत्पदम् इति ॥ 'तत्त्वमसि' (छा. ६–८–७) इति वाक्ये हि तत्पदं प्रकृतार्थं स्यात् । अद्वितीयस्य परमार्थसत्यस्य प्रकृतस्य सदभिन्नपरमात्मनो वाचकं स्यात् । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा. ६–२–१) इति प्रकृतत्वात्, 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति जगज्जन्मादिकारणत्वेन मध्ये परामृष्टत्वात्, इहापि 'स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इत्युक्त्वा 'तत्त्वमसि' (छा. ६–८–७) इति प्रकृतपरामर्शपूर्वकमेवोपदेशात् इति भावः । त्वंपदं 'प्रत्यगात्मनि' । श्वेतकेतो पितुरादेशवाक्यं श्रोतुं मन्तुं चोपस्थितस्य प्रतीचि पराग्भूताहङ्काराद्यनात्मापेक्षया सर्वान्तरभूते आत्मनि 'वर्तते' इति शेषः । ततश्च एताभ्यां समानाधिकरणाभ्यां दुःखित्वानात्मत्ववारणे भवत – इत्यर्थः । तत्र दृष्टान्तः 'नीलोत्पलवत्' इति । यथा 'नीलमुत्पलम्' इति वाक्ये नीलपदं सर्वनीलवस्तुषु वर्तमानम् उत्पलशब्दसान्निध्यात् अनुत्पलेभ्यो व्यावर्तते, उत्पलशब्दश्च नीलशब्दसाहचर्येण रक्तादिभ्यो व्यावर्तते – तथा च ताभ्यां अनुत्पलत्वरक्तत्वादिवारणे भवत [1] – एवमेव प्रकृते तत्पदेन त्वंपदवाच्यं दुःखित्वम् त्वंपदेन च तत्पदगम्यमनात्मत्वं च व्यावर्तितं भवति इत्यर्थः ।

1. 'वारणम्' इति पाठे तु 'भवति' इति व्याख्यानपदं नेयम् ॥

इत्थं चोभे अपि पदे चैतन्यमात्रे लक्ष्यत इति वाक्यात् अवाक्यार्थप्रतिपत्तिः संगच्छत इति भावः ॥ २ ॥

तत्त्वमसिवाक्ये तत्त्वंपदयोः सामानाधिकरण्यात् दुःखित्वानात्मत्वयोर्वारणं भवति – इत्युक्तम् । अथ कथं तद्वारणम्, कथं वा वाक्यादेव अवाक्यार्थप्रतिपत्तिः ? इत्येतद् विशदयितुकामः, तत्र सूत्रभूतं श्लोकं तावदुपन्यस्यति 'सामानाधिकरण्यं च' इत्यादि । तदाह – 'एवम्' इति ॥

सामानाधिकरण्यमिति ॥ पदयोः सामानाधिकरण्यम् पदार्थयोर्विशेषणविशेष्यता, ततस्तत्त्वंपदार्थयोः प्रत्यगात्मना लक्ष्यलक्षणसम्बन्धः – इति संबन्धत्रयप्रतिपत्तिक्रमेण, यथोक्तावाक्यार्थप्रतिपत्तिः सेत्स्यतीति सूत्रश्लोकाभिप्रायः ॥ ३ ॥

# ३. श्रवणमनने विधिपरिप्रापिते

( मूलम् )

अस्मिन् सूत्रे उपन्यस्ते कश्चिच्चोदयति – योऽयं वाक्यार्थप्रतिपत्तौ पूर्वाध्यायेनान्वयव्यतिरेकलक्षणो न्यायः सर्वकर्मसंन्यासपूर्वकोऽभिहितः, किमयं विधिपरिप्रापितः, किं वा स्वरसत एवात्र पुमान् प्रवर्तत इति ? किञ्चातः ? शृणु । यद्यात्मवस्तुसाक्षात्करणाय विधिपरिप्रापितोऽयं न्यायः, तदा अवश्यम् आत्मवस्तुसाक्षात्करणाय व्यावृत्तशुभाशुभकर्मराशिः, एकाग्रमनाः, अन्वयव्यतिरेकाभ्यां यथोक्ताभ्याम् आत्मदर्शनं करोति । अपरिसमाप्यात्मदर्शनं ततः प्रच्यवमान आरूढपतितो भवति । यदि पुनः, यदृच्छातः प्रवर्तते, तदा न कश्चिद्दोषः इति । विधिपरिप्रापित इति ब्रूमः । यत आह–

'यदि पुनर्यदृच्छातः' इति । तदा अन्वयव्यतिरेकौ फलपर्यन्तावद्वत्वापि निवर्तमानस्य न किञ्चिद्दुष्येत् । केवलरागप्रयुक्तत्वात् तत्प्रवृत्ते – इति भाव ॥

तदेव चोदकोऽन्वयव्यतिरेकानुष्ठानस्य विधिपरिप्रापितत्वपक्ष एव फलपर्यन्तत्वम् नान्यथेत्यतो निर्णेतव्योऽय सशय इत्याह । न च विधिरस्ति, तदावश्यकता वा इति तु पूर्वपक्षिणो हृदयम् । अत्र सिद्धान्ती प्राह – 'विधिपरिप्रापित इति ब्रूमः' इति । ननु प्रतिज्ञामात्रमिदम् इत्याशङ्क्य विध्युदाहरणार्थत्वेन श्लोकमवतारयति – 'यत आह' इति ॥

शमादिसाधन इति ॥ शमदमोपरतितितिक्षाश्रद्धासमाधानयुक्त, आत्मान परमात्मानन्द आत्मनि स्वे प्रत्यगात्मनि पश्येत् । 'तस्मादेव विच्छान्तो दान्त उपरतस्तितिक्षु समाहितो भूत्वाऽऽत्मन्येवात्मान पश्यति' (बृ ४–४–२३) इति हि श्रुतौ शमादिमध्ये उपरतिशब्दवाच्य संन्यासो विद्याङ्गत्वेन विहितोऽस्ति । यद्यप्यत्र 'पश्यति' इति वर्तमानापदेश एवोप लभ्यते, तथापि 'तस्मात्' इति प्रकृतप्रशसापरिग्रहात् विधित्व प्रतीयते । 'पश्येत्' इति च (बृ मा ४–२–२८) माध्यन्दिना विस्पष्टमधीयते इत्यभि प्राय । यद्यपि च 'पश्येत्' इति विधिविभक्तिर्दर्शनसंबन्धिनी शब्दत, तथापि आत्मदर्शनस्याविधेयत्वात् तत्साधनमेवात्र विधीयत इत्यध्यवसायते 'यत्पश्येत् तच्छमादियुक्तो भूत्वेति' । यथोक्त बृहद्वार्तिके 'अतोऽपुरुषतन्त्र त्वादात्मज्ञाने विधिर्भवेत् । अन्वयादिक्रिया त्वस्य तत्तन्त्रत्वाद्विधीयते ॥ श्रवण मनन तद्वत्तथा शमदमादि यत् । पुमान्शक्नोति तत्कर्तुं तस्मादे तद्विधीयते ॥' (बृ वा २–४–१२१, १२२) इति ॥

अत्रेदमनुसन्धेयम् । सूत्रभाष्ये समन्वयसूत्रव्याख्यानप्रसङ्गेन "किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्य श्रोतव्य' इत्यादीनि विधिच्छायानि वचनानि?" (सू १ १ ४) इति छायाशब्दोपादानात् श्रवणादीना विधेयत्व मसंमत भाष्यकाराणामिति प्रतीयते । तथा च केचिद् व्याख्यातारो वदन्ति 'अन्यत प्राप्ता एव हि श्रवणादयो विधिसरूपैर्वाक्यैरनूद्यन्ते । न चानु वादोऽप्यप्रयोजन । प्रवृत्तिविशेषकरत्वात् ।' (वा भा १–१ ४, पा १३०)

इति, 'मननिदिध्यासनयोरपि न विधिः। तयोरन्वयव्यतिरेकसिद्धसाक्षात्कारफलयोर्विधिसरूपैर्वचनैरनुवादात्' (वा.मा. १-१-४, पा. १५३) इति च। अन्ये [redacted] भाष्यव्याख्यातारो मन्यन्ते 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.) इत्यमृतत्वसाधनम् आत्मदर्शनमनूद्य मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं नामाङ्गि विधीयते। एष एव च वेदान्तवाक्यविचारं विदधद् विधिः' (पं. वि. पा. १०४, १६८) इति। अत्र वार्तिककारेण तु 'तस्मादेतद् विधीयते' इति कण्ठरवेणैवोक्तम्। तत्र कथमेकवाक्यता? – इति भवति जिज्ञासूनां विशयः॥

अत्रेत्थं नः प्रतिभाति। भाष्ये तावत् प्रतिपत्तिविधिविषयतयैव ब्रह्म समर्प्यते यूपाहवनीयाद्यलौकिकपदार्थवत् – इति वृत्तिकारमतनिराकरणप्रसङ्गेन ब्रह्मवस्तुज्ञानलक्षणा तावत् प्रतिपत्तिर्न विधेया वस्तुतन्त्रत्वादित्युक्त्वा 'किमर्थानि तर्हि' इतीयं शङ्का समुद्भाविता। तेन दर्शनलक्षणेन ज्ञानेन सह समभिहारात् श्रवणादिज्ञानान्यपि न विधेयानि इत्येतावदुक्तम्। स्थानान्तरे तु "द्रष्टव्यादिशब्दा अपि परविद्याधिकारपठिताः तत्त्वाभिमुखीकरणप्रधानाः, न तत्त्वावबोधविधिप्रधाना भवन्ति" इति वस्तुतन्त्रज्ञानविधिं निरस्य तच्छेषेण "लोकेऽपि 'इदं पश्य', 'इदमाकर्णय', इति चैवंजातीयकेषु निर्देशेषु 'प्रणिधानमात्रं कुरु' इत्युच्यते न 'साक्षाज्ज्ञानमेव कुरु' – इति" (सू. भा. ३-२-२१, पा. ३६२)। एवमनयोर्भाष्यवचनव्यक्त्योरर्थसमालोचनेन अयमत्र भगवतो अभिप्राय इत्यवसीयते, यत् ज्ञानस्याविधानेऽपि श्रवणादिविधानवाचोयुक्त्या वस्तुनि प्रणिधानं विधीयत एवेति। तथा हि "प्रत्ययावृत्तिः कर्तव्या। कुतः? असकृदुपदेशात्। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्येवंजातीयको हि असकृदुपदेशः प्रत्ययावृत्तिं सूचयति" (सू. भा. ४-१-१) इत्यत्रेदमाभाष्यं भवति। इत्थं [redacted] श्रवणादिविधियुक्तिस्तावद् भाष्यकृतो न भाष्यविरुद्धा। यत्तु व्याख्यातॄणां वचनम् 'अमृतत्वसाधनम् आत्मदर्शनम्' इति, तत्सन्दिग्धम्। न हि लोके यद् यथा भातम्, तत्तथैवातीन्द्रियेऽपि वेदान्तार्थेऽपि इति नियन्तुं शक्यते। तस्मात् हि सम्बन्धोऽयं भाष्यकृतैव विधिपक्षे विशेषः

शमादिसाधनः पश्येदात्मन्यात्मानमञ्जसा ।
अन्वयव्यतिरेकाभ्यां त्यक्त्वा युष्मदशेषतः ॥ ४ ॥

युष्मदर्थे परित्यक्ते पूर्वोक्तैर्हेतुभिः श्रुतिः ।
वीक्षापन्नस्य कोऽस्मीति तत्त्वमित्याह सौहृदात् ॥ ५ ॥

( क्लेशापहारिणी )

अत्रान्तरे वाक्यादवाक्यार्थप्रतिपत्तिः किं विशिष्टाधिकारिता, आहोस्वित् यदृच्छातो यस्य कस्यचिदपि भवति इति वादिविप्रतिपत्तेः संशयमुत्थाप्य विधिपक्षं स्वीकर्तुमाह – 'अस्मिन्' इति ॥ अयमत्र संबन्धः – 'मुक्ते क्रियाभिः सिद्धत्वात्' (१–९), 'कर्मणोऽङ्गाङ्गिभावेन स्वप्रधानतयाऽथवा । सबन्धस्येह संसिद्धे' (१–२०) केवलेन कर्मणा, ज्ञानसमुच्चितेन वा तेन, मुक्तिः स्यात् इति पूर्वपक्षम् उपन्यस्य तदुपस्थापितयुक्तिवाक्याभासनिरसनपूर्वकं सकलसंसारनिमित्ताज्ञानापनोदनहेतुत्वं तत्त्वमस्यादिवचस एवेति प्रथमाध्याये निरूपितम् । 'नाविरक्तस्य संसारान्निविवृत्सा ततो भवेत्' (२–६) इत्यारभ्य, 'न विना गुरुसंबन्धं वाक्यस्य श्रवणं भवेत् । तथा पदपदार्थौ च न स्तो वाक्यमृते क्वचित् । अन्वयव्यतिरेकौ च तावृते स्तां किमाश्रयौ । अन्वयव्यतिरेकाभ्यां विना वाक्यार्थबोधनम् । न स्यात्तेन विना ध्वस्तो नाज्ञानस्योपपद्यते ॥' (२–६, ७, ८, ९) इत्यन्तेन श्लोकचतुष्टयेन वाक्यार्थप्रतिपत्तिप्रयोजनः, अन्वयव्यतिरेकलक्षणो न्यायो मननापराभिधानः सर्वकर्मसंन्यासपूर्वक इति च द्वितीयाध्यायेऽभिहितम् । तच्चेदं मननं किं स्वेच्छयैव येनकेनचित् कुतूहलिना ज्ञानार्थिनापि कर्तव्यम्, उत शास्त्रविहितेन प्रकारेण संन्यस्तसर्वकर्मणैव ? – इतीदं निरूपणीयम् इति ॥

ननु पूर्वाध्याये सर्वकर्मसंन्यासं कृतवत एवात्राधिकार इति निर्णीतम् । न । ज्ञानस्याज्ञाननिवर्तनलक्षणदृष्टफलत्वात्, ज्ञानं प्रति च श्रवणमननयोः साधनत्वस्य लोके दृष्टत्वाच्च येनकेनचिदपि श्रवणादिकं कर्तुं शक्यत एवेति नात्र विचारावकाशोऽस्ति इति शङ्कितुराशयः ॥

अत्र मण्डनानुयायी विमर्शप्रयोजनमाक्षिपति – किन्नातः ? इति । अत्र भाव । न वयम् अनेन सदोषेण परिहृतेन प्रयोजनं सभावयाम । उभयथापि वाक्यार्थविचारणे प्रवृत्त्युपपत्ते । अथवा विशिष्टसाधनमन्तरेणापि पदपदार्थान्वयव्यतिरेकयो स्वयंकरणत्वात्, शब्दश्रवणमात्रात् शब्दव्यापारज्ञानवत वाक्यार्थप्रतिपत्त्युपपत्तेश्च न तत्र विचारावश्यकतास्ति । तस्मात्, विदितपदपदार्थस्य वाक्यात् तत्त्वज्ञाने ज्ञातेऽपि दृढायसो मिथ्यादर्शनसंस्कारस्यानुवृत्तेस्तदभिभवाय, तदुच्छेदाय वा तत्त्वदर्शनाभ्यासो विधीयते ‘मन्तव्यो निदिध्यासितव्य’ इति । अथवा तत्रापि विधिर्व्यर्थ एव । दृष्टा हि ज्ञानाभ्यासेन सम्यग्ज्ञानोत्पत्ति, ततश्च मिथ्याज्ञानसंस्कारोच्छित्ति लोके । तस्मात्, न वाक्यमात्राद्वाक्यार्थप्रतिपत्ति, नापि विधिपरिप्रापितौ यथोक्तान्वयव्यतिरेकौ इति वयमुत्पश्याम इति ॥

चोदकस्तु विमर्शप्रयोजनमाह – ‘शृणु’ इत्यादिना । यदि विधिपरिप्रापितोऽयं न्याय इति स्वीक्रियते तदा वाक्यार्थप्रतिपत्त्या आत्मवस्तु साक्षात्करणाय व्यावृत्तशुभाशुभकर्मराशि सन्यस्तसर्वकर्मा सन् एकाग्रमना ध्यानयोगमाश्रित, तद्बलेन लब्धपदार्थज्ञान, अन्वयव्यतिरेकाभ्या यथोक्ताभ्या वाक्यादेवावाक्यार्थप्रतिपत्त्या आत्मदर्शन करोति न [illegible] तदनन्तरमपि वाक्यार्थ ज्ञानाभ्यासादिकमपेक्षते । फलस्यात्मदर्शनस्य प्राप्तत्वात् इत्यर्थ । तदेव विधिपक्षे विविक्तसन्यस्तसर्वकर्मणा आत्मदर्शनफलपर्यन्त श्रवणमनने अनुष्ठातव्ये भवत इति साधनत्वेनान्वयव्यतिरेकन्यायोऽवश्यानुसर्तव्यो भवति । ननु किमिति फलनिष्पत्तिपर्यन्त मननानुष्ठान कर्तव्यम् ? निवृत्तकुतूहल, सम्यक् कर्मानुष्ठाने च प्रेरितो वा किमिति ततो न निवर्ततेति ? अत आह – अपरिसमाप्यात्मदर्शनमिति । तत संन्यासिकर्तव्यात् प्रच्यवमान आरूढ पतितो भवति । प्रत्यवैतीत्यर्थ । ‘तद्भूतस्य तु नातद्भाव’ (ब्र सू. ३–४–४०) इति न्यायात् । न च कर्मानुष्ठानेच्छया निवृत्ति, कर्मणस्त प्रति विहितत्वाभावात् । न च कुतूहलनिवृत्त्या निवृत्ति । स्वाश्रमविहितव्यतिक्रमे दोषमात्त्वप्रसङ्गात् इत्यभिप्राय । अथान्यस्मिन् पक्षे कि स्यादिति ? तत्राह–

'यदि पुनर्यदृच्छातः' इति । तदा अन्वयव्यतिरेकौ फलपर्यन्तावङ्गत्वापि निवर्तमानस्य न किञ्चिद्दुष्येत् । केवलरागप्रयुक्तत्वात् तत्प्रवृत्तेः – इति भाव ॥

तदेव चोदकोऽन्वयव्यतिरेकानुष्ठानस्य विधिपरिप्रापितत्वपक्ष एव फलपर्यन्तत्वम् नान्यथेत्यतो निर्णेतव्योऽय संशय इत्याह । न च विधिरस्ति, तदावश्यकता वा इति तु पूर्वपक्षिणो हृदयम् । अत्र सिद्धान्ती प्राह – '**विधिपरिप्रापित इति ब्रूमः**' इति । ननु प्रतिज्ञामात्रमिदम् इत्याशङ्क्य विध्युदाहरणार्थत्वेन श्लोकमवतारयति – '**यत आह**' इति ॥

**शमादिसाधन इति** ॥ शमदमोपरतितितिक्षाश्रद्धासमाधानयुक्त, आत्मान परमात्मानन्द आत्मनि स्वे प्रत्यगात्मनि पश्येत् । 'तस्मादेव विच्छान्तो दान्त उपरतस्तितिक्षु समाहितो भूत्वाऽऽत्मन्येवात्मान पश्यति' (बृ ४–४–२३) इति हि श्रुतौ शमादिमध्ये उपरतिशब्दवाच्य सन्यासो विद्याङ्गत्वेन विहितोऽस्ति । यद्यप्यत्र 'पश्यति' इति वर्तमानापदेश एवोप लभ्यते, तथापि 'तस्मात्' इति प्रकृतप्रशसापरिग्रहात् विधित्व प्रतीयते । 'पश्येत्' इति च (बृ मा ४–२–२८) माध्यन्दिना विस्पष्टमधीयते इत्यभि प्राय । यद्यपि च 'पश्येत्' इति विधिविभक्तिर्दर्शनसंबन्धिनी शब्दत, तथापि आत्मदर्शनस्याविधेयत्वात् तत्साधनमेवात्र विधीयत इत्यध्यवसीयते 'यत्पश्येत् तच्छमादियुक्तो भूत्वेति' । यथोक्त बृहद्वार्तिके 'अतोऽपुरुषतन्त्र त्वान्नात्मज्ञाने विधिर्भवेत् । अन्वयादिक्रिया त्वस्य तत्तन्त्रत्वाद्विधीयते ॥ श्रवण मनन तद्वत्तथा शमदमादि यत् । पुमाञ्शक्नोति तत्कर्तुं तस्मादे- तद्विधीयते ॥' (बृ वा २–४–१२१, १२२) इति ॥

अत्रेदमनुसन्धेयम् । सूत्रभाष्ये समन्वयसूत्रव्याख्यानप्रसङ्गेन "किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्य श्रोतव्य' इत्यादीनि विधिच्छायानि वचनानि ?" (सू १–१–४) इति छायाशब्दोपादानात् श्रवणादीना विधेयत्व मसंमत भाष्यकाराणामिति प्रतीयते । तथा च केचिद् व्याख्यातारो वदन्ति 'अन्यत प्राप्ता एव हि श्रवणादयो विधिसरूपैर्वाक्यैरनूद्यन्ते । न चानु वादोऽप्यप्रयोजन । प्रवृत्तिविशेषकरत्वात् ।' (वा मा १–१–४, पा. १३०)

इति, 'मननिदिध्यासनयोरपि न विधिः। तयोरन्वयव्यतिरेकसिद्धसाक्षात्कार-फलयोर्विधिसरूपैर्वचनैरनुवादात्' (वा.भा. १-१-४, पा. १५३) इति च। अन्ये तु भाष्यव्याख्यातारो मन्यन्ते 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.) इत्यमृतत्वसाधनम् आत्मदर्शनमनूद्य मनन-निदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सह श्रवणं नामाङ्गि विधीयते। एव एव च वेदान्तवाक्यविचारं विदधद् विधिः' (पं. वि. पा. १०४, १६८) इति। अत्र वार्तिककारेण तु 'तस्मादेतद् विधीयते' इति कण्ठरवेणैवोक्तम्। तत्र कथमैकवाक्यता? — इति भवति जिज्ञासूनां विशयः॥

अत्रेत्थं नः प्रतिभाति। भाष्ये तावत् प्रतिपत्तिविधिविषयतयैव ब्रह्म समर्प्यते यूपाहवनीयाद्यलौकिकपदार्थवत् — इति वृत्तिकारमतनिराकरणप्रसङ्गेन ब्रह्मवस्तुज्ञानलक्षणा तावत् प्रतिपत्तिर्न विधेया वस्तुतन्त्रत्वादित्युक्त्वा 'किमर्थानि तर्हि' इतीयं शङ्का समुद्भाविता। तेन दर्शनलक्षणेन ज्ञानेन सह समभिहारात् श्रावणादिज्ञानान्यपि न विधेयानि इत्येतावदुक्तम्। स्थानान्तरे तु "द्रष्टव्यादिशब्दा अपि परविद्याधिकारपठिताः तत्त्वाभिमुखीकरणप्रधानाः, न तत्त्वावबोधविधिप्रधाना भवन्ति" इति वस्तुतन्त्रज्ञानविधिं निरस्य तच्छेषेण "लोकेऽपि 'इदं पश्य', 'इदमाकर्णय', इति चैवञ्जातीयकेषु निर्देशेषु 'प्रणिधान-मात्रं कुरु' इत्युच्यते न 'साक्षाज्ज्ञानमेव कुरु' — इति" (सू.भा. ३-२-२१, पा. ३६२)। एवमनयोर्भाष्यवचनव्यक्त्योरर्थसमालोचनेन अयमत्र भगवतो भिप्राय इत्यवसीयते, यत् ज्ञानस्याविधानेऽपि श्रवणादिविधानवाचो-युक्त्या वस्तुनि प्रणिधानं विधीयत एवेति। तथा हि "प्रत्ययावृत्तिः कर्तव्या। कुतः? असकृदुपदेशात्। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्येवं-जातीयको हि असकृदुपदेशः प्रत्ययावृत्तिं सूचयति" (सू. भा. ४-१-१) इत्यनेनैकार्थ्यं भवति। इत्थं च श्रवणादिविधियुक्तिवादः अन्यकृतो न भाष्य-विरुद्धः। यत्तु व्याख्यातॄणां वचनम् 'अन्यतः प्राप्ता एव श्रवणादयः' इति, तदनादेयम्। न हि लोके यद् यथा प्राप्तम्, तत्तथैवातीन्द्रिये वेदान्तार्थेऽपि इति नियन्तुं शक्यते। उक्तो हि सम्बन्धोक्तौ अन्यकृतैव विधिपक्षे विशेषः

अनन्यप्राप्त – 'अपरिसमाप्यात्मदर्शन तत प्रच्यवमान आरूढपतितो भवति' इति । एतदपि भाष्यकाराभिप्रायानुगुणम्, परिव्राजकधर्ममनूद्य हि प्राह भाष्यकृत् 'शमदमादिस्तु तदीयो धर्मो ब्रह्मसंस्थताया उपोद्बलको न विरोधी । ब्रह्मनिष्ठत्वमेव तस्य शमदमाद्युपबृंहित स्वाश्रमविहित कर्म, यज्ञादीनि चेतरेषाम् । तद्व्यतिक्रमे च तस्य प्रत्यवाय ' (सू भा. ३ ४-२०) इति । तस्मात्, विधिपक्ष एवात्र ज्यायान् । यत् पुनर्व्याख्यात्रन्तरमतम् – श्रवणविधिर्वेदान्तवाक्यविचारे प्रवर्तक इति । न तत्र मान पश्याम । न हि 'आत्मा वा अरे द्रष्टव्य श्रोतव्य ' इतीद वेदान्तवाक्यविचारस्य कर्तव्यकर्मता प्रकृत्य प्रवृत्तम्, किं तर्हि, अमृतत्वसाधनम् आत्मदर्शनमेव, नान्यदिति वक्तुम् । तस्मात् 'पश्येत्' इति श्रवणवन्मननमपि दर्शनार्थं विधिपरिप्रापितमेव, श्रुत्युक्तन्यायमनुसृत्य कर्तव्यमेव तत् । तेन टि अन्वयव्यतिरेकलक्षणेन युष्मदर्थे सर्वोऽपि परित्यक्तो भवतीत्याह – 'अन्वयव्यतिरेकाभ्याम्' इत्यादि ॥ ४ ॥

अथ वाक्यवृत्त्य विविच्य वक्तु प्रारभते – युष्मदर्थ इति ॥ युष्मदर्थे अहमादिदेहपर्यन्ते पूर्वोक्तै अतीतानन्तराध्यायोक्तैर्हेतुभि अनात्म तया परित्यक्ते सति वीक्षापन्नस्य अनिर्धारितस्वात्मतत्त्व जिज्ञासमानस्य 'को नु खल्वहम् ?' इति वितर्कयत श्रुति सौहृदात् स्वयमेव सुहृद्भूत्वा तदज्ञान निरासाय 'तत् त्वम्' तदद्वितीयपरमानन्दरूपस्त्वमसीत्याह इत्यर्थ ॥ ५ ॥

## ४. वाक्यनिरसनीयाज्ञानस्वरूपम्

(मूलम्)

अत्रापि चोदयन्ति साङ्ख्याः, शरीरेन्द्रियमनोबुद्धिषु अनात्मसु आत्मेति निरमन्धिबन्धनं मिथ्याज्ञानम् अज्ञानम् । तन्निबन्धनो हि आत्मनो अनेकानर्थसंबन्धः । तस्य च अन्वय-व्यतिरेकाभ्यामेव निरस्तत्वात्, निर्विषयं तत्त्वमस्यादिवाक्यं

प्राप्तम् । तस्माद् वाक्यस्य चैष महिमा योऽयमात्मानात्मनो-
र्विभाग इति । तन्निराकरणायेदम् उच्यते –

भेदसंविदिदंज्ञानं भेदाभावश्च साक्षिणि ।
कार्यमेतदविद्याया आत्मना त्याजयेद् वचः ॥ ६ ॥

( क्लेशापहारिणी )

तत्त्वमसीति वाक्येनाऽऽनर्थकारणम् अज्ञानं निरसनीयम्–इति स्थितम् अतीते ग्रन्थे । तस्यास्याज्ञानस्य स्वरूपं निर्दिधारयिषुः साङ्ख्यचोद्यम् उत्थापयति – अत्रापीति । शरीरादिष्वनात्मसु आत्मबुद्धिरूपं निःसन्धि बन्धनम् – निरूढनिबिडं मिथ्याज्ञानमेवाज्ञानम् । न तु तादृशमिथ्याज्ञानव्यतिरिक्तमज्ञानं नामास्तीति भावः । तन्निबन्धनो हि अनात्मन्यात्मत्वबुद्धिलक्षणाभूताभिनिवेशनिमित्तो हि यस्मात् आत्मनः, असङ्गस्य अनेकानर्थसम्बन्धः, जननमरणादिसंसारसम्बन्धः । तस्य च मिथ्याज्ञानस्य अन्वयव्यतिरेकाभ्यामेव साक्ष्यन्वयसाक्ष्यव्यतिरेकरूपाभ्यां निरस्तत्वात् निर्विषयं तत्त्वमस्यादिवाक्यं प्राप्तम् – न हि तेन निरसनीयम् अन्यदस्त्यज्ञानमवशिष्टं यदर्थमतृतीयः अध्यायः प्रारभ्येत । किं तर्हि वाक्यकृत्यमिति ? तत्राहुः साङ्ख्यानुयायिनः – 'तस्मात्' इति । योऽयमात्मानात्मनोर्विभागः विवेकः, तदविवेकनिरासहेतुः, [illegible] एष वाक्यस्य महिमा । विवेक एव वाक्यकृत्यं नान्यदत्रावशिष्यत इति भावः । तदेव साङ्ख्यचोदनमुद्घाट्य तदपाकरणार्थम् उत्तरश्लोक इत्याह –तन्निराकरणायेत्यादि ॥

भेदसंविदिति ॥ इदंज्ञानम् अनात्मज्ञानम् भेदसंवित् क्रियाकारकफलभेदज्ञानम् इत्यर्थः । यदिदं भेदसंविद्रूपं ज्ञानम्, यश्च साक्षिणि भेदाभावलक्षणो धर्मः, तदेतदविद्यायाः कार्यम् । न हि वस्तुवृत्तेनैव भेदसंविद्विषयभूतम् अनात्मवस्तु । तत्साक्षित्वं चात्मनि कूटस्थरूपे नित्यदा स्थितम् । 'आत्मैवेदं सर्वम्'(छा ७–२५–२) इत्यादिश्रुतिविरोधात् तादृशविभागस्य । तस्मात्, इदमनिदंविभागोऽयं निर्विभागे आत्मनि अविद्याकृत एवेत्यभ्युपगन्तव्यम् । 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' (बृ ४–५–

१५) इत्यादिश्रुते – इति भाव । तदेतदविद्याकार्यं केन निवर्त्यते ? तत्रोत्तर तदेतद्विभाग वच तत्त्वमस्यादिवाक्य आत्मना अद्वितीयचैतन्यमात्र लक्षणस्वस्वरूपावबोधनेन त्याजयेत् इत्यर्थ । इदमुक्त भवति, अनात्माय भेदरूप, आत्मा तु तत्साक्षित्वाद् भेदरहित – इति योऽयमात्मानात्मनो विभागोऽन्वयव्यतिरेकाभ्याम्, सोऽप्यविद्याभूमावेव । उक्त हि पूर्वाध्याये 'सर्वं एवायम् आत्मानात्मविभाग, प्रत्यक्षादिप्रमाणवर्त्मन्यनुपतितोऽविद्योत्सङ्गवर्त्यैव न परमात्मन्यपाश्रय '(२–१०३) इति । तदेतदविद्याकार्यं तत्त्वमस्यादिवाक्यजन्यज्ञानेन निवर्त्यते । अतो नात्मानात्मविभागो वाक्यस्य कृत्यम्, न च निर्विषयत्वमेव वाक्यस्येति ॥ ६ ॥

( मूलम् )

'आत्मना त्याजयेद्वचः' इत्युपश्रुत्य आह कश्चित् । मिथ्याज्ञानव्यतिरेकेण आत्मानवबोधस्याभावात् किं वाक्येन निवर्त्यते ? अज्ञानं हि नाम ज्ञानाभावः ; तस्य च अवस्तुस्वाभाव्यात् कुतः समारकारणत्वम् ? न हि असतः सज्जन्मेष्यते । 'कुतस्तु खलु सोम्येव स्यादिति कथमसतः सज्जायेत' (छा ६–२–२) इति श्रुतेरिति । अत्रोच्यते –

अज्ञात एव सर्वोऽर्थः प्राग्यतो बुद्धिजन्मनः ।
एकेनैव सता सर्वं सज्ञातो भवेत्ततः ॥ ७ ॥

( क्लेशापहारिणी )

अद्वितीयचैतन्याज्ञानकार्यं द्वैतम् – इत्यत्र मीमांसकानुयायी शब्दान्तरमानयतीत्याह – 'आत्मना' इति । 'मिथ्याज्ञानव्यतिरेकेण आत्मानवबोधस्याभावात्' इति । मिथ्याज्ञानमेव हि दुष्टकारणजन्य मानेन निवर्त्यम् । अज्ञान तु अभावरूपत्वात् तत्कृति किं वाक्येन निवर्त्यताम् ? न किमपि निवर्त्यमस्तीति भाव । अथवा मिथ्याज्ञानव्यतिरिक्ताज्ञानाम् अभ्युपगच्छता वाक्यस्य निर्विषयत्वमेवाभ्युपगत भवतीति भाव । न चाभ्यासास

द्वैतानर्थकारणत्वं घटत इत्याह – 'अज्ञानं हि' इत्यादि। ज्ञानाभावस्य वस्तुत्वं नास्तीति न तस्य कारणत्वं कुत्रचिदित्यर्थः। तदुक्तं भट्टपादैः – 'अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः। वस्तुत्वाद् द्विविधस्तत्र संभवो दुष्टकारणात्॥' (श्लो॰ वा॰ २–५४, ॥ ४६) इति। तस्माद् वस्तुत्वान्मिथ्याज्ञानस्य संसारकारणत्वमभ्युपगम्येतापि, न त्वेवाज्ञानस्य तथात्वमित्यभिप्रायः। तत्र युक्तिमाह – न ह्यसतः सज्जन्मेष्यते इति। असतः सद्भावे सतश्च असद्भावे नैव सदसद्विवेकः स्यादिति न कुत्रापि व्यवहारे विश्वासः स्यादित्यभिप्रायः। श्रुतिरप्येतदनुवदतीत्याह – कुतस्त्विति। असतः सज्जायेतेति कुतो भवेत्? न कुतश्चित् प्रमाणादेव सम्भवति। कथं केन प्रकारेण इदं समाप्येत? न ह्यत्र कश्चिद् दृष्टान्तोऽस्ति – इति श्रुतेरभिप्रायः॥

सिद्धान्ती चोद्यस्य परिहारत्वेन श्लोकमवतारयति – अत्रेति॥ अज्ञात एवेति॥ अज्ञानस्य च प्रमित्यनुत्पत्तिरूपत्वात्, तदुत्पत्त्या बाध्यत्वोपपत्तिः। न चाज्ञानं त्रिधा मिथ्याज्ञानं संशयज्ञानं वा समुपजायते, येन तदतिरेकेण मिथ्याज्ञानमेवाज्ञानमित्याग्रहः स्यात्। न चाज्ञानबाधे सति मिथ्याज्ञानादिकम् अबाधितमवशिष्यते। मिथ्याज्ञानादिकं हि तदनुगमाज्ञानबाधेनैव बाध्यत इति तस्याप्यज्ञानमेव तत्त्वमित्यवगम्यते। न चाज्ञानं न वस्तु, मिथ्याज्ञानं वस्तु – इति वाचोयुक्तिसमाश्रयणं युक्तं महताम्। वस्तुनो ज्ञानबाध्यत्वाभावादिति। तदेतत् सर्वमनुसंधायोक्तम् – 'अज्ञात एव सर्वोऽर्थः प्राग्यतो बुद्धिजन्मनः' इति। उक्तं च बृहद्वार्तिके – 'मित्युत्पत्त्यावनुत्पत्तिनिरोधाद् बाध्यते यतः। तद्बाधे नाप्यपक्षाऽस्ति मिथ्याधीबाधनं प्रति॥ मिथ्याधियोऽपि बाध्यत्वमज्ञानैकसमन्वयात्। मूलध्वस्तौ हतं तच्चेन्मिथ्याधीः किं करोति नः॥ अज्ञानं संशयत्वाच्चो मिथ्याज्ञानात्त्वथैव च। तयोस्तत्त्वविवक्षायामज्ञानं तत्त्वमुच्यते'॥ (बृ॰ वा॰ १–४–४३७, ४३८, ४४०) इति, 'किं भो सदपि मानेन वस्तु साक्षान्निरस्यते। वस्तुनिरस्ते किंशेषं यस्मिन् मानस्य मानता'॥ (बृ॰ १–४–४२३) तस्मान्मिथ्याज्ञानव्यतिरेकेण नाज्ञानं नाम वस्त्वस्ति ज्ञाननिवर्त्यमिति वचनं साहसमात्रमिति भावः॥

यत् पुनरुक्तम्–अज्ञानं नाम ज्ञानाभावः तस्य चावस्तुत्वात् कुतस्तस्य संसारकारणत्वमिति ? तत्राह – एकेनैवेति । अयमाशयः – सर्वो हि पदार्थः, न केवलमज्ञातः, किं तु सन्, 'घटः सन्, पटः सन्' इति सत्सामानाधिकरण्येनैव ज्ञायमानत्वात् । न च घटादिषु सत्ता भिन्नभिन्ना प्रत्यभिज्ञायते । घटादिबुद्धिषु वस्तुतत्त्वनिरूपणेन बाध्यमानासु 'नायं घटः, किं तु मृदेवैषा' इति तत्तत्कारणरूपेण निर्धारणे निश्चयबुद्धिषु जायमानासु च सद्बुद्धिर्न कदापि व्यभिचरति 'सन् घटः' इत्यत्रेव 'सती मृत्' इत्यत्रापि सत्सामानाधिकरण्यस्यैवानुवृत्तेः । न च घटादिकार्यसत्तातो मृदादिकारणसत्ता भिन्नेति विज्ञायते । तदेवं सर्वत्राप्यज्ञातत्वं सत्त्वं चेति स्थिते सर्वोऽपि पदार्थ एकेनैव सता सन् इति निश्चीयते । अस्त्वेतदपि ततः किमिति ? तत्राह – 'सत्यज्ञातो भवेत्ततः' इति । अज्ञातत्वं सत्सामानाधिकरण्यम् अविमुञ्चत् सत एव धर्मो न तु घटादीनां मिथ्याज्ञातानामित्यवगम्यते इत्यर्थः । एवं च अज्ञानस्याभावात्मकस्य कथं कारणत्वम् ? – इत्याक्षेपः परिहृतो भवति । अज्ञातसत एव कारणत्वाभ्युपगमात् । यत् पुनरुक्तमज्ञानस्यैव वस्तुस्वभावत्वम्, तन्मिथ्याज्ञानस्यापि समानम् । न हि ज्ञानबाध्यस्य क्वचिदपि वस्तुत्वं संगच्छते – इति परिहृतम् । अपि च यथैव मिथ्याज्ञानादिकं प्रतीतरूपेणावस्त्वपि कारणभूतसदात्मना वस्त्वेव भवति, तथैवाज्ञानस्यापि वस्तुत्वम् अशक्यवारणम् – इति ध्येयम् । तदेवं 'सत्यज्ञातो भवेत्' इत्यनया वाचोयुक्त्या सर्वाक्षेपपरिहारः कृतो वेदितव्यः । उक्तं हि बृहद्वार्तिके 'मिथ्याज्ञानं कथं वस्तु न हि मिथ्येति वस्तुसत् । मिथ्या चेद्वस्तु चेद्युक्तिमद्वतामेव शोभते ॥ (बृ वा १–४–४२३), 'अवस्त्वपि च वस्त्वेव वस्तुरूपात्तदन्यतः' (बृ वा १–४–४२८), 'मिथ्याज्ञानस्य वस्तुत्वं येनैव स्यात् सदात्मना । अज्ञानस्यापि तेनैव सत्यत्वं चेन कार्यते ॥' (बृ वा १–४ ४४२), 'स्वतस्तु सत्यता सा नास्त्युभयोरपि विद्यते । अविचारितसिद्धत्वाच्च स्वतः परतोऽपि ते ॥' (बृ वा १–४–४४४) इति च ॥

केचित्तु अत्र अनाद्यमदणव्यतिरेकेण भावरूपा अनाद्यविद्या न विद्यते – इति शङ्काभिप्रायं कल्पयित्वा तदुत्तरत्वेन श्लोकमवतारयन्ति । तत्तु

ग्रन्थाक्षरबाह्यमित्युपेक्ष्यम् । न हि चोद्यग्रन्थे 'मिथ्याज्ञानव्यतिरेकेण आत्मानवबोधस्याभावात्' इति, 'अज्ञानं नाम ज्ञानाभाव.' इति च विस्पष्टोक्तिः, अग्रहणव्यतिरिक्तभावाविद्याक्षेपार्था इति वक्तुं पार्यते केनापि सचेतसा ग्रन्थाक्षराण्यनुसरता । न च 'अज्ञात एव सर्वोऽर्थ.' इत्यादिश्लोकाक्षराणि भावाविद्यापरत्वं श्लोकस्य मन्यमानस्य अनुकूलानीति सङ्गच्छते । अज्ञानस्याभावत्वेऽपि अज्ञातसत एव संसारोत्पत्तिविवक्षायाम् इत्येवंपरतया तु सुव्याख्यानः श्लोक, तथैव च व्याख्यातमस्माभिरिति । ननु बृहद्वार्तिकेऽपि 'अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् । अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते ॥' (बृ. १–४–३७१) इत्यज्ञानस्य द्वैतोपादानकारणत्वं स्पष्टमुक्तम् । अत. द्वैतस्योपादानापेक्षस्य अभावेतरत्कारणत्वमेव ग्रन्थकृदभीष्टमिति प्रतीयते । नैवम्, द्वैतस्य इन्द्रजालसदृशत्वोक्त्या मिथ्याध्यासत्वमेवोक्तमिति । अध्यासस्यावस्तुत्वात् उपादानादिकारणापेक्षा नैवास्ति । न च ग्रन्थकृता क्वचिदप्यध्यासोपादानत्वेन अज्ञानं समुपन्यस्तम्, प्रत्युताधस्तादस्माभिरुपपादितनीत्या मिथ्याज्ञानसंशयौ प्रत्यभावरूपाज्ञानस्यैव कारणत्वमत्राप्युक्तमिति गम्यते । तेन च अज्ञानं समुपाश्रित्य ब्रह्मैव कारणम् इति अज्ञातब्रह्मण एव कारणत्वं प्रकृतश्लोकाक्षरानुगुणमेवोच्यते इत्यनवद्यम् । न हि भावाविद्यावादिभिरभ्युपगता अविद्या अध्यासोपादानमिति कुत्रापि वार्तिके कण्ठरवेणोक्तम् येन तत्परत्वेन वार्तिकश्लोको व्याख्यायेत । न चास्मिन् प्रकृतश्लोकेऽपि भावाविद्यापरामर्शः । यत् पुन. प्रकृतश्लोकव्याख्यानम् 'सुषुप्तिदशायामेकेनैव सता सर्वस्य सत्त्वम्' इति, यदप्यस्यैव जाग्रद्दशायामपि सर्वोऽप्यर्थ. स्वबुद्धिजन्मन प्रागज्ञात इत्यर्थस्य संप्रतिपन्नत्वात्, तस्य सामान्याकारे ज्ञातत्वेऽप्यज्ञाताकारस्य ज्ञातत्वायोगात्, अज्ञाताकारस्य चानुवादायोगात् 'ज्ञानाभावविलक्षणभावरूपाज्ञानेनावृत' इति, तदुभयं श्लोकानुपात्ताधिकावापदुष्टमित्यनादेयम् । ननु चाभावस्याज्ञानस्यावरणत्वाभावेन भावाज्ञानेनावृत इति व्याख्यातमिति चेन् वस्तुतत्त्वप्रकाशत्वाभावमात्रेणापि तथा व्यपदेशोपपत्ते । तथा हि गीताभाष्यम् – 'तामसो हि प्रत्यय. आवरणात्मकत्वात् अविद्या, विपरीत-

ग्राहक, सशयोपस्थापको वा, अग्रहणात्मको वा । विवेकप्रकाशभावे तदभावात् । तामसे चावरणात्मके तिमिरादिदोषे सति, अग्रहणादेरविद्या त्रयस्योपलब्धे ' इति । तदेव यथाश्रुतमेव व्याख्यात मूल वरमित्यलमति प्रपञ्चेन ॥ ७ ॥

अज्ञातसत ससारोत्पत्तिरित्युक्तमधस्तात् । अथेदानीं तस्यास्य सत स्वरूपनिर्दिधारयिषया प्रश्नान्तरापाकरणार्थं श्लोकारम्भ । तदाह–'सन्नज्ञात' इति ॥

**प्रमित्सायामिति** ॥ प्रमेयपरिच्छित्ति प्रति प्रमाणव्यापारेच्छा प्रमित्सा । तस्या प्रमित्साया सत्या प्रमातृप्रमाणयो स्वमहिम्ना स्वयप्रकाशसविद्रूपेण य सिद्ध, न तु प्रमातृप्रमाणव्यापारमपेक्षते स्वसिद्धौ, तत्प्रसादादेव प्रमात्रादेरपि सिद्धे, स एवाज्ञातार्थो 'सन्नज्ञात ' इत्युक्तोऽस्माभि इत्यवसीयता निश्चीयताम् इत्यर्थ । प्रमित्युत्पत्ते प्राक् तन्मात्रव्याप्तेरज्ञानस्य, तज्ज्ञाने सति तद्दृष्ट्या प्रमात्रादेरप्यभावाच्च इति भाव । यथोक्त बृहद्वार्तिके–" न हि संविदनारूढ प्रमात्रादि प्रसिध्यति । संविन्मात्रैकयाथात्म्यात् प्रमात्रादेरनात्मन " (बृ वा १–४–२८२) इति । " एष एवानवगत स्वतोऽवगततत्त्वक । एतावन्मात्रसंव्याप्तेरज्ञानादे पुरा मिते ॥ " (बृ वा १–४–२९३) इति च । केचित्तु भवत्वेवम्भूत भावाज्ञानम्, तस्य कथ प्रतीति '– इति प्रश्नोत्तरत्वेन श्लोकमवतारयाबभूवु । न तदुपादेयम् । अज्ञानसतत्त्वस्याप्रकृतत्वात्, अज्ञानस्य चैतन्याश्रितत्वेन सिद्धे संबन्धग्रन्थाक्षरानारूढत्वात्, श्लोकाक्षरानारूढत्वाच्चेति यथाव्याख्यातमेवात्र ग्राह्यम् ॥ ८ ॥

## ५. वाक्यादवाक्यार्थप्रतिपत्तिप्रकारः

( मूलम् )

अत्र केचिदाहुः । यत्किञ्चिदिह वाक्यं लौकिकं वैदिकं वा तत् सर्वं संसर्गात्मकमेव वाक्यार्थं गमयति । अतः तत्त्वमस्यादि-

वाक्येभ्यः संसर्गात्मकं 'अहं ब्रह्म' इति विज्ञाय तावन्निदिध्यासीत यावत् अवाक्यार्थात्मकः प्रत्यगात्मविषयोऽवबोधः 'अहं ब्रह्म' इति समभिजायते, तस्मादेव विज्ञानात् कैवल्यम् आप्नोतीति । तन्निराकरणायेदमुच्यते —

सामानाधिकरण्यादेर्घटेतरस्तयोरिव ।
व्यावृत्तेः स्यादवाक्यार्थः साक्षान्नस्तत्त्वमर्थयोः ॥ ९ ॥

( क्लेशापहारिणी )

एवं तावत् तत्त्वमस्यादिवाक्येन निवर्त्यस्याज्ञानस्य स्वरूपं कार्यं च निर्धारितम् । अथ वाक्यज्ञानमात्रात् अवाक्यार्थात्मकं ज्ञानं नोत्पद्यत एव, किं तु तदभ्यासादेव तदुत्पत्तिः — इति मतमुद्भाव्य परिहरति — अत्रेति । केचिदाहुरित्युक्तम् । किमाहुरित्याह — यत्किञ्चिदिहेत्यादि । कुत एतत् ? पदार्थसंसर्गस्यैव वाक्यार्थत्वात् । अस्त्वेवं ततः किमिति ? आह — 'अतः' इत्यादि । निदिध्यासीत, वाक्यार्थज्ञानाभ्यासरूपं ध्यानं कुर्वीत यावत् अवाक्यार्थात्मकोऽवबोधो जायते तस्मादेव विज्ञानात् कैवल्यमाप्नोतीति सबन्धः । 'विज्ञाय प्रज्ञां कुर्वीत' (बृ. ४–४–२१) इति श्रुतेः — इति भावः । यद्यपि वाक्यादहंब्रह्मेति विज्ञानं नोत्पद्यते इति प्रस्थानान्तरीयपक्ष इव वाक्यज्ञानं संसर्गात्मकम् अभ्यस्यतोऽवाक्यार्थात्मकं विज्ञानान्तरमुत्पद्यते— इत्येषोऽपि पक्षः प्रागेव निरस्तः 'सकृत्प्रवृत्त्या मृद्नाति' (१–६७) इत्यत्र, तथापि केन प्रतिपत्तिक्रमेण वाक्यादवाक्यार्थज्ञानं जायत इति प्रदर्शनार्थं पुनरप्यसौ परामृश्यत इत्यदोषः । श्लोकमवतारयति 'तन्निराकरणायेदमुच्यत' इति ॥

सामानाधिकरण्यादेरिति ॥ यदुक्तं — सूत्रश्लोके 'सामानाधिकरण्यं च विशेषणविशेष्यता । लक्ष्यलक्षणसंबन्धः पदार्थप्रत्यगात्मनाम्' (३–३) इति तदेतदिह 'सामानाधिकरण्यादे.' इति परामृश्यते, अवाक्यार्थप्रतिपत्तिक्रमप्रदर्शनार्थम् । एवं च तत्त्वंपदयोः सामानाधिकरण्यात्

पदार्थयोश्च विशेष्यविशेषणभावात्, घटाकाशतदितराकाशयोरिव विरोध परिहारार्थं विरुद्धांशव्यावृत्ते, लक्ष्यलक्षणभावेन आकाशमात्रमिव, अत्रापि तत्त्वमर्थयोर्विरुद्धांशव्यावृत्ते, साक्षात् ज्ञानाभ्यासादिकं विनैव, न अस्माक पक्षे अथास्यार्थे तदात्मनोऽवबोध स्यात् इत्यक्षरयोजना ॥ ९ ॥

(मूलम्)

कुतोऽत्रास्यार्थोऽवसीयते इति चेत्, तत्प्रतिपत्त्यर्थं विशेषण-विशेष्ययोः सामर्थ्योक्तिः –

निर्दुःखित्वं त्वमर्थस्य तदर्थेन विशेषणात् ।
प्रत्यक्ता च तदर्थस्य त्वंपदेनास्य संनिधेः ॥ १० ॥

(क्लेशापहारिणी)

तत्र विशेष्यविशेषणभावात् विरुद्धांशयो कथं व्यावृत्ति ?–इति शङ्का समाधानार्थत्वेन श्लोकमवतारयति – 'कुतः' इति । निर्दुःखित्वमिति ॥ त्वमर्थस्य श्वेतकेतो तदर्थेन तेजोऽवन्नतद्विकारलक्षणजगत्कारणभूतसल्लक्षणा विशेषणात्, निर्दुःखित्व दुःखित्वव्यावृत्तिर्दर्शिता भवति । अस्य तदर्थस्य यथोक्तसल्लक्षणश्च त्वपदेन सनिधे, त्वपदार्थेन प्रत्यगपरोक्षचैतन्येन विशेषणात् प्रत्यक्ता, परात्त्वपारोक्ष्ययोर्व्यावृत्तिश्च दर्शिता भवति – इत्यर्थ । न ह्यन्यथा दुःखित्वनिर्दुःखित्वयो प्रत्यक्त्वपरात्त्वयोर्वा सामानाधिकरण्येन विशेषण विशेष्यभावो घटते । दृष्ट तु तत्त्वपदयोरत्र सामानाधिकरण्येन प्रयोग । तेनावगम्यते न विशिष्टार्थयोरेकत्वमत्र विवक्षितमिति–इति भाव ॥ १० ॥

(मूलम्)

उक्तं सामानाधिकरण्य विशेषणविशेष्यभावश्च सङ्क्षेपतः ।
अथ लक्ष्यलक्षणव्याख्यानायाह –

कूटस्थबोधप्रत्यक्त्वमनिमित्तं सदात्मनः ।
बोद्धृताऽद्वयोर्हेतुस्ताभ्यां तेनोपलक्ष्यते ॥ ११ ॥

( क्लेशापहारिणी )

तदेवं तत्त्वंपदयोः सामानाधिकरण्येन तदर्थयोर्विशेषणविशेष्यभावेन च अनपेक्षिताशब्दव्यावृत्ति प्रदर्शिता । अथ सूत्रसूचितो लक्ष्यलक्षणभावो व्याचिख्यासित उत्तरश्लोकेनेत्याह 'उक्तम्' इति । 'सङ्क्षेपत उक्तम्' इति तु, अस्य विस्तर उत्तरत्रागन्ता – इति ससूचनायेति द्रष्टव्यम् ॥

कूटस्थबोधेति ॥ यथोक्तरीत्या त्वंपदार्थे तु भिन्नस्य व्यावृत्तौ, शिष्टांशेन बोद्धृताहंतारूपेण कूटस्थबोधप्रत्यक्त्वं लक्ष्यते । कथम् ? सदात्मनः सद्रूपात्मवस्तुनः कूटस्थबोधत्वम् अनिमित्तम् अनौपाधिकं स्वाभाविकं सत्, बोद्धृतायाः हेतुः, प्रमातृत्वे हेतुर्भवति । तथा तद्गतं प्रत्यक्त्वमपि अनिमित्तं सत् अहंताया हेतुर्भवति । न ह्यात्मनः कूटस्थबोधरूपस्य स्वतो बोद्धृत्वरूपपरिणामः, सर्वप्रत्यग्रूपस्य चाहंतापत्तिर्वा अन्तःकरणसम्बन्धं विना घटते । न च केवलस्याहङ्कारस्य स्वाभाविककूटस्थबोधप्रत्यग्रूपसद्रूपानुग्रहं विना आपेक्षिकमपि बोद्धृत्वम् अहन्ता वा । तस्मात्, यतः सदात्मनः बोधरूपत्वं प्रत्यक्त्वं च त्वंपदवाच्यस्य श्वेतकेतोर्बोद्धृताहंतयोर्हेतुः, तेन कारणेन ताभ्यां बोद्धृताहंताभ्यां कूटस्थबोधप्रत्यक्त्वम् उपलक्ष्यते । स एष लक्ष्यलक्षणभावो नाम – इत्यभिप्रायः ॥ ११ ॥

( मूलम् )

बुद्धेः कूटस्थबोधप्रत्यक्त्वनिमित्ते बोद्धृताप्रत्यक्त्वे ये त्वसाधारणे, तयोर्विशेषवचनम् –

बोद्धृता कर्तृता बुद्धेः कर्मता स्यादहं तथा ।<br>
तयोरैक्यं यथा बुद्धौ पूर्वयोरेवमात्मनि　　॥ १२ ॥

( क्लेशापहारिणी )

लक्ष्यलक्षणभूतयोर्बोद्धृत्वप्रत्यक्त्वयोः, हेतुहेतुमद्भाव उक्तः । तत्र लक्षणभूतयोर्बोद्धृत्वप्रत्यक्त्वयोरसाधारणं रूपं वक्ष्यामीत्यवतारिकामाह – बुद्धेरिति ॥ आत्मनस्तावत् कूटस्थबोधेन बोद्धृत्वम्, सर्वान्तरत्वेन च

प्रत्यक्त्व निरुपचरितम् । तन्निमित्ते ये बुद्धेर्बोद्धृताप्रत्यक्त्वे, तयोर्बुद्धेरसाधारणयो, विशेषवचनम् उत्तरश्लोके भविष्यतीत्यर्थ ॥

बोद्धृतेति ॥ बुद्धेर्बोद्धृता नाम कर्तृता, स्वविषयाकारेण परिणामि व, स्वगतचिदाभासबलाद् विषयस्फोरण च । तथा अहम् – अहन्तालक्षण प्रत्यक्त्व च कर्मता अहप्रत्ययविषयत्वम् । स चाहप्र यय बुद्धिमाश्रित्यैवात्मान लभत इति यथा तयो बोद्धृत्वाहमो बुद्धौ ऐक्यम् एकस्मिन्नेव धर्मिणि सहभाव, एव पूर्वयोरपि तद्धेतुभूतयो कूटस्थबोधप्रत्यक्त्वयो आत्मनि ऐक्यम् सहभाव – इत्यर्थ ॥ १२ ॥

( मूलम् )

'यथा बुद्धौ पूर्वयोरेवमात्मनि' इत्यतिदेशेन बुद्धिसाधर्म्यविधानात्, नानात्वप्रसक्तौ तदपवादार्थमाह –

धर्मधर्मित्वभेदोऽस्याः सोऽपि नैवात्मनो यतः ।
प्रत्यग्ज्योतिरतोऽभिन्न भेदहेतोरसम्भवात् ॥ १३ ॥

भेदहेत्वसंभवं दर्शयन्नाह –

न कस्याश्चिदवस्थाया बोधप्रत्यक्त्वयोर्भिदा ।
व्यभिचारोऽथवा दृष्टो यथाहंतद्धिदोः सदा ॥ १४ ॥

( क्लेशापहारिणी )

एव तर्हि आत्मगतबोद्धृत्वप्रत्यक्त्वयोरपि धीगतयोरिव नानात्वमित्याशङ्का समनन्तरोत्तरश्लोकेनापोद्यते । तदाह – यथेत्यादि ॥ 'पूर्वयो' इति द्विवचनोपादानात तयो परस्पर नानात्व प्राप्तम्, 'आत्मनि' इत्यधिकरण वाचकशब्दोपादानात् धर्मधर्मिभेद प्राप्त । तत्र द्वितीय तावत् प्रत्याह धर्मधर्मित्वभेदोऽस्या इति ॥ अस्या बुद्धे धर्मधर्मित्वभेदोऽस्ति बुद्धिर्धर्मिणी बोद्धृताहन्ते तु धर्मौ इति, सोऽपि भेद आत्मनो नैव भवति, आत्मा धर्मी बोद्धृताप्रत्यक्त्वे तु धर्मौ इति भेदो न मन्तव्य इत्यभिप्राय । कुत एतत् ? तत्राह – प्रत्यग्ज्योतिः, प्रत्यगात्मचैतन्यम् अत – बोधप्रत्यक्त्वयो

सकाशात् अभिन्नम् अनन्यस्वरूपम् । आत्मैव हि बोधप्रत्यक्त्वे इत्यर्थः । एतदेव कुत ? तत्राह – 'भेदहेतोरसम्भवात्' इति ॥

ननु हेतोरसंभव इति कुतो विज्ञायते, कश्चाय भेदहेतुरिति ? तद्दर्शयितुम् उत्तर श्लोक । तदाह 'भेदहेत्वसंभवमिति' ॥

न कस्याश्चिदिति ॥ अय भाव । धर्माणां धर्मिण सकाशात् भेदो हि धर्म्यन्तरसंक्रान्त्या अवगम्यते । न हिवह आत्मन सकाशादन्यो धर्मी अस्ति यत्र कूटस्थबोध प्रत्यक्त्व वा दृश्यते । तस्माद् बोधप्रत्यक्त्वे न धर्मिण आत्मन सकाशाद्भिन्ने, स्वरूपभूते एव तु तस्य वह्नेरिव दाहृत्व प्रकाशकत्वे । न च बोधप्रत्यक्त्वयो परस्पर भिदा अस्ति । धर्माणां हि भिदा तदा विज्ञायते यदा ते परस्पर व्यभिचरत । न तु तथा कस्याश्चिदवस्थाया बोध प्रत्यक्त्वा व्यभिचरति, कि तु तत्सहचरित एव वर्तते । एव प्रत्यक्त्वमपि न जातुचिदपि बोध व्यभिचरति, अपि तु बोधेन सहैव वर्तते । तदेव बोधप्रत्यक्त्वयोर्धर्मिण पृथग्भावादर्शनात्, परस्पर व्यभिचारादर्शनाच्च न कथचिदपि आत्मनि तयोर्भेद संभवति । ननु कुत्रैव धर्मधर्मिभेदो दृष्ट ? तत्राह – 'यथाहंतद्विदोः सदा' इति ॥ बुद्धिधर्मभूतयोरहतावोद्धृत्वयो परस्परभेदो दृष्ट, यत अहम कर्मता, तद्बोद्धुश्च कर्तृता – इति विषयविषयिरूपयोस्तयोर्भिदा दृष्टा सदैव । एव बोद्धा बुद्धेर्न सदा कर्ता, नापि अहन्तैव सदा तत्कर्म भवति, अहव्यतिरिक्तमनस्वेच्छाप्रयत्नादीना विषयान्तराणा वा तत्कर्मत्वसम्भवात् । अत बोद्धृत्वाहत्वयोर्व्यभिचारोऽपि गम्यते । तस्मात्, बुद्धौ बोद्धृताप्रत्यक्त्वे यथा सह वर्तते, तथा आत्मनि कूटस्थबोद्धृता प्रत्यक्ता च सह वर्तते – इति हेतुहेतुमतोर्विवेकार्थमेव 'एवमात्मनि' (३ १२)इति वचनम्, न तु हेतुभूतयो बोधप्रत्यक्त्वयोरात्मान्यत्व परस्परभेदो वा विवक्षित – इत्यभिप्राय । ये तु बुद्धेरपीह बोद्धृत्वं प्रत्यक्त्व प्रतियोगिनो वोध्याकारनाशाकारयोर्भेदात् भिन्नवद् व्यपदिश्यते – इति व्याचक्षते, ते अन्धकृतैव निरस्ता वेदितव्या । तेषा पक्षे पूर्वश्लोकतत्सबन्धोक्तिविरोधस्य प्रकृतश्लोकस्वदृष्टान्तोपन्यासविरोधस्य च स्फुटत्वात् । अपि च अहप्रत्ययगम्य आत्मेति

मीमासकाः, मानसप्रत्यक्षगम्य आत्मेति चान्ये यदाहुः, तद्बोद्धृत्वाहन्तयो कर्तृकर्मभावमुररीकृत्यैवेति प्रसिद्धम् । तद्युदासेन तत्साक्षी सर्वान्तर आत्मेति सिद्धान्तप्रदर्शनार्थैवेह प्रयत्यते इति स्पष्टम् । अतोऽपि मूलासङ्गतम् एकीय-व्याख्यानमित्यलमतिप्रपञ्चेन ॥ १४ ॥

( मूलम् )

यस्मादज्ञानोपादानाया एव बुद्धेर्भेदो नात्मनः, तस्मात्, एतत् सिद्धम् –

कूटस्थबोधतोऽद्वैतं साक्षात्त्वं प्रत्यगात्मनः ।
कूटस्थबोधाद् बोद्ध्री धीः स्वतो हीयं विनश्वरी ॥ १५ ॥

( क्लेशापहारिणी )

तदेव नित्यनिरस्तसमस्तभेदत्वे सिद्धे, बुद्धिगतबोद्धृताऽहन्तोपलक्षित स्यात्मन, अद्वितीयसाक्षाद्बोद्धृता स्वत सिद्धैव वाक्येन बोध्यत इति फलति । तदेतत् परस्ताद् व्याख्यास्यमानम् । तदर्थ एव च प्रकृतबोद्धृत्वप्रत्यक्त्वविवेक इति संबन्धकथनार्थम् उत्तर श्लोक इत्याह – यस्मादज्ञानोपादानाया एव इति । आत्माज्ञानमात्रोपादानत्वात् बुद्धे, बुद्धिभेदेनाविद्यकेन नात्मनि भेद, स्वतस्तु नास्त्येव भेद इत्युपपादितम् । तस्मादेतत् सिद्ध यच्छ्लोके वक्ष्यते इति शेष ॥

कूटस्थबोधत इति ॥ प्रत्यगात्मन कूटस्थबोधत, बोधैकरूपत्वात्, अद्वैतम् अद्वितीयत्व साक्षात्त्व च सिद्धमित्यर्थ । बोधरूपेणैव तस्य प्रत्यक्ता, सा न ततो भिद्यते इत्युक्तम् । तस्मिंश्च बोधरूपे न द्वैतमनुभूयते, शक्य कल्पन वा । न हि बोध साश येन तत्र कर्तृकर्मता शङ्क्येत, न च बोधो बोधेनैव बुध्यते इति कल्पयितु शक्यते । न च द्वितीय किंचिदस्ति येन सद्वितीयत्व तस्य स्यात् । बुद्ध्यादेर्द्वितीयत्वेन शङ्क्यमानस्याज्ञानमात्रोपादान-त्वात् । तस्मात् अद्वितीयत्व बोधस्य । अत एव च साक्षात्त्व च तस्य बोद्धृत्वस्य, न ह्यस्ति द्वितीय किंचित्, येन तन्मूलक तद्बोद्धृत्वमिति

कल्पयेम । बोधस्य बोधत्वादेव च साक्षात्त्वम् अङ्गीकर्तव्यम् । बोधसंबन्धादेव हि तदन्यत् बुध्यत इति । न च बोधस्य प्रकाशकोऽन्योऽस्ति बोधः शक्यसंभावनः । संभाव्यमानोऽपि हि न द्वितीयबोधप्रकाश्यो बोध इति युक्तम् । न हि प्रदीपौ द्वौ प्रकाशस्वरूपौ सन्तौ परस्परस्योपकुरुत इति । तदेवं प्रत्यगात्मबोधस्य साक्षात्त्वम् अद्वितीयत्वं च तावत् सर्वसंप्रतिपत्त्या सिद्धम् । ननु बुद्धेरप्येवमेव स्यात्, तत्राह — कूटस्थबोधात् इति ॥ कूटस्थबोधानुग्रहायत्तमेव हि तस्या धियो बोद्धृत्वं नाम, यथा वह्न्यनुग्रहादेव दग्धृत्वमयःपिण्डस्य, न स्वतः । स्वतो हि यस्मात् इयं धीर्विनश्वरी, तस्मान्न तस्याः साक्षाद्बोद्धृत्वम् । नाप्यद्वितीयत्वं तद्बोद्धृत्वस्य । अत एव हि तस्यां भेद उपलभ्यते 'अहंतद्धियोः' इत्यवोचाम ॥ १५ ॥

(मूलम्)

अथाधुना प्रकृतस्यैव परिणामिनः कूटस्थस्य च लक्षणमुच्यते—

विशेषं कञ्चिदाश्रित्य यत्स्वरूपं प्रतीयते ।
प्रत्यभिज्ञाप्रमाणेन परिणामी स देहवत् ॥ १६ ॥

सामान्याच्च विशेषाच्च समहिम्नैव यो भवेत् ।
व्युत्थायाप्यविकारी स्यात् कुम्भाकाशादिवत्तु सः ॥ १७ ॥

(क्लेशापहारिणी)

तदेवं परिणामिन्या बुद्धेर्बोद्धृताहन्ताभ्यां कूटस्थबोधप्रत्ययरूपम् अद्वितीयं वस्तूपलक्ष्यते इत्युक्तम् (३–११) । अथेदानीं लक्षणभूतस्य परिणामिनः लक्ष्यस्य कूटस्थस्य च विवेकार्थं किं नाम परिणामित्वम्, किं च कूटस्थत्वम् ? — इति तावत् प्रदर्श्यते तल्लक्षणनिर्देशेन । तदाह — अथाधुनेति ॥

प्रथमं तावत् परिणामिलक्षणमाह — विशेषम् इति ॥ कश्चिद् विशेषमाश्रित्य प्रत्यभिज्ञाप्रमाणेन यत्स्वरूपं प्रतीयते यथा 'योऽहं बाल्ये पितरमन्वभूवम्, स एवाद्य स्थाविरे नप्तारमनुभवामि' इत्यवस्थाविशेष-

माश्रित्य प्रत्यभिज्ञानेन स्वैक्यम्, स देहवत् परिणामीत्यर्थ । एतेन देहस्यावस्थाभेदेऽपि यथैक्यप्रत्यभिज्ञानं परिणामिन, तथा तदनुगतबुद्धे रपीत्युक्त भवति ॥ १६ ॥

अथेदानीं कूटस्थलक्षणमाह–सामान्याचेति ॥ सामान्याच विशेषाच व्युत्थायापि तत्परित्यागेऽपि, तत्प्रत्याख्यानेऽपि इति यावत् । य स्वमहिम्नैव भवेत्, अननुगतोऽव्यावृत्तश्च स्वरूपेणैव योऽवतिष्ठेत, स तु अविकारी कूटस्थ स्यात् । तत्र दृष्टान्त कुम्भाकाशादिवदिति । कुम्भकरकादिष्वनुवृत्तमृत्सामा न्यात्, परस्परव्यावृत्तेभ्य कुम्भादिविशेषेभ्यश्च असंपृक्त, तद्विलक्षणो य आकाश, तद्वदित्यर्थ । आदिशब्देन नानाविधपात्रस्थितप्रतिबिम्बविलक्षण सूर्यादिर्गृह्यते । अथवा कुम्भाकाशवदिति दृष्टान्त एव व्याख्येय । यथा कुम्भाकाश, करकाकाश, गिरिगुहाकाश – इत्यादिना विशेषरूपेण स्थित इव भासमान, सर्वत्र तत्रानुगताकाश इति सामान्यरूपेण विभाव्यमानश्च वस्तुत स्वरूपेणैव तिष्ठति । न हि घटाद्युपाधिना विशेषत्व भजते, तेष्वनुगत सामान्यरूप वा तत्त्वत , घटाकाशादिविशेषरूपप्रत्याख्यानेऽपि न तस्मिन् कश्चिद् रूपान्तरमस्ति । अत सर्वथापि नि सामान्यविशेप एव स्वरूपेणैवावतिष्ठत इति, कूटस्थ एवाकाश । एवमुपाधिवशात् सामान्यविशेषभाव भजमान इव लक्ष्यमाण वस्तुतस्तूपाधिनिरपेक्ष स्वरूपेणैव सदा तिष्ठन् अविकारी कूटस्थ इति ज्ञेय इत्यर्थ ॥ १७ ॥

( मूलम् )

आत्मनो बुद्धेश्च बोधप्रत्यगात्मत्वमभिहितम् । तयोरसाधारण-लक्षणाभिधानार्थमाह –

बुद्धेर्यत् प्रत्यगात्मत्वं तत् स्याद्देहाद्युपाश्रयात् ।
आत्मनस्तु स्वरूपं तन्नभसः सुपिता यथा ॥ १८ ॥
बोद्धृत्वं तद्वदेवास्याः प्रत्ययोत्पत्तिहेतुतः ।
आत्मनस्तु स्वरूपं तत्तिष्ठन्तीव महीभृतः ॥ १९ ॥

( क्लेशापहारिणी )

अथाधुना परिणामिबुद्धे कूटस्थात्मनश्च ये बोद्धृत्वप्रत्यगात्मत्वे हेतुहेतुमद्भावेनोपदिष्टे तयो स्वरूपविवेकप्रदर्शनार्थं श्लोकद्वयम्, तदाह – आत्मनो बुद्धेश्चेति ॥

बुद्धेरिति ॥ बुद्धे प्रत्यगात्मत्व यत् तद् देहाद्युपाश्रयम् । तदपेक्षयैव तस्या प्रत्यक्त्वेन विभाव्यमानत्वात् । न तु निरुपचरितप्रत्यगात्मत्व तस्या – इत्यभिप्राय । आत्मनस्तु तत् प्रत्यगात्मत्व न तद्वदापेक्षिकम्, किं तर्हि यथैव नभस सुषिता स्वरूपमूना तथैव तत् प्रत्यक्त्वमात्मन स्वरूप न ततोऽन्यदित्यर्थ ॥ १८ ॥

एवमेव बोद्धृत्वस्वरूपविवेकोऽपि कर्तव्य इत्याह – बोद्धृत्वमिति ॥ तद्वदेव यथा प्रत्यगात्मत्वम् पराग्भूतदेहाद्यपेक्षम्, एवमेव बोद्धृत्वमपि प्रत्ययोत्पत्तिहेतुत, तदुद्बुद्धिवृत्तिजन्मसापेक्षम् । ता हि बुद्धिवृत्तय आत्मबोधेन व्याप्ता तदाभासाश्च जायन्ते इति बोधशब्दवाच्या भवन्ति, ताभिरेव तु बोद्धृत्वव्यपदेशो बुद्धे । आत्मनस्तु तद् बोद्धृत्व न बुद्धेरिव जनिलक्षणविक्रियाहेतुकम्, किं तर्हि स्वरूपभूतमेव । अत्र दृष्टान्त 'तिष्ठन्तीव महीभृतः' इति । यथा नित्यनिवृत्तगतयोऽपि 'पर्वतास्तिष्ठन्ति' इत्युपचर्यन्ते, न [illegible] तेषा तथाऽवस्थान गतिनिवृत्तिलक्षणविक्रियापेक्षम् अश्वादीनामिव, तद्वदेवेह नित्यबो धस्वरूप एव बोद्धेत्युपचर्यते इत्यर्थ ॥ १९ ॥

( मूलम् )

तयोः कूटस्थपरिणामिनोः आत्मानात्मनोश्च एव सबन्धहेतुः, न पुनर्वास्तवः कश्चिदपि संबन्ध उपपद्यत इत्याह –

सम्यक्संशयमिथ्यात्वैर्धर्मैरेव विभज्यते ।
हानोपादानतामीपा मोहादध्यस्यते दृशौ ॥ २० ॥

कुतः कूटस्थात्मसिद्धिरिति चेत् । यतः –

न हान हानमात्रेण नोदयोऽपीयता यतः ।
तत्सिद्धिः स्यात्तु तद्धीने हानादानविधर्मके ॥ २१ ॥

एवम् –

आगमापायिहेतुभ्यां धृत्वा सम्राननात्मनः ।
ततस्तत्त्वमसीत्येतद्धन्त्यसादि निजं तमः ॥ २२ ॥

( क्लेशापहारिणी )

अथेदानीं लक्ष्यलक्षणभूतयोरात्मबुद्ध्योः संबन्धहेतुम् अज्ञानमनुवदति तस्य वाक्यज्ञाननिवर्त्यत्वप्रदर्शनार्थम् इत्याह – तयोरिति ॥

सम्यगिति ॥ सम्यक्त्वसंशयमिथ्यात्वैः 'सम्यग्ज्ञानम्', 'संशयज्ञानम्', 'मिथ्याज्ञानम्'–इत्येवम् इय धीरेव विभज्यते न स्वात्मस्वरूपभूतं ज्ञानम् । तस्यावगतिमात्रत्वेन सर्वत्राप्येकरूपेणैवावस्थितत्वात् इत्याशयः । कथं तर्हि संशयमिथ्याज्ञानयोर्हातव्यत्वं सम्यग्ज्ञानस्य चोपादेयत्वं लोके, 'छिद्यन्ते सर्वसंशयाः' (मु), 'तत्र को मोहः कः शोकः' (ई), 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छा) – इत्यादिश्रुत्युपदेशश्च ? तत्राह – हानोपादानतेति ॥ अमीषां सम्यक्त्वादीनां प्रत्ययगतानां हानोपादानता दृष्टौ कूटस्थचैतन्ये अध्यस्यते । अतः परमार्थतो न तु संशयमिथ्यात्वे हातव्ये न च सम्यक्त्वमुपादेयं कूटस्थचैतन्यलक्षणे आत्मबोधे । व्यवहारदृष्ट्यैव तु तथा व्यपदेशः, श्रुत्युपदेशाश्च इत्यभिप्रायः । उपदिष्टं हि भगवत्पादैः 'सम्यक्संशयमिथ्योक्ताः प्रत्यया व्यभिचारिणः । एकैवावगतिस्तेषु भेदस्तु प्रत्ययार्पितः ॥' (उप. १८–११८) इति ॥ २० ॥

'मोहादध्यस्यते' इति कथमवगम्यते, आत्मन एव ते हानोपादानते इति कुतो न स्यात् ? – इत्याशङ्क्य तत्परिहारार्थत्वेन श्लोकमवतारयति 'कुतः ?' – इति ॥ आत्मनः कूटस्थतासिद्धिः कुतः ? इति प्रश्नः ॥

न हानमिति ॥ संशयमिथ्याधियोर्हानमात्रेण न हानं स्यात् आत्मचैतन्यस्य । नापि सम्यग्धीरुदिता इतीयता आत्मनोऽपि उदयः स्यात् । यतः तद्धीने हानोदयहीने हानादानविधर्मके आत्मचैतन्ये सत्येव तत्सिद्धिः स्यात् नैवान्यथा । हानम् उदयो वा धात्विक्रयोस्तयोः साक्षिचैतन्ये कूटस्थरूपे

स्थिते एव हि सिद्धिः स्यात् । न हि स्वयमुदयास्तमयधर्मक आत्मा हानोपादानसाक्षी भवितुं प्रभवेत्–इत्यतः हानोपादानराहित्यलक्षणकूटस्थता सिद्धा आत्मनः–इत्यभिप्रायः । तस्मात् संशयादीनां हानोपादानसिद्ध्यर्थमेव तावत् कूटस्थत्वमात्मन एष्टव्यमिति भावः । उक्तं हि द्वितीयाध्याये 'ग्राहकग्रहणग्राह्यविभागे योऽविभागवान् । हानोपादानयोः साक्षी हानोपादानवर्जितः ॥ स्वसाधनं स्वयं नष्टो न नाशं वेत्त्यभावतः । अत एव न चान्येषामतोऽसौ भिन्नसाक्षिकः ॥ धीवत्त्रापेक्षते सिद्धिमात्माऽन्यस्मादविक्रियः । निरपेक्षमपेक्ष्यैव सिद्ध्यन्त्यन्ये न तु स्वयम् ॥' (२–१०८, १०९, ११०) इति ॥ २१ ॥

तदेवं कूटस्थत्वपरिणामित्वाभ्यामत्यन्तभिन्नस्वभावत्वात् आत्मबुद्ध्योरज्ञानमेव संबन्धः, न वास्तवः कश्चिदन्य इत्यतः, तदेतदेवाज्ञानं वाक्यजन्यज्ञाननिवर्त्यमित्युपपन्नमिति वक्तुमुत्तरश्लोक इत्यभिप्रेत्याह – एवमिति ॥

'आगमापायिहेतुभ्याम्' इति ॥ आदावन्ते च नास्तीत्यतः–इत्यर्थः । यद्धि आगन्तु तन्न स्वभावो भवितुमर्हति पूर्वमभावात् । यच्चान्तवत्, तदपि न स्वभावः, प्रध्वंसादूर्ध्वं न भवति यतः । इत्येताभ्यां हेतुभ्यां धृत्वा सर्वानात्मनः दृष्टनष्टस्वाभाव्यान्मिथ्यात्वं निश्चित्य इति यावत् । उपलक्षणमेतत् दृश्यत्वात्, कर्मकर्तृत्वप्रसङ्गकत्वात्, परिणामित्वात्, परार्थत्वात्–इत्यादि द्वितीयाध्यायोक्तहेतुभ्यः–इत्यपि द्रष्टव्यम् । एवम् अन्वयव्यतिरेकन्यायावलम्बेन सर्वानात्मनो निरस्य तदन्वपि असदर्थे स्थितं निजं तमः स्वात्माज्ञानं ततः आत्मानात्मविवेकानन्तरम् 'तत्त्वमसि' इत्येतद् वाक्यं हन्ति बाधते इत्यर्थः । 'आगमापायहेतुभ्याम्' इति पाठे तु अन्वयव्यतिरेकाभ्याम् इत्येवार्थः ॥ २२ ॥

( मूलम् )

इत्यादि पुनःपुनरुच्यते ग्रन्थलाघवाद् बुद्धिलाघवं प्रयोजकमिति । तत्र यद्यपि तत्त्वमस्यादिवाक्यात् उपादित्सिताद्वितीयात्मार्थवत् पारोक्ष्यसद्वितीयार्थः प्रतीयते, तथापि तु

नैरात्म्याद्यर्थः श्रुत्या तात्पर्येण प्रतिपिपादयिषितः । प्रागप्येतस्य प्रतीतत्वात् इतीममर्थमाह –

तदित्येतत्पदं लोके बह्वर्थप्रतिपादकम् ।
अपरित्यज्य पारोक्ष्यमभिधानीत्थमेव तत् ॥ २३ ॥

त्वमित्यपि पदं तद्वत् साक्षान्मात्रार्थवाचि तु ।
संसारितामसंत्यज्य सापि स्यादभिधानजा ॥ २४ ॥

विरुद्धोद्देशनत्वाच्च पारोक्ष्यदुःखित्वयोरविवक्षितत्वम् इत्याह–

उद्दिश्यमानं वाक्यस्थं नोद्देशनगुणान्वितम् ।
आकाङ्क्षितपदार्थेन संसर्गं प्रतिपद्यते ॥ २५ ॥

यत एतदेवम्, अतोऽनुपादित्सितयोरपि तत्त्वमर्थयोर्विशेषण-विशेष्यभावो भेदसंसर्गरहितवाक्यार्थलक्षणायैव–इत्युपसंहारः–

तदो विशेषणार्थत्वं विशेष्यत्वं त्वमस्तथा ।
लक्ष्यलक्षणसंबन्धस्तयोः स्यात्प्रत्यगात्मना ॥ २६ ॥

कथं पुनरविवक्षितविरुद्धनिरस्यमानस्य लक्षणार्थत्वम् ?

लक्षणं सर्पवद्रज्ज्वाः प्रतीचः स्यादहं तथा ।
तद्बाधेनैव वाक्यार्थं वेत्ति सोऽपि तदाश्रयात् ॥ २७ ॥

( क्लेशापहारिणी )

नन्वन्वयव्यतिरेकन्यायेनानात्मनिरसनं विस्तरेणोक्तं पूर्वस्मिन्नेवाध्याये आत्मानात्मनोश्चाज्ञानमेव संबन्ध इति च । तदेव चात्राध्यायेऽपि पुनः पुनरुच्यते ग्रन्थगौरवमप्यनादृत्य, तत्र को हेतुः ? इत्यत आह – इत्यादि पुनः पुनरुच्यत इति ॥ सकृदुच्यमाने यद्यपि ग्रन्थलाघवं सेत्स्यति, तथापि ग्रन्थलाघवादपि बुद्धिलाघवं विशेषेणापेक्षितव्यम् । विषयस्य बुद्ध्यारोपणार्थमेव हि ग्रन्थप्रणयनम् इति भावः । तस्मात्, बुद्धिलाघवमत्र

प्रयोजकं पुनरुक्तौ इत्यर्थः । तदुक्तम् आचार्यशबरस्वामिना 'न पुनरुक्तता महान् दोषः । बहुकृत्वोऽपि पथ्यं वेदितव्यं भवति । ग्रन्थमयेन पुनरुक्तं नेच्छन्ति । अर्थाग्रहणात्तु विस्मृतः पुनः पुनरभिधीयमानं बहुमन्यन्त एव' (शा. भा. ४-२-१३) इति । न ह्येतादृशे दुर्बोधे सूक्ष्मविषये सकृदुक्त्यैव बुद्धेः प्रवेशो भवेन्मन्दधियामिति तदनुग्रहार्थं पुनरुक्तिः-इति वाक्यार्थः ॥

तदेवं वाक्यादेवाज्ञाननिरसनं ततश्चावाक्यार्थप्रतिपत्तिः-इति स्थितम् । अथेदानीं वाक्यव्याख्यामारभमाणः, यदुक्तं 'नीलोत्पलवदेताभ्यां दुःख्यना-त्मत्ववारणे' (३-२) इति तदेतद् विवरीतुकाम आह-तत्रेति ॥ 'तत्त्वमसि' इति वाक्ये यद्यपि प्रत्यगद्वयमेव वस्तु समुपदिदिक्षितम्, तथापि तत्त्वंपदाभ्यां मुख्यया वृत्त्या प्रतीयमानम् अर्थान्तरमप्यस्ति । तत्र तु नैव वाक्यस्य तात्पर्य-मिति दर्शयितुम् उत्तरो ग्रन्थः प्रवर्तते । तदाह - यद्यपीति ॥ तत्र तत्पदेन उपादिदिक्षितोऽद्वितीयात्मार्थः ; मुख्यया तु वृत्त्या पारोक्ष्यमपि प्रतीयते । एवं त्वंपदेन उपादिदिक्षितः प्रत्यगर्थः । मुख्यया तु वृत्त्या सद्वितीयत्वमपि प्रतीयते इत्यर्थः । तत्राद्वितीयप्रत्यगात्मवत् पारोक्ष्य-सद्वितीयार्थोऽपि प्रतीयमानः किमिति नोपादिदिक्षितत्वेन स्वीकार्य इति ? तत्राह - प्रागप्येनस्य प्रतीतत्वात् प्राक् प्रतीतस्यैव प्रत्यायने हि वाक्यम् अनुवादमात्रं स्यादिति भावः । तदेतदुत्तरश्लोकद्वयेनोच्यत इत्याह-इममिति ॥

तदित्येतदिति ॥ लोके 'तत्' इत्येतत् पदं पारोक्ष्यमपरित्यज्य पारोक्ष्यमपि अन्तर्भाव्य बह्वर्थप्रतिपादकम् । परामृष्टप्रकृतार्थः, बुद्धिस्थार्थः, प्रसिद्धार्थः - इत्येवमादिबह्वर्थप्रतिपादकत्वं तस्य दृष्टम् । तत्तु अभिधानोत्थमेव शब्दवाच्यार्थमात्रम् । न तावता पारोक्ष्यं वाक्येन प्रतिपिपादयिषितमपीति शक्यं प्रतिज्ञातुम् इत्यभिप्रायः । न हि पदात् प्राक् प्रतीयमान एवार्थो वाक्येन प्रतिपाद्यः । विशेषार्थप्रतिपादनार्थं हि वाक्यप्रवृत्तिः - इति भावः ॥ २३ ॥

त्वमित्यपीति ॥ तद्वत् तत्पदवत् त्वमित्यपि पदम्, साक्षान्मात्रार्थ-वाच्येव संसारितामसंत्यज्य ; संसारितामपि ब्रूते । सापि तत्पदार्थभूतपारोक्ष्य-

नैत्रासावर्थः श्रुत्या तात्पर्येण प्रतिपिपादयिषितः । प्रागप्येतस्य प्रतीतत्वात् इतीममर्थमाह –

तदित्येतत्पदं लोके बह्वर्थप्रतिपादकम् ।
अपरित्यज्य पारोक्ष्यमभिधानोत्थमेव तत् ॥ २३ ॥

त्वमित्यपि पदं तद्वत् साक्षान्मात्रार्थवाचि तु ।
संसारितामसंत्यज्य सापि स्यादभिधानजा ॥ २४ ॥

विरुद्धोद्देशनत्वाच्च पारोक्ष्यदुःखित्वयोरविवक्षितत्वम् इत्याह–

उद्दिश्यमानं वाक्यस्थं नोद्देशनगुणान्वितम् ।
आकाङ्क्षितपदार्थेन संसर्गं प्रतिपद्यते ॥ २५ ॥

यत एतदेवम्, अतोऽनुपादित्सितयोरपि तत्त्वमर्थयोर्विशेषण-विशेष्यभावो भेदसंसर्गरहितवाक्यार्थलक्षणायैव–इत्युपसंहारः–

तदो विशेषणार्थत्वं विशेष्यत्वं त्वमस्तथा ।
लक्ष्यलक्षणसंबन्धस्तयोः स्यात्प्रत्यगात्मना ॥ २६ ॥

कथं पुनरविवक्षितविरुद्धनिरस्यमानस्य लक्षणार्थत्वम् ?

लक्षणं सर्पवद्रज्ज्वाः प्रतीचः स्यादहं तथा ।
तद्वाधेनैव वाक्यार्थं वेत्ति सोऽपि तदाश्रयात् ॥ २७ ॥

( क्लेशापहारिणी )

अन्वव्यतिरेकन्यायेनानात्मनिरसनं विस्तरेणोक्तं पूर्वस्मिन्नेवाध्याये आत्मानात्मनोश्चाज्ञानमेव संबन्ध इति च । तदेव चात्राध्यायेऽपि पुनः पुनरुच्यते ग्रन्थगौरवमप्यनादृत्य ; तत्र को हेतुः ? इत्यत आह – इत्यादि पुनः पुनरुच्यत इति ॥ सकृदुच्यमाने यद्यपि ग्रन्थलाघवं सेत्स्यति, तथापि ग्रन्थलाघवादपि बुद्धिलाघवं विशेषेणापेक्षितव्यम् । विपक्षस्य बुद्ध्यारोपणार्थमेव हि ग्रन्थप्रणयनम् इति भावः । तस्मात्, बुद्धिलाघवमत्र

मिव अभिधानजा मुख्यवृत्तैव शब्देन उच्यमाना । न तावन्मात्रेण वाक्य प्रतिपिपादयिषितत्वेन स्वीकर्तुं युक्ता इत्यभिप्राय ॥ २४ ॥

पदशक्त्या प्रागेव प्रतीयमानत्वात् पारोक्ष्य ससारित्व च न वाक्य विवक्षितम् इति स्थितम् । इतश्च तथेत्याह – विरुद्धोद्देशनत्वाच्चेति ॥ परस्परविरुद्धोद्दिष्टार्थत्वाच्च पारोक्ष्यसंसारित्वयोर्न वाक्यप्रतिपाद्यत्वम् इत्यर्थ ॥

तत्र युक्तिमाह श्लोके – उद्दिश्यमानमिति ॥ वाक्यस्थम् उद्दिश्य मान वस्तु स्वेच्छार्थरूप उद्देशनगुणान्वितम् उद्देशनावस्थाया प्रतीयमान ससारित्वलक्षणगुणान्वितम् आकाङ्क्षितपदार्थेन विधीयमानेन जगत्कारणसद्ब्रह्म रूपेण पदार्थेन न संसर्ग प्रतिपद्यते, न सबध्यते । न एकमेवाद्वितीय सद्ब्रह्म ससारित्वेनान्वितमिति युक्त भवेत् । यत्र हि उद्दिश्यमानगुण विधीयमानेन सबन्धमर्हति, यथा 'माणवक कुशल', 'नीलम् उत्पलम्' इत्यादिस्थले तत्र माणवकत्वनैल्यादीनामपि उद्दिश्यमानगुणाना विवक्षितत्व स्यादपि, यत्र न कथासंबन्ध उपपद्यते, प्रत्युत विरुध्यते एव यथा 'शीतोऽग्नि' इत्यादिस्थले तत्र उद्देशनगुणस्य कथमिव विवक्षितत्व स्यादिति भाव ॥ २५ ॥

यद्येवम्, किमर्थं तर्हि 'तत्त्वमसि' इति विरुद्धार्थयो पदयो सामानाधिकरण्यम्, न हि तत्त्वमर्थयोर्वास्तविक एव विशेषणविशेष्यभावोऽत्र कथ्यते येनैवमुपदिशेत श्रुत्या कथञ्चिन्न विरुद्धार्थमुपदिशन्ती श्रुति प्रामाण्य मश्नुवीतेति' तत्राह – 'यत एतदेवम्' इति ॥ एव विरुद्धोद्देशनत्वादे वावगम्यते अभिधानार्थैकदेशस्याविवक्षितत्वमिति, अविवक्षार्थयोरपि विशेषण भावेनोपप्रदर्शन लक्षणार्थस्वीकारार्थमिति च । तदाह – अनुपादित्सितयोरपि भेदसंसर्गरहितवाक्यार्थलक्षणायेत्यस्यायमर्थ – न तत्त्वपदार्थयोर्भेदो वा संसर्गो वा अत्र विवक्षित, येन तत्त्वमसीत्येतत् वाक्यमिच्यपि स्यात् । तत्र केचिदाहु ससर्गो वाक्यार्थ – इति, अपरे तु भेदो वाक्यार्थ – इति । अन्ये पुन 'राज्ञ पुरुष' इतिवत् क्वचिद्भेद, 'नीलमुत्पलम्' इतिवच्च क्वचित् पदार्थसंसर्गोऽपि वाक्यार्थो भवेदिति मन्यन्ते । तत्र ब्रह्मणि किं पदार्थना वाक्यार्थता वा' – इति विकल्पने ब्रह्मव्यतिरेकेण प्रत्येतव्याभावात्,

सर्वप्रत्ययवेद्यं ब्रह्म पदार्थोऽपि भवति । तत्र प्रपञ्चाभावः शास्त्रेणैव भवति । प्रपञ्चपदार्थतदभावयोः प्रमाणान्तरसिद्धयोरेव संसर्गात् प्रपञ्चोपशमत्वप्रतिपत्तिरिति शास्त्रवाक्यैकवेद्यत्वं तस्येति वेदान्तैकदेशिनः केचित् । अपरे पुनः कारणसामान्यं सत्तासामान्यं वा 'यतो वा इमानि भूतानि जायन्ते' इतीतरपदार्थैः संसर्गात् 'अस्थूलमनणु' इति भेदाच्च प्रमाणान्तरानधिगतस्वरूपं वाक्यबोध्यं च भवतीत्याहुः । सिद्धान्ते तु तत्त्वंपदार्थयोरेकत्वान्न भेदः, असंसार्यद्वितीयचिन्मात्रबोधकत्वाच्च न संसर्गः । तथा च भेदसंसर्गरहितत्वाच्च पदार्थोऽयमात्मा नापि वाक्यार्थः । अत एवायमवाक्यार्थ इति निर्दिश्यते । निवर्त्यभेदात्तु तत्त्वंपदयोर्भिन्नार्थबोधकत्वकल्पना, अनुपादित्सयोरप्यद्वितीयप्रत्यगात्मलक्षणाय विशेष्यविशेषणभावस्य कल्पनीयत्वात् संसर्गकल्पना च भवेत् काल्पनिकीति च बोध्यम् । यथोक्तं बृहद्वार्तिके 'निवर्त्यभेदाद्भिन्नोऽर्थोऽमानित्वादेर्यथा तथा । ब्रह्माहमर्थयोर्ज्ञेयस्तयोरैकार्थ्यहेतुतः ॥' (बृ. वा. १-४-१४२९), 'एकैकरूपासंसर्गबोधमात्रस्वभावतः । विशेषणानां संप्राप्तिर्नाञ्जसी प्रत्यगात्मनि ॥ विशेषणानां सङ्गो यतो न प्रत्यगात्मनि । लक्ष्यलक्षणता तस्मात् प्रतीच्यध्यवसीयते ॥' (बृ. वा. १-४-१४२६, १४२७) इति, 'भेदसंसर्गहीनत्वात् पदवाक्यार्थताऽऽत्मनः । दुःसंभाव्याऽत आत्माऽयमात्मनैवानुभूयते ॥' (बृ. वा. १-४-१४०८) इति च ॥

लक्षणाय विशेषणविशेष्यभावः– इत्युक्तम् । तद्विवरीतुं विशेषणविशेष्यभावं तावद् विशदयति – तद इति ॥ तदः तत्पदार्थस्य विशेषणार्थत्वं तथा त्वमः त्वंपदार्थस्य विशेष्यत्वम् । त्वंपदार्थं ह्युद्दिश्य तत्पदार्थोऽत्र विधीयते 'रामो धर्मात्मा' इतिवत् । ततो विरुद्धोद्देश्यत्वात्, यथोक्तनीत्या त्वंपदार्थस्य तत्पदार्थेन संसर्गप्रतिपत्त्यनुपपत्तेः, इदं विशेष्यविशेषणभावेनोपस्थापनं तत्त्वमोर्नाभिधानोत्थसर्वार्थविशिष्टयोरैक्यप्रतिबोधनाय किं तर्हि लक्षणया प्रत्यगात्ममात्रसमर्पणायैवेति गम्यते । तदाह 'लक्ष्यलक्षणसंबन्धः' इत्यादिना । तत्पदेन श्रुत्युक्ताद्वितीयसद्ब्रह्म लक्ष्यते, त्वंपदेन च प्रत्यगर्थो लक्ष्यते । तयोश्चैक्यम् असिपदेन बोध्यत इति अद्वितीयप्रत्यगात्मैवावाक्यार्थो वाक्येन समर्पितो भवतीत्यभिप्रायः ॥ २६ ॥

तत्र लक्ष्यलक्षणभावमाक्षिपति — **कथं पुनरिति** ॥ न हि 'गङ्गायां घोष' इत्यादौ गङ्गादिशब्दार्थानाम् अविवक्षितत्वमस्ति । कथञ्चित् शैत्य पावनत्वम् इत्येवमाद्यर्थाना तत्र द्योत्यमानत्वेन सर्वथा अविवक्षितत्वानुपपत्ते । न विरुद्धत्वमाकाङ्क्षितपदार्थेन, नित्य सहभावात् । न च निरस्यमानत्व वाक्यार्थज्ञानलाभाय, उक्तविधया ग्राह्यत्वादेव । इह पुनरविवक्षितत्व विरुद्धत्व निरस्यमानत्व चाङ्गीक्रियते ससारित्वस्य, सद्वितीयत्वस्य च । तत्कथमिहेदशस्य लक्षणार्थत्व घटते ? — इत्याक्षेपार्थ ॥

एतत्परिहारार्थत्वेन श्लोकमुदाहरति — **लक्षणम् इति** ॥ 'योऽसौ सर्प सैषा रज्जु ' इत्यत्र यथा रज्ज्वा सर्पत्व अविवक्षितम्, केवलमभि धानोत्थत्वात् , विरुद्ध च रज्ज्वा, तद्वारणायैव वाक्यप्रवृत्ते , निरस्यमान च रज्जुत्वप्रतिपत्तौ तदपबाधध्रौव्यात् , अथ च रज्ज्वा लक्षण स्यात् । एवम् अहमर्थोऽपि अविवक्षितो विरुद्धो निरस्यमानोऽपि लक्षण स्यात् । तदाह — **तद्वाधेनैवेति** । 'तदाश्रयात्' इत्यनेन तु इद विवक्षितम् — यथा सर्पाश्रयात् सर्पद्वारेणैव तद्बाधेनैव वाक्यार्थ वेत्ति सोऽपि श्रोता, एवमत्रापि श्रोता अह द्वारेणैव तद्बाधेनैव वाक्यार्थ प्रतिपद्यत इत्यहमो लक्षणत्व नानुपपन्नमिति । एवमविवक्षितत्वादिधर्मविशिष्टस्य तत्पदार्थस्यापि पारोक्ष्यादेर्लक्षणत्व द्रष्टव्यम् । यद्यप्यद्वितीयप्रत्यगात्मा न पदार्थो नापि वाक्यार्थ , भेदससर्गरहितत्वात्, तथापि, अविवक्षितविरुद्धनिरस्यमानार्थमपि लक्षणत्वेनाश्रित्य, विवक्षितार्थ प्रतिपत्तिर्भवतीत्येतावद् दृष्टान्तदार्ष्टान्तिकयोस्तौल्यमभिप्रेतमित्यदोष ॥

अत्र 'तत्त्वमसि' इति वाक्यादद्वितीयप्रत्यगात्मलक्षणावाक्यार्थ एव गम्यते इति रहस्यमजानन्त **केचिदभिनववेदान्तिन** आक्षिपन्ति । न जातु चिदपि कस्मिंश्चिद्वाक्ये सर्वपदानामपि लक्षणार्थत्व दृष्टचरम् । अतोऽयुक्तमिद वाक्यार्थावगतिप्रकारवर्णनमिति । तत्तु वेदान्तैकसमधिगम्याद्वितीयात्मस्वरूप निर्धारणाशक्तिकृत मतमित्युपेक्ष्यास्ते । न ह्यत्र 'तत्त्वमसि' इत्यस्मिन् वाक्ये कथञ्चिदुभयपदलक्षणां स्वीकृत्यालौकिकमद्वैततत्त्व प्रसाध्यते येन वाक्यधर्म परीक्षणप्रकारे लोकदृष्टोदाहरणमाश्रीयेत । श्रुत्यैव हीदमुपदिश्यते सद्ब्रह्म

तेजआदिसृष्टिपूर्वकं स्वयमेव जीवेनात्मना अनुप्रविश्य नामरूपव्याकरणमकरोदिति । सैव च श्रुतिः, सृष्टस्य सर्वस्यापि जगतः, तत्प्रविष्टजीवरूपस्य च सदात्मत्वमेवावधारयितुं सर्वस्य च विकारस्य प्रतीतरूपेण वाचारम्भणत्वम्, जगतो जीवस्य च सदात्मनैव सत्यत्वं 'स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं [redacted] आत्मा तत्त्वमसि श्वेतकेतो' (छां. ६–८–१) इति भूयोभूयस्तत्तदाशङ्कापनयनेनोपदिशति । अतो यदिदमुच्यते त्वंपदस्य दुःखित्वादिकं तत्पदस्य च पारोक्ष्यम् अविवक्षितत्वात् परित्याज्यम् अद्वितीयप्रत्यगात्मवस्त्वेव तु परिग्राह्यमिति, तेन तावदेवोच्यते यावदुक्तं भवति 'यत्तद् परं सद्ब्रह्म एकमेवाद्वितीयं सर्वं जगदिदं सृष्ट्वा जीवेनात्मना तदनुप्रविश्य वर्तते तदेवासि त्वं न दुःखी' इति । तथा च न तत्परोक्षं ब्रह्म, किं तु त्वमेव; न त्वं संसारी, किं तु सदेवैकमद्वितीयं ब्रह्म – इतीदं वाक्यम् 'घटाकाशो महाकाशः, महाकाश एव घटाकाशत्वेन व्यवह्रियमाणः' इतिवत् वस्तुस्थितिमात्रप्रत्यायनमनारोपणमेतत् । अवाक्यार्थस्यैव वाक्यार्थत्वव्यपदेशश्चेत्यलमतिविस्तरेण ॥ २७ ॥

## ६. अन्वयव्यतिरेकज्ञानमेवावाक्यार्थप्रतिपत्तिकारणम्

( मूलम् )

इयं चावाक्यार्थप्रतिपत्तिः, अन्वयव्यतिरेकाभिज्ञस्यैव । यस्मात् –

यावद्यावन्निरस्यायं देहादीन् प्रत्यगञ्चति ।
तावत्तावत्तदर्थोऽपि त्वमर्थं प्रविविक्षति　　॥ २८ ॥

कस्मात् पुनः कारणात् देहाद्यनात्मत्वप्रतिपत्त्यावेव आत्मा तदर्थम् आत्मत्वेनाभिलिङ्गते न विपर्यय इति ? उच्यते । प्रत्यगात्मानवबोधस्य अनात्मस्वाभाव्यात्, तदभिनिर्वृत्तश्चायं

बुद्ध्यादिदेहान्तः ; तस्मिन् आत्मत्वम् अविद्याकृतमेव । आत्मत्वमिवानात्मत्वमपि साविद्यस्यैव । यतो निरविद्यो विद्वान् अवाक्यार्थरूप एव केवलोऽवशिष्यते । तस्मादुच्यते –

देहादिव्यवधानत्वात् तदर्थं स्वयमप्यतः ।
पारोक्ष्येणैव जानाति साक्षात्त्वं तदनात्मनः ॥ २९ ॥

यथोक्तार्थप्रतिपत्तिसौकर्याय दृष्टान्तोपादानम् –

प्रत्यगुद्भूतपित्तस्य यथा बाह्यार्थपीतता ।
चैतन्यं प्रत्यगात्मीयं बहिर्वद्दृश्यते तथा ॥ ३० ॥

यस्मादेवम् अतो विस्रब्धम् अवसीयताम् –

पदान्युद्धृत्य वाक्येभ्यो ह्यन्वयव्यतिरेकतः ।
पदार्थाल्लोकतो बुद्ध्वा वेत्ति वाक्यार्थमञ्जसा ॥ ३१ ॥

कुतः पुनः सामान्यमात्रवृत्तेः पदस्य वाक्यार्थप्रतिपत्तिहेतुत्वमिति ? बाढम् –

सामान्यं हि पदं ब्रूते विशेषो वाक्यकर्तृकः ।
श्रुत्यादिप्रतिबद्धं सद् विशेषार्थे भवेत् पदम् ॥ ३२ ॥

( क्लेशापहारिणी )

तदेवं सामानाधिकरण्यविशेषणविशेष्यभावलक्ष्यलक्षणसंबन्धज्ञानेनैव अविवक्षितपदार्थनिरासेन वाक्यादवाक्यार्थप्रतिपत्तिर्भवतीति प्रतिपादितम् । अथेदानीं केवलम् अन्वयव्यतिरेकन्यायावलम्बनमात्रादियं प्रतिपत्तिः सिध्येत् इति भ्रान्तिमपनिनीषुरन्वयव्यतिरेकज्ञानस्य कृत्यं पूर्वोक्तमेव तावदनुवदति – इयं चेति ॥ अन्वयव्यतिरेकाभिज्ञस्यैव तत्पूर्वकं संप्राप्तपदार्थज्ञानस्यैव इत्यर्थः । विनाप्यन्वयव्यतिरेकम् इयं कुतो न स्यात् ? – इत्याशङ्क्य तज्ज्ञानस्यैव तदन्तरङ्गत्वादित्यभिप्रेत्य श्लोकमवतारयति – यस्मात् इति ॥

यावद् यावदिति ॥ अथ मुमुक्षु यावद् यावद् द्वितीयाध्याय प्रपञ्चितक्रमेण देहादीन् अहमन्तान् अनात्मत्वेन निरस्य प्रत्यगञ्चति अन्तर्गच्छति अन्तर्मुखो भवति, तावत् तावत् तदर्थोऽपि प्रागेतस्मादन्वयव्यतिरेकानुसरणात् पारोक्ष्य गत त्वमर्थं प्रविविक्षति, प्रवेष्टुमिच्छति तावत् तावत् प्रत्यगात्मन्येव तत्पदार्थप्रतीतिर्निराबाधा भविष्यति । तत्र तद्विरुद्धदेहादिबुद्धिबाधादेव—इत्यभिप्राय ॥ २८ ॥

ननु चान्वयव्यतिरेकाभ्या देहादीननात्मत्वेन निरस्यैव 'अहं ब्रह्मास्मि' इति प्रतिपद्यते नानिरस्य—इत्येतत् कुत ? इत्याक्षिपति कस्मात् पुनरिति ॥ देहादीनामनात्मत्वेन प्रतिपत्तौ सत्यामेव आत्मा तदर्थात्मत्वेन अभिलिङ्गते आश्रयते सद्ब्रह्मतादात्म्य प्रतिपद्यते न विपर्यये न देहाद्यात्मत्वप्रतिपत्त्यनुवृत्तिदशायामपि ? तत्र परिहार — 'प्रत्यगात्माऽनवबोधस्य' इत्यादि । अयमभिप्राय —देहादिष्वात्मत्वबुद्धिर्हि प्रत्यगात्मानवबोधनिर्वृत्ता, शुक्त्यादिषु रजतादिबुद्धिरिव तदनवबोधहेतुका । अनवबोधश्च नात्मस्वभाव । तस्य आत्मचैतन्यभास्यत्वात्, आत्मज्ञाननिवर्त्यत्वाच्च । यावदेव हि नात्मा तत्त्वतो विज्ञायते तावदेवानवबोधव्यवहार । 'न ममात्मस्वरूप बुद्धये' इत्येवमादि रूप । सा चैवाविद्या नाम, तन्निर्वृत्तत्वाच्च देहादेस्तद्बुद्धिरविद्येत्युक्तम्। तस्माद् रजतादिषु पुरोवर्तिवस्तुत्वबुद्धिर्यथा तदनवबोधनिमित्तत्वादविद्यैव, मिथ्याबुद्धित्वात्, तथैव देहादिष्वप्यात्मत्वबुद्धिरविद्यैव मिथ्याबुद्धित्वात् । तस्मात् यावद्देहादौ आत्मत्वबुद्धिस्तावत् आत्मान यथावन्न जानातीति प्रसिद्धमेवेति । आत्मनो याथार्थ्यं च तदर्थता । तस्मात् देहादिष्वात्मत्वबुद्धिबाधेन, तेष्वनात्मत्वनिश्चये सत्येव आत्मान तत्पदार्थभूतसद्ब्रह्मत्वेन निश्चिनुयादिति क्षिप्यत इति । तर्हि देहाद्यनात्मत्वनिश्चय एवालम् आत्मनस्तदर्थत्वेन निश्चये इत्याशङ्क्याह — आत्मत्वमिवानात्मत्वमपीति । देहादेरन्वयव्यतिरेकेणानात्मनिश्चयोऽपि साविद्यस्यैव । यतोऽद्वितीयब्रह्मात्मानवबोध एवाविद्या, तत्कार्यं च देहादिरिति । कथमेतदवगम्यत इति ? तत्राह — यत इति । वाक्यादेव विद्वान् निरविद्योऽपगमिताविद्य सन् अद्वितीयप्रत्यगात्मरूपवाक्यार्थरूप एव

केवलोऽवशिष्यते । न हि 'रजतादन्यदेव किञ्चिदिदं वस्तु' इति ज्ञानमात्र तत्तदज्ञानापबाधो भवेत् । एवं 'देहादिव्यतिरिक्तरूपोऽहम्' इति ज्ञान मात्रात् अविद्याया आत्यन्तिकोऽपबाधः स्यादिति भावः । तस्मात् अविद्याया सर्वथानिवृत्तावेव तदर्थप्रतिपत्तिर्निराबाधेत्युच्यते समनन्तरोत्तरश्लोकेनेत्याह – तस्मादुच्यते इति ॥

देहादीति ॥ देहादिव्यवधानत्वात्, देहादिबुद्धिव्यवहितत्वादेव स्वयमपि स्वरूपभूतमपि तदर्थं तत्पदार्थमद्वितीयात्मानं पारोक्ष्येणैव जानाति, तदनात्मनं, तत्स्वरूपाद्व्यतिरिक्तस्यैव देहादेरेव साक्षात्त्वं च जानाति । अथवा यत् तदर्थं पारोक्ष्येणैव जानाति तदेव अनात्मनो देहादेः साक्षात्त्वम् – इति योजना । तदापि स एवार्थः । एतदुक्तं भवति – यथा रजतादिदृष्टि व्यवहितत्वमेव पुरोऽवस्थिताया अपि शुक्तेः पारोक्ष्ये कारणम्, एवम् अनात्म भूतदेहादिबुद्धिरेव व्यवधानं स्वरूपभूतस्यापि प्रत्यगात्मनः पारोक्ष्यत्वेनैव ज्ञाने । तस्मात्, देहादेरनात्मत्वं तावन्निश्चेतव्यम्, पश्चाद्देहाद्यनात्मबुद्धि-रप्यनात्मभूताज्ञानहानेन हातव्या स्वरूपविज्ञानार्थमिति ॥ २९ ॥

ननु स्वरूपभूतस्यैव सतस्तदर्थगतात्मत्वस्य देहाद्यात्मत्वाध्यासः कथं स्यात् ? शुक्त्यादिषु त्वनात्मभूतासु रजताद्यध्यासः स्यादपि कथञ्चिद्दोषवशात्, स्वरूपधर्मस्यैव तद्व्यतिरिक्तेऽनात्मन्यध्यास इति कथं सम्भावयाम इति ? तदेतद्दृष्टान्तेन सम्भावयिष्यामीत्याह – यथोक्तार्थप्रतिपत्तिसौकर्यायेति ॥

प्रत्यगुद्भूतपित्तस्येति ॥ देहान्तरुत्पन्नपित्तस्य पुरुषस्य यथा तद्गत पीतताध्यासेन बाह्यार्थेषु पीततादृष्टिः, एवम्, प्रत्यगात्मीयं चैतन्यं स्वरूपभूत मप्यज्ञानवशात् बहिर्वत् बुद्ध्यादिदेहान्तानात्मगतमिव दृश्यते भ्रान्त्यैव । तस्माद्युष्मदर्थप्रत्यगर्थयोर्विवेकाभावाद्युज्यत एव प्रत्यक्स्फुरणाध्यासोऽपि बाह्यदेहादिष्वपीत्यभिप्रायः ॥ ३० ॥

तस्मात्, अन्वयव्यतिरेकाभ्यां पदार्थज्ञाने सति वाक्यादवाक्यार्थ प्रतिपत्तिरिति सिद्धमित्युपसंहरति – यस्मादिति ॥ विस्रब्धं सविश्वासम् अवसीयतां निश्चीयताम् इत्यर्थः ॥

पदानीति ॥ वाक्येभ्यः पदानि उद्धृत्य इतरपदेभ्यो वियुज्य, अन्वयव्यतिरेकतः पदार्थान् लोकतो वृद्धव्यवहारतो बुद्ध्वा । तद्यथा गामानय, गां बधान, गां चारय – इत्यादिषु व्यवहारेषु गोपदान्वयेन 'गां बधान', 'अश्वं नय' इत्यादिषु गोपदव्यतिरेकेण च गोपदस्य सास्नादिमति शक्तिरिति तत्तद्वाक्यानुरूपक्रियान्वयव्यतिरेकाभ्यामवगम्यते । ततस्तात्पर्यानुगुणं वाक्यार्थं वेत्ति जिज्ञासुः – इति लोके दृष्टम् । तदिहापि लोकसिद्धन्यायेनैव अन्वयव्यतिरेकतो 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यादिश्रुत्युपदिष्टपितापुत्रसंवादलक्षणव्यवहारतस्तत्त्वंपदे उद्धृत्य पदार्थान् बुद्ध्वा तत्त्वमसिवाक्यगम्यम् अवाक्यार्थं विद्यादिति भावः ॥ ३१ ॥

नन्वेवमपि वाक्यस्थतत्त्वंपदयोः सामान्यमात्रवाचकत्वात्, कथं वाक्यगम्याद्वितीयप्रत्यगात्मलक्षणवस्तुविशेषप्रतिपत्तिः स्यात्? न हि तत्पदस्य त्वंपदस्य वा शक्तिरवगता । न च वाक्यगतपदेभ्योऽन्यत् वाक्यान्तरात् तदवगतिर्भवेदिति शक्यशङ्कम् । पदसमूहस्यैव वाक्यत्वात् इत्याशङ्कते – कुतः पुनरिति ॥ सामान्यवाचकत्वं पदस्याङ्गीकृत्यैव समाधानं श्लोकेन वक्ष्यत इत्याह – बाढम् इति ॥

सामान्यं हि ॥ यद्यपि स्वतः पदं सामान्यवाचकम् आकृतिः शब्दार्थः, व्यक्तीनामानन्त्यात् संबन्धग्रहणानुपपत्तेरिति हि मीमांसका इति – तथापि वाक्ये स्वेतरशब्दैरन्वयसमये श्रुत्यादिप्रतिबद्धं सत्, श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्य( जै. सू. ३–३–१४ )लक्षणप्रमाणकारणैर्नियन्त्रितं सत् विशेषार्थं भवेत्, अविवक्षितार्थं मुक्त्वा इति स्थितिः । यद्यप्यद्वितीयः प्रत्यगर्थः, न पदार्थो नापि वाक्यार्थः, न सामान्यं नापि विशेष इति यथोक्तलोकरीतिर्नोपयुज्यत इव श्रुत्यर्थनिर्णये, तथापि यथा लोके वाक्यस्थं पदं विवक्षितविशेषार्थज्ञापने पर्यवस्यति स्वेतरपदसाहचर्यवशात्, एवमत्रापि लोकबुद्धिमनुसरन्ती श्रुतिः नित्यसिद्धं जिज्ञासोरात्मानं प्रकृतपरामर्शकतत्पदेन सह प्रत्यक्षसन्निहितवाचित्वंपदस्य समभिहारेणावाक्यार्थमपि अद्वितीयप्रत्यगर्थत्वेन ज्ञापयति तेजआदिसृष्टिप्रवेशनामरूपव्याकरणस्वाप्ययाद्यध्यारोपेण यथोक्तान्वयव्यतिरेकप्रतिपत्तिसौकर्यकल्पनार्थमिति सर्वमिदमनवद्यम् ॥ ३२ ॥

## ७. वाक्यादेव साक्षादज्ञाननिवृत्तिः

( मूलम् )

अन्वयव्यतिरेकपुरःसरं वाक्यमेव सामानाधिकरण्यादिना अविद्यापटलप्रध्वंसद्वारेण मुमुक्षुं स्वाराज्ये अभिषेचयति । न त्वन्वयव्यतिरेकमात्रसाध्योऽयमर्थः – इत्याह –

बुद्ध्यादीनामनात्मत्वं लिङ्गादपि च सिद्ध्यति ।
निवृत्तिस्त्वात्मता नेतीत्यतो वाक्यं समाश्रयेत् ॥ ३३ ॥

न केवलमनुमानमात्रशरणोऽभिलषितमर्थं न प्राप्नोतीति, अनर्थं चाप्नोति इत्याह –

अनादृत्य श्रुतिं मोहादतो बौद्धास्तमस्विनः ।
आपेदिरे निरात्मत्वमनुमानैकचक्षुषः ॥ ३४ ॥

( क्लेशापहारिणी )

तदेवम् अन्वयव्यतिरेकन्यायस्य वाक्यार्थप्रतिपत्त्यङ्गत्वादवश्याश्रयणीयत्वमुक्त्वा, अथेदानीम् अन्वयव्यतिरेकाश्रयणमात्राद्वाक्यार्थप्रतिपत्तिरिति भ्रान्तिं निरस्यन्नाह – अन्वयव्यतिरेकपुरस्सरमिति ॥ वाक्यमेवान्वयव्यतिरेकपुरस्सरमविद्याध्वंसं करोतीत्युक्त्या श्रुतिरेव लोकबुद्धिमनुसरन्ती यथोक्तन्यायं प्रथमं समुपस्थाप्य तदनु साक्षात् स्वयमविद्यामुत्सारयति, न पुरुषमत्याभ्यूहितमन्वयव्यतिरेकमात्रं तत्रालमिति विवक्षितम् । तदेव स्फोरयति – न त्विति ॥

बुद्ध्यादीति ॥ यद्यपि बुद्ध्यादीनाम् अनात्मत्वं लिङ्गादपि सिद्ध्यति – बुद्धिर्नात्मा, दृश्यत्वात् इत्यादियुक्तिरत्र लिङ्गशब्देन सूचिता – तथापि तावता एतादृशानुमानाश्रयणमात्रेण तेषां बुद्ध्यादीनां न निवृत्तिः स्यात्, न सत्यत्वं बाध्येत । तदध्यारोपनिमित्तस्याज्ञानस्यानिवृत्तेः – इत्यतो हेतोः, अज्ञाननिवृत्त्यर्थं तत्त्वमस्यादिवाक्यमेव समाश्रयेत् । न च श्रुतिसमर्पितोऽन्वयव्यतिरेकन्याय

केवलमनुमानं समर्थयति, न हि 'तस्मादेनं स्वपितीत्याचक्षते । स्वं ह्यपीतो भवति' (छां. ६-८-१) इत्यादिवाक्यमनुमानेन जीवस्य स्वाप्ययं साधयति ; किं तर्हि, जाग्रत्स्वप्नयोरिव सुषुप्तौ न सुखदुःखोपभोगोऽस्ति, न च 'अयमहमस्मि इमानीतराणि भूतानि' इति विशेषज्ञानम् ; तस्मात् सकलपुण्यापुण्याननन्वागतं निष्प्रपञ्चं सदात्मत्वमेव तत्र -- इति जीवत्वस्य व्यतिरेकं आत्मत्वमात्रस्यान्वयं च साक्षादेव दर्शयति । अद्वितीयात्मत्वमेव च साक्षाद्दर्शयन्तमनुभवम् आधारीकृत्य, तत्पदार्थैकत्वमेव ज्ञापयति 'स्वं ह्यपीतो भवति' इति प्रसिद्धार्थकनिर्वचनदानेन । अतः श्रुत्युक्तानुभवानुसारियुक्तीनां महद्वैषम्यं लौकिकानुमानात् । तस्मात् साधूक्तम् अन्वयव्यतिरेकपुरःसरं वाक्यमेवाविद्यापटलप्रध्वंसीति इति ज्ञेयम् ॥ ३३ ॥

अनुमानैकरूपयोरन्वयव्यतिरेकयोर्न केवलं नेष्टसाधकत्वम्, किं त्वनिष्टकारणत्वमपीत्याह -- न केवलमिति ॥

अनादरयेति ॥ स्पष्टार्थः श्लोकः ॥ ३४ ॥

## ८. वाक्यप्रामाण्यम्

( मूलम् )

न चानादरे कारणमस्ति । यस्मात्, सर्वत्रैव अनादरनिमित्तं प्रमाणस्य प्रमाणान्तरप्रतिपन्नप्रतिपादनं वा, विपरीतप्रतिपादनं वा, संशयितप्रतिपादनं वा, न वा प्रतिपादनम् इति । न चैतेषाम् अन्यतमद(म ?)पि कारणमस्ति । यत आह --

मानान्तरानवष्टब्धं निर्दुःखात्मानमञ्जसा ।
बोधयन्ती श्रुतिः केन न प्रमाणमितीर्यते ॥ ३५ ॥

न च संशयितम्[1] अवगमयति । यतः --

सर्वसंशयहेतौ हि निरस्ते कथमात्मनि ।
जायेत संशयो वाक्यादनुमानेन युष्मदि ॥ ३६ ॥

1. 'संशयितत्वम्' इति मुद्रितपुस्तकपाठः ॥

अपि च –

यत्र स्यात् संशयो नासौ ज्ञेय आत्मेति पण्डितैः ।
न यतः संशयप्राप्तिरात्मनोऽवगतित्वतः ॥ ३७ ॥

अनवबोधकत्वं तु दूरोत्सारितमेव । यत आह –

बोधेऽप्य[1]नुभवो यस्य न कथञ्चन जायते ।
तं कथं बोधयेच्छास्त्रं लोष्टं नरसमाकृतिम् ॥ ३८ ॥

( क्लेशापहारिणी )

एवं तावत् श्रुतिवाक्यार्थप्रतिपत्तिप्रतिबन्धनिरासार्थम् अन्वयव्यतिरेकाश्रयणस्य आवश्यकता समुपपादिता । अथेदानीं वाक्यस्याज्ञाननिरसने सामर्थ्यं प्रदर्शयितुमुपक्रमते – न चेति ॥ अयं भाव. । वाक्यं हि न प्रत्यक्षादिवत् स्वात्मनोऽन्यत् प्रमेयम् अज्ञातं ज्ञापयति तद्विषयीकरणेन, नापि स्वर्गादिबोधकवाक्यमिव वाक्यमित्येव कारणात् श्रद्धेयार्थं बोधयति, किं तु, अतद्धर्मनिवर्तनादेव केवलम् आत्मनि प्रमाणमिति व्यपदिश्यते । अथापि कर्मवाक्येन समं प्रामाण्यं दर्शयितुमिदमुच्यते यद् वाक्येऽप्रामाण्यप्रसक्तिरेव तावन्नास्ति । कर्मवाक्येऽपि खलु परोक्षवस्तुबोधके इदमेव प्रामाण्य नाम यदनधिगताबाधितार्थबोधकत्वम्; तदिहाप्यस्त्येवेति नास्त्यप्रामाण्यशङ्कावकाश इति । तदुक्तं बृहद्वार्तिके – 'न च वेदोक्तितो वेद श्रद्धेयार्थ इहेष्यते । किं त्वमानत्वहेतूना वेदवाक्येष्वसंभवात् ॥' (बृ. वा. २-४-३२५) इति । तदेतद् व्याख्यातुम् अप्रामाण्यकारणानि तावत् परिगणयति श्रुतौ तदसंभव-स्पष्टनाय यस्मादिति । एतेषामप्रामाण्यकारणानामन्यतममपि प्रकृतवाक्ये नास्तीति बोधयितुमुत्तरग्रन्थस्य प्रवृत्तिरित्याह – यत आह इति ॥

तत्र तावन्मानान्तराधिगतानुवादित्वं विपरीतप्रतिपादकत्वं च नास्तीत्येतत् स्फुटयति मानान्तरेति ॥ निर्दुःख्यात्मानमसंसारिणं प्रत्यक्षादि-मानान्तरानवष्टब्धं अञ्जसा अवैपरीत्येन बोधयन्ती । अद्वैतत्वेन बाधशङ्काविधुरं बोधयन्ती इति यावत् । केन हेतुना, अप्रमाणमितीर्यते ? नात्र कोऽपि हेतुरस्तीत्यभिप्रायः ॥ ३५ ॥

1. 'बोध्येऽपि' इति पाठोऽसाधुः ॥

ननु मास्त्वनुवादकत्वं विपरीतबोधकत्वं वा । संशयितप्रतिपादनादेवाप्रामाण्यम् इत्यस्तु । तत्राह – **न चेति** । एतत्स्पष्टीकरणार्थम् उत्तरश्लोक इत्याह – **यतः इति** ॥

**सर्वसंशयहेतौ इति** ॥ अनुमानेन अन्वयव्यतिरेकलक्षणेन पदार्थज्ञानफलकेन सर्वसंशयहेतौ निरस्ते सति, आत्मनि वाक्यात् कथं संशयो जायेत ? – इति योजना । संशयो हि द्विकोटिकः 'एवं वा, एवं वा' इति ; स चानात्मभूतदेहादिबुद्ध्यन्तेषु आत्मबुद्धिनिरासेन प्रागेव वाक्यप्रवृत्तेर्निरस्ता, सा मृत इवामृत्तसेकेन कथं केन हेतुना वाक्यप्रवृत्तेरूर्ध्वमपि जायेत ? – इत्यभिप्रायः ॥ ३६ ॥

तदेवं वाक्यप्रवृत्तिस्वभावपर्यालोचनया संशयावकाशो नास्तीत्युक्तम् । अथेदानीं वाक्यगम्यात्मस्वभावपर्यालोचनयापि नास्ति तदवकाश इत्युपपादयन्नाह – **'अपि चे'ति** ॥

**यत्रेति** ॥ यस्मिन्नर्थे संशयः स्यात् नासौ आत्मा इति पण्डितैर्ज्ञेयः । कुतः ? यतः – यत्कारणम् । आत्मनोऽवगतित्वतः अवगतिस्वरूपत्वात् संशयप्राप्तिरेव न संभवति । सर्वसंशयमिथ्याप्रतिपत्तिनिरासेनैव हि वस्तुविषयकावगतिर्जायते लोके । न चावगतेऽपि वस्तुनि संशयप्राप्तिः शङ्क्या । अवगतेरवगतिस्वस्यैव विघातप्रसङ्गात् इत्यभिप्रायः । उपलक्षणमेतत् । अद्वितीयावगतिरूपत्वाच्च प्रत्यगात्मनः–इति द्रष्टव्यम् । न ह्यद्वितीये द्विकोटिकसंशयस्य संभवोऽस्ति । तथा च श्रुतिरात्मन्यवगते सर्वसंशयोच्छित्तिं दर्शयति– 'छिद्यन्ते सर्वसंशयाः' (मुं. २–२–९) इति ॥ ३७ ॥

तदेवमनुवादकत्वविपरीतबोधकत्वसंशयितबोधकत्वानां निरासेऽप्यबोधकत्वरूपमप्रामाण्यं स्यादित्याशङ्कमानम् उपहसन्नाह समनन्तरोत्तरश्लोक इत्याह – **'अनवबोधकत्वम्'** इत्यादिना **'यत आह'** इत्यन्तेन ॥

**बोधेऽपीति** ॥ 'तत्त्वमसि' इति नित्यबोधस्वरूप एव ह्यात्मा त्वमुपदिश्यते । तत्र 'बोधेऽपि अनुभवेऽपि, बोधोऽनुभवो न जातः' इति

वदन् दीपे प्रकाशो नास्तीति वदन्निव व्याहतवचा । न हि अनुभवे प्रकाशरूपे अनुभवप्रकाश कर्तव्य इत्याकाङ्क्षास्तीति । एव वाक्यज्ञाने अनुवादकत्व विपरीतबोधकत्वादिसर्वाप्रामाण्यकारणाभावे, किमित्यन्वयव्यतिरेकोऽप्याश्रीयते[२]– इति तु न शङ्क्यम् । यतोऽज्ञानसंशयादिप्रतिबद्धयो पदार्थयोर्न कस्यचिदपि वाक्येन तत्त्वविज्ञान जायते । निरस्ते तु प्रतिबन्धे न विपरीतबोधकत्वादिशङ्कासभव – इत्येतावत्तु इह प्रतिपादितम् । तथा हि भाष्यकारवचनम् – "तत्र येषामेतौ पदार्थौ अज्ञानसशयविपर्ययप्रतिबद्धौ, तेषा तत्त्वमसीत्येतद् वाक्य स्वार्थे प्रमा नोत्पादयितु शक्नोति पदार्थज्ञानपूर्वकत्वाद्वाक्यार्थ(ज्ञान)स्य – इत्यतस्तान् प्रत्येष्टव्य पदार्थविवेकप्रयोजन शास्त्रयुक्त्यभ्यास " (सू भा ४–१–२) इति । कथ तर्हि शास्त्रस्यावबोधकत्वव्यपदेश इति शङ्कमानस्योत्तर प्रागेव दत्त द्वितीयाध्याये 'अविद्यानाशमात्र तु' (२–१०५) इत्यत्र । तदीदृशे बोधेऽप्यनवबोधकत्व वदन्त जड यदि शास्त्र नावबोधयति, तदा नैष शास्त्रापराध , न ह्यन्धस्य रूपादर्शने भानोरपराध शङ्कनीयो भवतीति भाव ॥ ३८ ॥

## ९· श्रुत्यनुगृहीतोऽन्वयव्यतिरेकन्यायः

( मूलम् )

अन्वयव्यतिरेकपुरःसर वाक्यमेवावाक्यार्थरूपं आत्मानं प्रतिपादयति – इत्यस्य पक्षस्य द्रढिम्ने श्रुत्युदाहरणम् उपन्यस्यति –

जिघ्राणीममहं गन्धमिति यो वेत्त्यविक्रियः ।
स आत्मा तत्पर ज्योतिः शिरसीदं वचः श्रुतेः ॥ ३९ ॥

यथा 'तत्सत्यं स आत्मा तत्त्वमसि' इत्यस्य शेषत्वेन अन्वयव्यतिरेकश्रुतिर्यथा 'य एषोऽक्षिणि पुरुषो दृश्यते' (छा· ८–७–४) इत्याद्या 'अथ यो वेदेदं जिघ्राणि'

(छां. ८-१२-४) इत्यन्ता, तथा 'अहं ब्रह्मास्मि' (बृ. १-४-१०) इत्यस्य शेषः —

अहमः प्रत्यगात्मार्थो निरस्ताशेषयुष्मदः ।
बम्भणीति श्रुतिर्यस्या योऽयमित्यादिनाऽसकृत् ॥ ४० ॥

कथं पुनरयमर्थोऽवसीयते अहंव्याजेन अत्रात्मार्थो बुबोधयिषित इति ? यतः —

एष आत्मा स्वयंज्योती रविसोमाग्निवाक्षु सः ।
इतेष्वस्तं दृगेवास्ते भासयंश्चिचेष्टितम् ॥ ४१ ॥

निर्णेनेक्ति च पृष्टो मुनिः —

आत्मनैवेत्युपश्रुत्य कोऽयमात्मेत्युदीरिते ।
बुद्धेः परं सतो मुक्तमात्मानं मुनिरभ्यधात् ॥ ४२ ॥

यस्माचाऽऽत्मा अत्र अहंव्याजेन प्रत्यङ्मात्रो जिग्राहयिषितः, तस्मात् अहंवृत्तिस्वरूपस्य विलयेनैव वाक्यार्थावगमाय कारणत्वं प्रतिपद्यते - इतीममर्थमाह —

अहंवृत्त्यैव तद् ब्रह्म यस्मादेषोऽवगच्छति ।
तत्स्वरूपलयेनातः कारणं स्यादहङ्कृतिः ॥ ४३ ॥

( क्लेशापहारिणी )

यद्यप्यन्वयव्यतिरेकन्यायस्य पदार्थशोधनद्वारेण अवाक्यार्थप्रतिपत्त्यङ्गता उक्ता, तथापि न यस्य कस्यचित् तर्कस्य तथात्वम्, किं तु श्रुत्यनुगृहीतस्यैवेत्यभिप्रायेण, 'अन्वयव्यतिरेकपुरःसरं वाक्यमेव' इत्याद्युक्तम् । तदेतद् विवरीतुमुत्तरमन्थसंदर्भ इत्याह — अन्वयव्यतिरेकेति ॥

जिघ्राणीति ॥ 'अहमिमं गन्धं जिघ्राणि' इति 'अहम्' इति प्रमातारम् कर्तृत्वभोक्तृत्वादिविशेषेण विक्रियमाणम्, 'इमं गन्धम्' इति

विषय च विक्रियावन्तम्, जिघ्राणीति घ्राणक्रियाकरणप्रमितीश्च कालादि परिच्छेदवती, योऽविक्रिय एवावतिष्ठमान वेत्ति नित्यवेदनस्वरूप । ■ एव 'स आत्मा तत्त्वमसि' इत्यत्रोक्त –इतीद वच श्रुते शिरसि वेदान्ते दृश्यते 'अथ यो वेदेद जिघ्राणीति स आत्मा गन्धाय घ्राणम्' (छा ८–१२–४) इत्यादिरूपम् इत्यर्थ । अत्र हि त्वंपदार्थस्य अनात्मभूतप्रमातृत्वादिभ्यो विविच्यैव तत्पदार्थेनैक्यमुक्तम् इति भाव । तदेव चात्मन परंज्योति स्वरूपम्– इति प्रतिपादयद् वच 'एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा ८–१२–३) इति श्रुते शिरसि दृश्यते इत्यभिप्राय । तत्र हि शरीरादिभ्यो व्यावृत्तस्यैव त्वपदार्थस्य परज्योतिष्ट्वमुच्यते – इति भाव ॥ ३९ ॥

छन्दोगाना तत्त्वमैक्यवाक्यशेषत्वेन अन्वयव्यतिरेकश्रुतिरुदाहृता । तदभिप्रायमनूद्य वाजसनेयिनामपि ता वक्तुकाम आह – यथेति ॥ 'तत्सत्य स आत्मा तत्त्वमसि' (छा ६–८–७) इति त्वपदार्थस्य तत्पदार्थरूपताम् आचक्षाणस्य वाक्यस्य शेषत्वेन अन्वयव्यतिरेकश्रुति 'य एषोऽक्षिणि' इत्याद्या 'अथ यो वेदेद जिघ्राणि' इत्यन्ता यथा, तथा 'अह ब्रह्मास्मि' (बृ १–४–१०) इत्यस्याप्यैक्यपरवाक्यस्य शेष, अन्वयव्यतिरेकोपदेश उदाह्रियते समनन्तरश्लोकेन – इत्यर्थ । सर्वत्रापि श्रुत्यनुगृहीत एवास्त्यन्वयव्यतिरेक लक्षणस्तर्क एवविधे स्थले – इति भाव । यद्यपि 'य एषोऽक्षिणि' (छा ८–७–४) इत्येतद् प्रजापतिवाक्य 'य आत्माऽपहतपाप्मा' (छा ८–७–१) इत्यस्य शेष, 'अथ यो वेदेद जिघ्राणि' (छा ८–१२–४) इति च 'पर ज्योतिरुपसंपद्य' (छा ८–१२–३) इत्यस्य, यद्यपि च 'तत्त्वमसि' इति वाक्यशेषत्वेन 'अन्नमय हि सोम्य मन' (छा ६–८–१), 'स्वप्नान्त मे विजानीहि' (छा ६–८–१) इत्यादिवचनानि तत्तत्प्रकरणस्थान्येव त्वपदार्थविवेकाय शक्योदाहरणानि, तथापि तत्त्वमैक्यपरवाक्यशेषत्वेन अन्वयव्यतिरेकप्रदर्शी श्रुत्यैव क्रियते इत्येतावदत्र विवक्षितम् इति न दोष ॥

अथ 'अहं ब्रह्मास्मि' (बृ. १-४-१०) इति वाजसनेयकगतैक्यपरवाक्यशेषतया श्रुत्यनुगृहीतमन्वयव्यतिरेकवाक्यमुदाजिहीर्षुराह — **अहम** इति। निरस्ताशेषयुष्मदः व्यावर्तितसकलानात्मांशस्य अहमः प्रत्यगात्मा अर्थः इति न्याय्या युक्त्युपेता श्रुतिः, योऽयमित्यादिना 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ. ४-३-७) इत्यादिवाक्येन असकृत् बन्धमणीति तात्पर्येण वक्ति-इत्यर्थः। अत्र हि 'योऽयम्' इति आत्मानं प्रत्यक्षेण निर्दिश्य, अनात्मभूतबुद्ध्यादिभ्यो वैलक्षण्यं प्रदर्श्यत इति भावः। 'असकृत्' इत्यनेन 'स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि' (बृ. ४-३-७), 'उदयासलिलाकाशो' (बृ. ४-३-१९) इत्यादिवचनजातम् अन्वयव्यतिरेकोदाहरणार्थमुपसंगृहीतं वेदितव्यम् ॥ ४० ॥

'अहमः प्रत्यगात्मा लक्ष्यार्थः' इत्युक्तमधस्तात्। तत्कथमवगम्यते !— इति पृच्छति — **कथं पुनरिति**। अत्र अहंव्याजेन अहङ्कारं निमित्तीकृत्य प्रत्यगात्मा बुबोधयिषित इति कथमवगम्यते ? अथवा 'योऽयमित्यस्मिन्' वाक्यशेषे अहंशोधनद्वारेण प्रत्यगात्मा बुबोधयिषित इति कथमवसीयते ? — इति प्रश्नः। प्रश्नोत्तरत्वेन श्लोकमवतारयति — 'यतः' इति ॥

**एष इति** ॥ एष आत्मा स्वयंज्योतिः, सः रविसोमाग्निवाक्षु अस्तमितेषु चित्तचेष्टितं चित्तप्रचारजातं सर्वमपि भासयन् दृगेव साक्षिरूप एव आस्ते 'इति वचनात्' इति शेषः। इदमुक्तं भवति। 'योऽयमात्मा' इत्यत्र बुद्ध्यादिसाक्षी प्रत्यगात्मैव विवक्षितः प्रतिपत्तव्यः। पूर्वोत्तरालोचनात्। पूर्वस्मिन् ग्रन्थे तावत् — 'अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किञ्ज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति' (बृ. ४-३-६) इति सर्वबाह्यान्तरज्योतिषामस्तमयेऽपि आत्मज्योतिःसत्तायाः प्रश्नप्रतिवचनाभ्यां निर्णीतत्वात् वागादिसर्वेन्द्रियसाक्ष्येवात्मा निर्णिनीषित इति गम्यते — इति श्लोकार्थः। इदमुपलक्षणम्, उत्तरत्रापि 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' (बृ. ४-३-१४) इति दर्शनादिष्वपि द्रष्टव्यम् ॥ ४१ ॥

किं च योऽयमित्यस्मिन्नेव वाक्ये शुद्धत्वपदार्थस्य दर्शितत्वादेवेत्थ मवसेयम् इत्याह – **निर्णेनेक्ति चेति** ॥ आत्मनः परिशुद्धत्वम् आविर्भावयति सर्वानात्मपरिमार्जनेनेत्यर्थः ॥

**आत्मनैवेति** ॥ 'आत्मनैवायं ज्योतिषाऽऽस्ते' (बृ ४–३–६) इति याज्ञवल्क्यवचनमुपश्रुत्य कोऽयमात्मा ? कतमोऽयं देहेन्द्रियप्राणमनोबुद्धिषु यस्त्वयोक्तः यज्ज्योतिषास्तेऽयं पुरुष इत्युक्तम् ? – इत्यभिप्रायेण 'कतम आत्मा' (बृ ४–३–७) इति जनकेनोदीरिते पृष्टे सति मुनिर्याज्ञवल्क्यः बुद्धेः परं स्वतो मुक्तमात्मानं सर्वसाक्षिणम् 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ ४–३–७) इत्यनेन वाक्येन अभ्यधात् इत्यर्थः । अत्र हि 'विज्ञानमयः' इति देहाद्व्यावृत्तिः, 'प्राणेषु' इति इन्द्रियेभ्यः, प्राणेभ्यश्च । 'हृद्यन्तः' इति बुद्धेः । हृच्छब्देन बुद्धिरुच्यते तत्स्थत्वात्, हृदि' इति बुद्धेः राधारत्वनिवृत्त्यर्थमन्तरित्युक्तम् । तदेवं देहादिव्यतिरिक्तः बुद्धितद्वृत्तिभ्योऽपि यः परः प्रत्यगात्मतया स्वयं भाति स एवात्मेति प्रत्यायनाय 'ज्योतिः' इत्युक्तम् । तथा च सर्वावभासकत्वात् न केनापि स्वविषयभूतेन परिच्छिन्नोऽय मित्यतः स्वतोमुक्तस्वरूप आत्मा – इति अहंपदार्थशोधनपरमिदं वचनमिति सिद्धम् इत्यभिप्रायः ॥ ४२ ॥

अत्र च अहंवृत्तेर्लक्षणत्वेन स्थितौ लक्ष्यभूताद्वयात्मनो न सिद्धिः, सद्वितीयत्वप्रसङ्गात्, तदभावे तु नतराम्, लक्षणाभावादेव – इत्याक्षिप्य 'लक्षणं सर्पवद्रज्ज्वाः' (२–२७) इत्युक्तं स्मारयन्, 'अहं ब्रह्मास्मि' इति वाक्यार्थज्ञाने अहंवृत्तेः कारणत्वं स्वरूपविलयेनैवेत्यर्थकत्वेनोत्तरश्लोकमवतार यति – **यस्माच्चेति अहंवृत्त्यैवेति** ॥ यस्मादेष मुमुक्षुः अहंवृत्त्यैव द्वारभूतया तद्ब्रह्म अवगच्छति यथावत् प्रतिपद्यते, अतः तदद्वितीयत्वप्रतिपत्तौ अहङ्कृतिः तत्स्वरूपलयेन – अहंरूपलयेनैव कारणं स्यात् । 'मत्स्वरूपलयेनैव' इति पाठेऽप्ययमेवार्थः ॥ ४३ ॥

## १०. कृतान्वयव्यतिरेकस्य न वाक्यार्थे विरोधप्रतीतिः

(मूलम्)

अत एव च यः प्रतिज्ञातोऽर्थो 'नाहंग्राह्ये न तद्धीने' (२-५) इत्यादिः, स युक्तिभिरुपपादित इति कृत्वा उपसंह्रियते –

गृहीताहंपदार्थश्चेत् कस्माज्ज्ञो न प्रपद्यते ।
प्रत्यक्षादिविरोधाच्चेत् प्रतीच्युक्तिर्न युष्मदि ॥ ४४ ॥

पूर्वस्यैव श्लोकार्धस्य विस्पष्टार्थमाह –

पराञ्च्येव तु सर्वाणि प्रत्यक्षादीनि नात्मनि ।
प्रतीच्येव प्रवृत्तं तत् सदसीति वचोऽञ्जसा ॥ ४५ ॥

तस्मात्, प्रमातृप्रमाणप्रमेयेभ्यो हीयमानोपादीयमानेभ्यो, अन्वयव्यतिरेकाभ्यां मुञ्जेषीकावत् अशेषबुद्धिविक्रिया-साक्षितया आत्मानं निष्कृष्य तत्त्वमस्यादिवाक्येभ्योऽपूर्वादि-लक्षणम् आत्मानं विजानीयात् । तदेतदाह –

अहं दुःखी सुखी चेति येनायं प्रत्ययोऽध्रुवः ।
अवगत्यैव आभाति स स आत्मेति वाक्यधीः ॥ ४६ ॥

(क्लेशापहारिणी)

तदेवं वाक्याद्ब्रह्मप्रत्यगात्मप्रतिपत्तेरुपपन्नत्वात् नास्त्यत्र सिद्धान्ते कोऽपि विरोध इत्युपसंहरति – अत एव चेति ॥ 'नाहंग्राह्ये न तद्धीने न प्रत्यङ् नापि दुःखिनि । विरोधः सदसीत्यस्माद्वाक्याभिन्नस्य जायते ॥' इति द्वितीयाध्यायादौ (२-५) योऽर्थः प्रतिज्ञातः, स युक्तिभिरुपपादित इति कृत्वा उपसंह्रियत इत्यर्थः ॥

**गृहीतेति** ॥ गृहीत अहपदार्थं प्रत्यगात्मत्वेन येन तादृशश्चेत् स प्रतिपत्ता कस्माद् वाक्यार्थं न प्रपद्यते तत्र न किमपि कारण पश्याम इत्यर्थ । शङ्कते – **प्रत्यक्षादिविरोधाचेत्** । अहम संसारित्वस्य प्रत्यक्षादि सिद्धत्वात् तद्विरोधात् वाक्यार्थाप्रतिपत्ति स्यात् इति चेत् इत्यर्थ । तत्र परिहार – इत्ति तत्त्वमस्यादिवाक्य प्रतीचि प्रत्यगात्मनि वर्तते न तु युष्मदि अहमि परागर्थे । प्रत्यक्षादिस्तु युष्मदि वर्तते न प्रत्यगात्मनि – इत्यतो भिन्नविषयत्वात् न कोऽप्यनयो प्रमाणयोर्विरोध इत्यथ ॥ ४४ ॥

विरोधाभावमेव स्पष्टयत्युत्तरश्लोक इत्याह – **पूर्वस्यैवेति** ॥ विस्पष्टार्थम् विस्पष्टतार्थम् इत्यर्थ ॥

**पराञ्च्येव त्विति** ॥ प्रत्यक्षादीनि सर्वाणि प्रमाणानि तु पराञ्च्येव । 'पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ्पश्यति नान्तरात्मन्' (का २-३-१७) इति श्रुते । तत् सदसीति वचस्तु प्रतीच्येव अञ्जसा तात्पर्येण प्रवृत्तम् । ततो न विरोध कश्चिदिति भाव ॥ ४५ ॥

तस्मात्, वाक्यार्थमेवम् अविरोधेनैव प्रतिपद्येतेत्याह **तस्मादिति** ॥ हानोपादानयोग्येभ्य, प्रमात्रादिभ्य । हानोपादानरहितमात्मान मुञ्जादि वेषीकां विविच्य तत्त्वमस्यादिवाक्येभ्य । अपूर्वादिलक्षणम् आत्मान विजानीयात् । 'तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म' (बृ २ ५ १९) इति श्रुत्युक्तलक्षण निर्विशेषप्रत्यगात्मान विद्यात् इत्यर्थ । न हि तत्त्वमस्यादिवाक्येषु त्वपदार्थत्वेन प्रमातृरूप पराग्वस्तु विवक्षित येन विरोध स्यादर्पीत्यभिप्रायेणोक्तम् **'अशेषबुद्धिविक्रियासाक्षितया'** – इति । अत्रार्थे श्लोकमवतारयति – **तदेतदाहेति** ॥

**अहं सुखीति** ॥ 'अह सुखी', 'अह दु खी' इत्यादिप्रकार, अयम् अध्रुव अस्थिर यन आगमापायी प्रत्यय, अवगत्यन्त प्रमित्यन्त । प्रमातृप्रमाणप्रमेयप्रमितिलक्षण इत्येतत् । येन साक्षिप्रकाशेन आभाति स म आत्मा – इति वाक्यधी । तदुक्त वृहद्वार्तिके 'मातृमानप्रमेयार्थाश्चागमा-

पायिन सदा । वीक्षते योऽविलुप्ताक्षः स आत्माऽनन्यमानगः ॥' (बृ. ४-४-४६७) इति । अयं भावः – साक्ष्यन्वयसाक्ष्यव्यतिरेकाभ्यां हि 'अहं दुःखी', 'अहं सुखी' – इति च प्रत्ययौ हि अहम्. सुखित्वदु खित्वरूपपरिणामेनैव तदा तदा जायते, नश्यति च । अतः स प्रत्यय. आगमापायित्वात् अध्रुव. । अत एवात्राहम. सुखित्वादिप्रत्ययज्ञातृत्वमनुपपन्नम्, स्वपरिणामस्य स्वेनैव ज्ञेयत्वायोगात् । तदयमध्रुव. प्रत्ययोऽहम. परिणामरूपोऽवगम्यते, येन ध्रुवेण एतदुभयसाक्षिभूतेन स एव मम आत्मा अवगतिस्वरूपः इति 'अहं ब्रह्मास्मि'वाक्यार्थस्य ज्ञानं भवतीति । तदेतदुक्तं गीताभाष्ये 'इहिकर्मत्वापत्तिनिमित्ता हि जगतः सर्वा प्रवृत्तिः 'अहमिदं भोक्ष्ये', 'पश्यामीदम्', 'शृणोमीदम्', 'सुखमनुभवामि', 'दुःखमनुभवामि', 'एतदर्थमिदं करिष्ये', 'इदं जानामि'–इत्याद्या अवगतिनिष्ठा अवगत्यवसानैव' (गी.भा. १३-१०) इति । तदेवंभूतं साक्षितत्त्वमेव सद्रूपेति बोध्यत इति गम्यते मधुनयादिदृष्टान्तश्रुतिभ्य इति भावः ॥ ४६ ॥

# ११. अभिधाश्रुतेरपि प्रामाण्यम्

(मूलम्)

प्रमाणान्तरानवगम्यं निरस्ताशेषानर्थकारणान्मकद्वैतप्रपञ्चं सत्यज्ञानानन्दलक्षणम् आत्मानम् 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इत्यादिवाक्यं संशयितमिथ्याज्ञानाज्ञानप्रध्वंसमुखेन साक्षादपरोक्षात् करतलन्यस्तामलकवत् प्रतिपादयत्येव इत्यमद्दमिदितम् । तत्र केचिदाहुः – तत्त्वमस्यादिवाक्यैर्यथावस्थितवस्तुयाथात्म्यान्वाख्याननिष्ठैः, न यथोक्तोऽर्थः प्रतिपत्तुं शक्यते, अभिधाश्रुतित्वात् तेषाम् । न हि लोके अभिधाश्रुतेः, प्रमाणान्तरनिरपेक्षया 'नद्यास्तीरे फलानि सन्ति' इत्यादि-

कायाः प्रामाण्यमभ्युपगतम् । अतो नियोगमुखेनैव अभिधा-श्रुतेः प्रामाण्यं युक्तम्, प्रमाणान्तरनिरपेक्षत्वात् नियोगस्य ॥

अस्य परिहारार्थम् अशेषप्रत्यक्षादिप्रमेयत्वनिराकरणद्वारेण अतीन्द्रियार्थविषयत्वादभिधाश्रुतेः प्रामाण्यं सुप्तपुरुषप्रबोधक-वाक्यस्येव वक्तव्यम् इत्ययमारम्भः –

नित्यावगतिरूपत्वादन्यमानानपेक्षणात् ।
शब्दादिगुणहीनत्वात् संशयानवतारतः ॥ ४७ ॥

तृष्णानिष्ठीवनैर्नात्मा प्रत्यक्षाद्यैः प्रमीयते ।
प्रत्यगात्मत्वहेतोश्च स्वार्थत्वादप्रमेयतः ॥ ४८ ॥

(क्लेशापहारिणी)

एवमनवद्ये स्थितेऽपि वाक्यार्थज्ञानमार्गे केचिदत्र कुचोद्यमवतारयन्ति ; तन्निरसितुं वृत्तार्थं तावदनुवदति – 'प्रमाणान्तरानवष्टब्धम्' इत्यादिना । अथात्र कथं तेषाम् चोद्यम् ? – तदाह तत्त्वमस्यादिवाक्यानि सिद्धवस्तु-तत्त्वमनुवदन्ति नैवापूर्वं प्रमाणान्तरानवगतम् अवाक्यार्थं समर्पयितु शक्नुवन्ति । कुत एतत् ? अभिधाश्रुतित्वात् तेषाम् । तेषां वस्तुस्वभावान्वाख्यानपरत्वा-देवेत्यर्थः । अभिधाश्रुतेरपि किमिति प्रामाण्यं न स्यात् ? तत्राह – न हीति ॥ 'नद्यास्तीरे फलानि सन्ति' इत्येतद् वाक्यं प्रमाणान्तरसिद्धानुवादित्वे यथार्थबोधकं भवेत् ; अथ प्रमाणान्तरनिरपेक्षं तत्, न तावन्मात्रेणावितथमिति श्रद्धेयं भवेद् अनाप्तवाक्यत्वात् । तस्मात्, अभिधाश्रुतेः सापेक्षत्वात्, नानधि-गतार्थाधिगमयितृत्वमस्तीत्यतः प्रामाण्यार्थम् 'अहं ब्रह्मास्मि इति धारयेत्' इत्याद्यध्याहारेण नियोगद्वारेणैव प्रामाण्यं युक्तमभ्युपगन्तुम् इति नियोग-वादिना मतम् । अस्य चोद्यस्य परिहाराय परो ग्रन्थ आरभ्यत इत्याह – अस्येति ॥ अत्र प्रत्यक्षादिप्रमेयत्वनिराकरणं वाक्यस्य सापेक्षत्वशङ्कावारणार्थम्, अतीन्द्रियविषयत्वप्रदर्शनं तु तत्र श्रुतेरेव सुप्तप्रबोधकवाक्यत्वोपपादनार्थम् इति

ध्येयम् । सुप्तपुरुषप्रबोधननिदर्शनं पुनर्वाक्यस्य प्रमेयसंस्पर्शाभावेऽपि प्रमाजनकत्वसामर्थ्यसंभावनार्थमित्यग्रे (३-१०५) स्पष्टयति । तदेवम् अभिधाश्रुतेरपि प्रामाण्योपपादनार्थमुत्तरो ग्रन्थ इत्याह – इत्ययमारम्भ इति ॥

तत्र प्रत्यगात्मनः प्रमाणान्तराविषयत्वं तावदाह श्लोकद्वयेन 'नित्यावगतिरूपत्वात्', 'तृष्णानिष्ठीवनैः' इति च ॥ स्वयं नित्यावगतिरूपत्वात्, 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्' (बृ ४-३-३०) इत्यादिश्रुतेः, अत एवान्यमानानपेक्षणात् । अवगत्यर्थं हि मानान्तरापेक्षा – इति भावः । शब्दादिगुणहीनत्वात्, 'अशब्दम्' (का १-३-१५) इत्यादिश्रुतेः । शब्दादियुक्तं हि श्रोत्रादिप्रवृत्तिविषयः सत् प्रत्यक्षादिगोचरं भवेदिति भावः । संशयानन्तरतः 'अहं वा नाहं वा', 'अस्मि वा न वा' – इत्याकारकसंशयस्य संशयितुः प्रमातुरपि परमार्थस्वरूपभूतत्वात् । 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' (बृ ३ ४ १) इति श्रुतेः । पराग्वस्तुष्वेव हि देशकालादिव्यवहितेषु अस्तिनास्तीत्यादिसंशयग्रस्तेषु तत्त्वनिर्णयार्थं प्रमित्सेति प्रमाणव्यापारविषयत्वं भवेदिति भावः । स्वार्थत्वात् । अत एव प्रत्यगात्मत्वहेतोश्च ; प्रमातुर्व्यतिरिक्तं हि स्वसिद्धये प्रमाणयोग्यं भवेत्, न प्रमातृ स्वरूपमेव, प्रमाणस्यापि तदात्मकत्वात्, तद्गोचरत्वाच्च । 'न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः । एष त आत्मा सर्वान्तरः' (बृ ३ ४ २) इति श्रुतेः । न हि स्वात्मानं स्वयमेव शक्नुयाद्गोचरयितुम् इति भावः । स्वार्थत्वाच्च । 'अयमात्मा ब्रह्म सर्वानुभूः' (बृ २-५-१९) इति श्रुतेः । परार्थं हि वस्तु स्वार्थेन तदसंहतेन केनचित् प्रमाणादिना निश्चितं सदुपभुज्यते इति भावः । तदेवं नित्यावगतिरूपत्वादिस्वार्थत्वान्तेभ्यो हेतुभ्यः, यथावस्थितरूपोऽप्यात्मा न प्रमेयः । अप्रमेयत्वत एव तृष्णानिष्ठीवनैः कामप्रेरणयैव लब्धवृत्तिभिः प्रत्यक्षाद्यैः । प्रमित्सोर्हि प्रमाणव्यापार इत्याशयः । तैरीदृशैः प्रमाणैर्न प्रमीयते । अतो न वाक्यस्याभिधाश्रुतित्वेऽपि प्रत्यक्षाद्यपेक्षा इत्यभिप्रायः ॥ ४८ ॥

कायाः प्रामाण्यमभ्युपगतम् । अतो नियोगमुखेनैव अभिधाश्रुतेः प्रामाण्यं युक्तम्, प्रमाणान्तरनिरपेक्षत्वात् नियोगस्य ॥

अस्य परिहारार्थम् अशेषप्रत्यक्षादिप्रमेयत्वनिराकरणद्वारेण अतीन्द्रियार्थविषयत्वादभिधाश्रुतेः प्रामाण्यं सुप्तपुरुषप्रबोधकवाक्यस्येव वक्तव्यम् इत्ययमारम्भः —

नित्यावगतिरूपत्वादन्यमानानपेक्षणात् ।
शब्दादिगुणहीनत्वात् संशयानवतारतः ॥ ४७ ॥

तृष्णानिष्ठीवनैर्नात्मा प्रत्यक्षाद्यैः प्रमीयते ।
प्रत्यगात्मत्वहेतोश्च स्वार्थत्वादप्रमेयतः ॥ ४८ ॥

( क्लेशापहारिणी )

एवमनवद्ये स्थितेऽपि वाक्यार्थज्ञानमार्गे केचिदत्र कुचोद्यमवतारयन्ति, तन्निरसितुं वृत्तार्थं तावदनुवदति — 'प्रमाणान्तरानवष्टब्धम्' इत्यादिना । अथात्र कथं तेषाम् चोद्यम् ? — तदाह तत्त्वमस्यादिवाक्यानि सिद्धवस्तुतत्त्वमनुवदन्ति नैवापूर्वं प्रमाणान्तरानवगतम् अवाक्यार्थं समर्पयितुं शक्नुवन्ति । कुत एतत् ? अभिधाश्रुतित्वात् तेषाम् । तेषां वस्तुस्वभावान्वाख्यानपरत्वादेवेत्यर्थः । अभिधाश्रुतेरपि किमिति प्रामाण्यं न स्यात् ? तत्राह — न हीति ॥ 'नद्यास्तीरे फलानि सन्ति' इत्येतद् वाक्यं प्रमाणान्तरसिद्धानुवादित्वे यथार्थबोधकं भवेत्, अथ प्रमाणान्तरनिरपेक्षं तत्, न तावन्मात्रेणावितथमिति श्रद्धेयं भवेद् अनाप्तवाक्यत्वात् । तस्मात्, अभिधाश्रुतेः सापेक्षत्वात्, नानधिगतार्थाधिगमयितृत्वमम्नीत्यत प्रामाण्यार्थम् 'अहं ब्रह्मास्मि इति धारयेत्' इत्याद्यध्याहारेण नियोगद्वारेणैव प्रामाण्यं युक्तमभ्युपगन्तुम् इति नियोगवादिनां मतम् । अस्य चोद्यस्य परिहाराय परो ग्रन्थ आरभ्यत इत्याह — अस्येति ॥ अत्र प्रत्यक्षादिप्रमेयत्वनिराकरणं वाक्यस्य सापेक्षत्वशङ्कावारणार्थम्, अतीन्द्रियविषयत्वप्रदर्शनं च तत्र श्रुतेरेव लब्धावकाशत्वोपपादनार्थम् इति

ध्येयम्। सुप्तपुरुषप्रबोधननिदर्शनं पुनर्वाक्यस्य प्रमेयसंस्पर्शाभावेऽपि प्रमाजनकत्वसामर्थ्यसमाधानार्थमित्यग्रे (३-१०५) स्पष्टयति। तदेवम् अभिधाश्रुतेरपि प्रामाण्योपपादनार्थमुत्तरो ग्रन्थ इत्याह – इत्ययमारम्भ इति॥

तत्र प्रत्यगात्मनः प्रमाणान्तराविषयत्वं तावदाह श्लोकद्वयेन 'नित्यावगतिरूपत्वात्', 'तृष्णानिष्ठीवनैः' इति च॥ स्वयं नित्यावगतिरूपत्वात्, 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्' (बृ ४-३-३०) इत्यादिश्रुतेः, अत एवान्यमानानपेक्षणात्। अनवगतार्थे हि मानस्यापेक्षा – इति भावः। शब्दादिगुणहीनत्वात्, 'अशब्दम्' (का १-३-१५) इत्यादिश्रुतेः। शब्दादियुक्तं हि श्रोत्रादिप्रवृत्तिविषयं सत् प्रत्यक्षादिगोचरं भवेदिति भावः। सद्व्यानवतारतः 'अहं वा नाहं वा', 'अस्ति वा न वा' – इत्याकारकसंशयस्य संशयितुं प्रमातुरपि परमार्थस्वरूपभूतत्वात्। 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' (बृ ३ ४ १) इति श्रुतेः। पराग्वस्तुष्वेव हि देशकालादिव्यवहितेषु अस्तिनास्तीत्यादिसंशयग्रस्तेषु तत्त्वनिर्णयार्थं प्रमित्सेति प्रमाणव्यापारविषयत्वं भवेदिति भावः। स्वार्थत्वात्। अत एव प्रत्यगात्मत्वहेतोश्च; प्रमातुर्व्यतिरिक्तं हि स्वसिद्धये प्रमाणयोग्यं भवेत्, न प्रमातुः स्वरूपमेव, प्रमाणस्यापि तदात्मकत्वात्, तद्गोचरत्वाच्च। 'न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः। एष त आत्मा सर्वान्तरः' (बृ ३ ४ २) इति श्रुतेः। न हि स्वात्मानं स्वयमेव शक्नुयाद्गोचरयितुम् इति भावः। सार्थत्वाच्च। 'अयमात्मा ब्रह्म सर्वानुभूः' (बृ २-५-१९) इति श्रुतेः। परार्थं हि वस्तु स्वार्थेन तदसंहतेन केनचित् प्रमाणादिना निश्चितं सदुपयुज्यते इति भावः। तदेवं नित्यावगतिरूपत्वादिस्वाधत्वान्तेभ्यो हेतुभ्यः, यथावस्थितरूपोऽप्यात्मा न प्रमेयः। अप्रमेयत्वत एव तृष्णानिष्ठीवनैः कामप्रेरणयैव लब्धवृत्तिभिः प्रत्यक्षाद्यैः। प्रमित्सोर्हि प्रमाणव्यापार इत्याशयः। तैरीदृशैः प्रमाणैर्न प्रमीयते। अतो न वाक्यस्याभिधाश्रुतित्वेऽपि अन्यमानापेक्षा इत्यभिप्रायः॥ ४८॥

(मूलम्)

श्रुतिरपि इममर्थं निर्वदति —

दिदृक्षितपरिच्छिन्नपराग्रूपादिसंश्रयात् ।
विपरीतमतो दृष्ट्या स्वतोबुद्धं न पश्यति ॥ ४९ ॥

न्यायसिद्धमतो वक्ति दृष्टेर्द्रष्टारमात्मनः ।
न पश्येः प्रत्यगात्मानं प्रमाणं श्रुतिरादरात् ॥ ५० ॥

(क्लेशापहारिणी)

अत एव श्रुतिरप्यात्मनः प्रमाणाविषयतामाहेति वदच्छ्लोकम् अवतारयति — श्रुतिरपीति ॥

श्रुतेरभिप्रायं तावद् वर्णयति — दिदृक्षितेति । अतः प्रत्यक्षादीनां तृष्णानिष्ठीवनत्वादेव बहिर्विषयत्वात् दिदृक्षितात् दृश्यात्, परिच्छिन्नात् देशकालवस्तुपरिच्छेदवतः, पराग्भूतात्, रूपादिसंश्रयात् विपरीतं इमूपम्, अनन्तम्, प्रत्यग्भूतम्, रूपादिहीनम् । सर्वप्रमेयस्वभावविलक्षणम् इत्येतत् । ईदृशं स्वतोबुद्धं नित्यचैतन्यस्वरूपं प्रत्यक्षरूपया दृष्ट्या न कश्चिदपि पश्यतीत्यर्थः ॥ ४९ ॥

इत्येतद्धेतोः श्रुतिः किं वक्ति? — इत्येतदुत्तरत्वेन श्लोकमाह — न्यायसिद्धम् इति ॥ पूर्वश्लोकोपवर्णितयुक्तिसिद्धं प्रमाणभूता श्रुतिः, आदरात् तात्पर्येण वक्ति । कथम्? आत्मनः दृष्टेर्द्रष्टारं नित्यया दृष्ट्या व्यापारं प्रत्यगात्मानं न पश्येः । तत्र लौकिकदृष्टेः कर्मभूतायाः द्रष्टारं स्वकीयया नित्यया दृष्ट्या व्यापारं न पश्येः, द्रष्टुं न शक्नुयाः । सा हि लौकिकी दृष्टिः बाह्यरूपमात्रव्यञ्जने अभिव्यक्ता स्वात्मनोऽपि स्वरूपदृष्ट्या व्यापारं व्याप्तुं न कदाचिदपि प्रभवेत् इत्यभिप्रायः ॥ ५० ॥

(मूलम्)

अनुमानाविषयत्वे अन्वदपि कारणमुच्यते —

अन्यत्रस्य परात्मगतं संबन्धग्रहणं यतः ।
आत्मनोऽतोऽनुमित्याऽस्यानुमतो न कथञ्चन ॥ ५१ ॥

( क्लेशापहारिणी )

यद्यपि प्रत्यक्षाविषयत्वे समुदाहृतदिदृक्षितपरिच्छिन्नत्वादिरूपवैलक्षण्य लक्षणो हेतुरेवालम् अनुमानाविषयत्वोपपादनाय, तथापि तत्र हेत्वन्तर मप्युच्यते आगामिश्लोकेनेत्याह – **अनुमानेति** ॥

तमेव हेत्वन्तरमाह श्लोकेन – **प्रत्यक्षस्येति** ॥ न हि लिङ्गलिङ्गि सम्बन्धज्ञानं विना अनुमितिर्भवति । लिङ्गं तु प्रत्यक्षग्राह्यं पराग्भूतम् । न च पराक्प्रतीचो कश्चन सम्बन्ध समस्ति । तस्माप्यात्मनोऽनुमित्या न कथञ्चन अनुभव स्यात् इत्यक्षरयोजना ॥ ५१ ॥

( मूलम् )

एवमयं प्रमातृप्रमाणप्रमेयव्यवहारः सर्व एव पराचीनविषय एव, न प्रतीचीनमात्मानम् अवगाहयितुमलम् । एवं च सति, अनेनैव यथोक्तोऽर्थोऽवमातु शक्यत इत्याह –

**प्रमाणव्यवहारोऽयं सर्व एव पराग्यतः ।**
**सुविचार्याप्यतोऽनेन युष्मद्येव दिदृक्षते ॥ ५२ ॥**

( क्लेशापहारिणी )

अनुमानविषयत्वे अपहस्तिते सकलेतरप्रमाणविषयत्वमपि निराकृतमेव भवति । न्यायस्य तुल्यत्वात् इत्यभिप्रेत्य उपसंहरति – **एवमयमिति** ॥ यथोक्तोऽर्थं वाक्येतरप्रमाणानधिगम्यत्वमात्मन ॥

**प्रमाणव्यवहार इति** ॥ यत सर्वोऽयं प्रमाणव्यवहार प्रमाण व्यापार पराग्विषय एव, अत प्रमाणसाधनोऽयं पुरुष सुविचार्यापि अन्वय व्यतिरेकं कृत्वापि प्रत्यक्षादिना युष्मद्येव अनात्मन्येव आत्मानं दिदृक्षते द्रष्टुमिच्छति । सा च दिदृक्षा विफला । उक्तहेतोरेवेति भाव ॥ ५२ ॥

( मूलम् )

यस्माद् लौकिकप्रत्यक्षादिप्रमाणानधिगम्योऽहमस्मीति-वाक्यार्थः, तस्मात्–

अन्वयव्यतिरेकाभ्यां निरस्याऽऽप्राणतो यतेः[1] ।
वीक्षापन्नस्य कोऽस्मीति सदसीति श्रुतिर्जगौ ॥ ५३ ॥

( क्लेशापहारिणी )

अत एवाभिधाश्रुतेस्तत्त्वमस्यादिवाक्यस्यैवात्र प्रामाण्यमित्याह – यस्मादिति ॥ तस्मात् 'सदसीति श्रुतिर्जगौ' इति श्लोकस्थेन सम्बन्ध ॥

अन्वयव्यतिरेकाभ्यामिति ॥ आप्राणत प्राणान्तम् अन्वयव्यतिरेकाभ्या निरस्यापि कोऽस्मीति वीक्षापन्नस्य यते इते श्रुति तद् भूमब्रह्मैव त्वमसीति जगौ आचचक्षे अत तस्या एवात्राज्ञाननिरसनसामर्थ्यमिति भाव ॥

अत्रेदमवधेयम् – नारदसनत्कुमारसंवादव्याजेन श्रुति, नामादि प्राणान्तम् अनात्मविशेषमेव उत्तरोत्तर भूयस्त्वेनोपदिश्य पूर्वपूर्वं निरस्यन्ती अन्तिमपर्यायगतस्य प्राणस्य सर्वात्मकतामुपदिदेश । तमात्मत्वेनाभिमन्यमानो नामाद्याशान्तमतीत्य वर्तमानत्वात् अतिवादी भवतीति प्राणब्रह्मज्ञ तुष्टाव । जिज्ञासुस्तावतैव परितुष्टस्तदात्मत्वेनैवावस्थितो मा भूदिति प्राणादपि भूया नस्त्यात्मा परमार्थतो भूमा इति विजिज्ञापयिषया स्वत एव तदाख्यातु प्रवृत्ते 'एष तु वा अतिवदति यस्सत्येनातिवदतीत्य दि (छा)। किं नु स्यादद सत्य नाम' – इति जिज्ञासमान क्रमक्रमेण विज्ञानमनननिष्ठाद्वारेणाधिगन्तव्य तद् सुखरूप भूमाख्य ब्रह्मोपदिदेश । तमेव च भूमानम् अहंशब्दलक्ष्यत्वेन शुद्धात्मत्वेन चान्ते (छा ७-२५-१, २) वर्णयाबभूव – इति स्थिति । तमिममेवा नात्मनिरसनप्रकार परामृश्य प्रागप्युक्तम् 'नामादिभ्य परो भूमा निष्कलोऽकारकोऽक्रिय । स एवात्मवतामात्मा स्वत सिद्ध स एव न ॥ (२-५७) इति । अत्र 'सदसीति श्रुतिर्जगौ' इत्युक्तिस्तु सर्वत्रापि ब्रह्मात्मैकत्वोपदेश स्थले 'तत्त्वमसि' इत्यत्रैव सन्मात्र एव निर्विशेष परमात्मा जिज्ञासोरात्मत्वेन विवक्ष्यत इति स्फोरणाय । 'तदसीति' इति पाठेऽप्ययमेवाभिप्राय ॥ ५३ ॥

---

[1] 'यत ' इत्यतोऽयमेव पाठो वरीयान् । तथा हि अवतरणिकावाक्यस्थेन 'तस्मात्' इत्यनेन यतार्थता वार्यते । 'यते ' इत्यस्य यतमानस्य जिज्ञासोरित्यर्थो बोध्य ॥

## १२. अन्वयव्यतिरेकन्यायसंक्षेपः

( मूलम् )

सोऽयम् अन्वयव्यतिरेकन्याय एतावानेव (१) यदवसानो वाक्यार्थस्तदभिज्ञस्य 'अहं ब्रह्मास्मि' इत्याविर्भवति, द्रष्टृदृश्य-विभागेन आगमापायिसाक्षिविभागेन च श्रुत्यभ्युपगमतः सङ्क्षिप्योच्यते –

दृश्यत्वाद् घटवद्देहो देहवच्चेन्द्रियाण्यपि ।
मनश्चेन्द्रियवज्ज्ञेयं मनोवन्निश्चयादिमत् ॥ ५४ ॥

( चेतानन्दकारिणी )

तदेव प्रमाणान्तराविषयत्वादात्मन, वाक्यमेवाभिधाश्रुतिरपि तत्र प्रमाणमित्युपपादितम् । वाक्यार्थज्ञानाङ्गत्वेन श्रुत्यभ्युपगतान्वयव्यतिरेकन्याय मनुमत्य पूर्वोक्तमेव पुनरपि सङ्क्षिप्यानुवदति निषिद्धाशङ्कान्तर परिहरिष्यन्–सोऽयमिति ॥ 'स' पूर्वाध्याये विस्तरेण त्वम्पदार्थविवेकोदयार्थम् (२ ११ प्रभृति ९५तमश्लोकपर्यन्तम्) वर्णित । 'अयम्' पुनरप्यस्मिन्नध्याये वाक्यार्थ व्याख्यानप्रसङ्गेन (३-१०प्रभृति ३-४३तमश्लोकपर्यन्तम्) निर्दिष्ट अन्वयव्यतिरेकन्याय, एतावानेव एतावत्पर्यन्त एव, यदवसान, यत्पर्यवसाने उद्भवन् 'अहं ब्रह्मास्मि' इति वाक्यार्थस्तदन्वयव्यतिरेकाभिज्ञस्य भवति । पदार्थज्ञाननान्तरीयक वाक्यार्थज्ञानम् इत्युक्त भवति । सोऽयम् द्रष्टृदृश्य विभागेन, आगमापायिसाक्षिविभागेन श्रुत्यभ्युपगमत, श्रुत्यभ्युपगमानुसारेण इदानीं सङ्क्षिप्य उच्यते इत्यर्थ । अथवा 'एतावानेव' इत्यधिक पाठम् अध्याहृत्य यदवसाने वाक्यार्थ आविर्भवति, तदभिज्ञस्य, सोऽयमन्वयव्यतिरेक-न्याय पूर्वाध्याये विस्तृत अस्मिन्नध्याये च प्रपञ्चित (१) द्रष्टृदृश्य विभागेन, आगमापायिसाक्षिविभागेन च श्रुत्यभ्युपगमत सङ्क्षिप्योच्यते इत्येवमन्वययोजना कृता सुखावबोधकारिणी । पूर्वश्लोके हि श्रुत्यनुग्राहकोऽन्वय-व्यतिरेकन्याय द्विप्रकार एव प्रदर्शित । अध्यारोपापवादन्यायमाश्रित्य ;

म्मारितश्च संबन्धग्रन्थे – " (१) अज्ञानोत्थबुद्ध्यादिकर्तृत्वोपाधिमात्मान परिगृह्यैव अन्वयव्यतिरेकाभ्याम् अह सुखी दु खी च इत्यहङ्कारादेरनात्म धर्मत्वमुक्तम्। (२) अथेदानीम् अविद्यापरिकल्पित साक्षित्वमाश्रित्य कर्तृत्वाद्यशेषपरिणामप्रतिषेधमाह " (२–५८) इत्यत्र । तदेव पुनरिह सङ्क्षिप्योच्यतेऽन्वारम्भेण वाक्यस्य निर्विषयत्वशङ्कापरिहारार्थमिति विशेष ॥

तत्र द्रष्टृदृश्यविभागेनान्वयव्यतिरेकौ तावद् दर्शयति दृश्यत्वादिति ॥ घटवद् दृश्यत्वात्, देहो दृग्रूपादात्मनो व्यतिरिक्त, देहवच्च इन्द्रियाण्यप्यात्म व्यतिरिक्तान्येव। इन्द्रियवन्मनश्च अनात्मैव, दृश्यत्वादेव, मनोवत् निश्चयादि वृत्तिमदन्त करण बुद्ध्याख्यमपि अनात्मरूपमेव । दृश्यत्वाविशेषादित्यर्थ ॥ ५४ ॥

( मूलम् )

तथा सकलकार्यकारणागमापायिविभागसाक्षित्वेनापि –

प्रागसद् याति पश्चात् सत् सच्च यायादसत्तथा ।
अनात्माभिजनं तस्माद्विपरीतस्त्वयं दृशिः ॥ ५५ ॥

( क्लेशापहारिणी )

अधुना द्वितीयोऽन्वयव्यतिरेकप्रकार उच्यत इत्याह – तथेति ॥ सकलकार्यकारणागमापायिसाक्षिविभागेनापि । अन्वयव्यतिरेकौ उच्येते इति शेष ॥

प्रागिति ॥ अनात्माभिजनम्, अनात्मवश्यम्, अनात्मकार्यम् इति यावत् । कार्यं प्राक् असत् । स्वरूपेणेति शेष, कारणरूपेणास्तित्वा भ्युपगमात् । पश्चात् सत् । सच्च भूत्वा प्र नसादूर्ध्वं तथैव असत्त्व यायात् । एव मृदादिकारणस्यापि स्वकारणव्यतिरेकेणानुपलब्धे, सत्त्वप्रतीतिर्मृषैव जन्मप्रध्वसाभ्या प्रागूर्ध्वं चानुपलब्धे – इति द्रष्टव्यम् । तदेव सर्वमनात्मनि कार्यकारणभावेन प्रतीयमानम् व्यभिचरद्रूपमेव, आगमापायित्वात्, जन्मन आगमत्वस्य नाशस्यापायत्वमिति सार्वजनीनमेतत् इत्यर्थ । अयम् आत्मा तु अनात्मन सकाशाद् विपरीत, आगमापायित्वरहित, यतोऽय दृशि,

तत्साक्षी । आगमापायिसाक्षित्वादेव तस्य कूटस्थनित्यत्वसिद्धिरित्यर्थः । 'स्वयंदृशिः' इति पाठे, अनन्यायत्तचैतन्यस्वरूपः, न तु घटादिवत् परप्रकाश्यत्वमात्रेण लब्धसत्ताकः इत्यर्थः ॥ ५५ ॥

( मूलम् )

तत्र घटादीनां दृश्यानाम् अनात्मत्वं द्रष्ट्रात्मपूर्वकं प्रत्यक्षेणैव प्रमाणेनोपलभ्य, अनात्मनश्च असाधारणान् धर्मान् अवधार्य, तैर्दृश्यत्वागमापायादिभिर्धर्मैः शरीरेन्द्रियमनोनिश्चयादिवृत्तीरनात्मतया व्युदस्य, अहंवृत्तिमतोऽपि दृश्यत्वाविशेषात् द्रष्टृपूर्वकत्वमवसीयते । तदेतदाह –

घटादयो यथा लिङ्गं स्युः परम्परयाहमः ।
दृश्यत्वादहमप्येवं लिङ्गं स्याद्द्रष्टुरात्मनः ॥ ५६ ॥

( क्लेशापहारिणी )

अथेदानीं 'दृश्यत्वाद् घटवत्' (१-५४) इत्यत्रोक्तमन्तःकरणस्यानात्मत्वमवष्टभ्य, अहंप्रत्ययगम्यस्याप्यनात्मत्वमुच्यते । तदाह – तत्रेति ॥

घटादय इति ॥ घटादयो विषयाः, यथा परम्परया देहेन्द्रियमनोबुद्धिपरम्परया द्रष्टुरहमो दृश्यत्वात् लिङ्गं स्युः, 'देहोऽयं द्रष्टृपूर्वकः, दृश्यत्वात् घटवत्', 'इन्द्रियाणि द्रष्टृपूर्वकाणि, दृश्यत्वात्, देहवत्' इत्येवमादिरीत्या इत्यर्थः । एवम् अहमपि द्रष्टुरात्मनो लिङ्गं स्यात् । अहंप्रत्ययगम्यः स्वव्यतिरिक्तद्रष्टृपूर्वकः, दृश्यत्वात्, बुद्ध्यादिवत् – इत्यनुमाने तात्पर्यम् ॥ ५६ ॥

## १३ - आत्मा वाक्यैकगम्यः

( मूलम् )

ननु द्रष्टृदर्शनदृश्यानां जाग्रत्स्वप्नसुषुप्तेषु आगमापायदर्शनात् यत्साक्षिकौ तेषामागमापायौ, स आगमापाय-

विभागरहित आत्मा यथा यन्निबन्धनौ जगतः प्रकाशाप्रकाशौ, स प्रकाशाप्रकाशविभागरहितः सूर्य इति । यदा चैवम्, तदा वाक्यैकगम्यस्यार्थस्य अनुदितानस्तमितविज्ञानमात्रस्वभावस्य, अनुमानेनैव प्रतिपन्नत्वात् पुनरपि वाक्यस्य निर्विषयत्वप्रसङ्गः। नैष दोषः। लिङ्गव्यवधानेन तत्प्रतिपत्तेः। ननु साक्षादपरोक्षात् आत्मस्वभावेन अनात्मनो हानोपादानयोः संबन्धग्रहणात्, कम् अतिशयं वाक्यं कुर्यात्?

मैवं वोचः। लिङ्गाधीनत्वात् तत्प्रतिपत्तेः। न हि लिङ्गव्यवधानेनाऽऽत्मप्रतिपत्तिः साक्षात्प्रतिपत्तिर्भवति। 'यमेवैष वृणुते तेन लभ्यः' (का. १–२–२३) इति श्रुतेः। अत आह –

लिङ्गमस्तित्वनिष्ठत्वान्न स्याद् वाक्यार्थबोधकम्।
सदसद्बुद्धिवत्तात्मायमतो वाक्यात् प्रतीयते ॥ ५७ ॥

( क्लेशापहारिणी )

नन्वेव द्रष्ट्रादीनामागमापायित्वेन तत्साक्षिणोऽन्वयव्यतिरेकाभ्यामेव निष्कर्षे सिद्धे, वाक्यस्य निर्विषयत्वमेव प्राप्नोतीति शङ्कते – नन्विति ॥ द्रष्ट्रादीनामागम जाग्रत्स्वप्नयो। जाग्रति तावत् तत्त्वेन, स्वप्ने च तदाभासत्वेन। तदपाय सुषुप्ते, स्वरूपव्यभिचारात्। एव च द्रष्ट्राद्यागमापाययोर्य साक्षी स आगमापायविभागरहितो भवितुमर्हति तन्निबन्धनत्वात् तेषामागमापायप्रतीतेरिति क्लिश्यते। अत्र दृष्टान्त सूर्य । यत्स्वरूपभूत प्रकाशसंबन्धतद्वियोगनिबन्धनौ जगत प्रकाशाप्रकाशौ स प्रकाशाप्रकाश विभागरहितो नित्यप्रकाश सूर्य इति दृष्टम्। तद्वदेवात्रापि, आत्मन आगमापायराहित्य सिध्यतीति भाव । यदा चैव युक्तिरनवद्येत्यनुमन्यते, तदा, अनुमानेनैव यथोक्तेन, आत्मस्वभावे अनुदितानस्तमितविज्ञानमात्रत्वेन निर्धारिते वाक्यस्य निर्विषयत्वमेव पुनरपि प्रसज्यते। यथा मिथ्याज्ञान

व्यतिरेकेणाज्ञानाभावात् तत्प्रसङ्ग आपादित पूर्वम् (३-६ श्लोकस्य सम्बन्धोक्तौ) एवमेवानुमानेनैव, साक्षिस्वरूपस्य शक्यनिर्धारणत्वात् वाक्यस्य विषयाभावप्रसङ्ग इहापाद्यत इति पुन शब्दार्थ ॥

परिहारमाह सिद्धान्ती – नैष दोषः इति । वाक्यस्य निर्विषयत्व प्रसङ्गरूपो दोषो नास्ति । कथम् ? लिङ्गव्यवधानेनात्मप्रतिपत्ते । न हि, अनुमानेन आत्मन साक्षात्प्रतिपत्ति समस्तीत्याशय । एतदेव विशदीकर्तुं शङ्कामुत्थापयति – नन्विति ॥ अनात्मनो हान सुषुप्ते, उपादान च जाग स्वप्नयोरिति हानोपादानयो साक्ष्यत्वेन, आत्मनश्च तत्साक्षित्वेन साक्षादेव साक्षिसाक्ष्यसम्बन्धग्रहणात्, इतोऽपि कमतिशयम् आत्मज्ञाने वाक्य कुर्यात् ? इयमेव हि साक्षात्प्रतिपत्तिर्नामाऽऽत्मन – इति भाव । समाधत्ते – येन वोचः इति । कुत ? लिङ्गाधीनत्वात् तत्प्रतिपत्ते । अयमाशय –अनात्मनो हि प्रकाशाप्रकाशौ साक्षात् प्रतिपद्येते नात्मन । यथा पर्वते धूम एव लिङ्ग साक्षात् प्रतिपद्यते, न तु तत्सम्बद्धो वह्निरपि, तद्वद् अत्रापि आत्मप्रतिपत्तिर्न साक्षाद् भवति, किं तु लिङ्गद्वारैव । इद पूर्वमप्युक्तम् 'बुद्ध्यादीनामनात्मत्व लिङ्गादपि च सिध्यति । निवृत्तिमात्रावता नेतीत्यतो वाक्य समाश्रयेत् ॥'(२ ३३) इति । सदसद्विलक्षणात्मप्रतिपत्तिस्तु समपेक्षिता, सा च वाक्याद् भवति – इति स्वाशयमाविष्कर्तुं पुनरिहाप्युच्यत इति न पौनरुक्त्यम् । साक्षात्कारश्च मोक्षार्थमेष्टव्य । 'यमेवैष वृणुते तेन लभ्य ' (का १-२-२३) इति श्रुते । अत्र हि श्रुतौ निरन्तरेणानन्यवरणेन आत्मा लभ्य । 'तस्यैष आत्मा विवृणुते तनूं स्वाम्' तमेव स्वात्मा स्वस्वरूपाविष्कारेणानुगृह्णाति इत्युच्यते । उक्तार्थे श्लोक आगामीयाह – अत आहेति ॥

लिङ्गमिति ॥ अस्तित्वनिष्ठत्वात् अस्त्यात्मा दृष्टृत्वागमापायसाक्षी इत्यात्मसद्भावमात्रे पर्यवसानात् न लिङ्ग वाक्यार्थबोधक स्यात् । कीदृश तर्ह्यात्मान वाक्यमवबोधयतीति ? तत्राह – सदसत्तुरीयतात्मायम् इति । भावाभावविकल्पशून्यो निर्विशेष आत्मा वाक्यादेव प्रतीयते, तत एवाह मीदृश इति साक्षात्प्रतिपत्तिर्नीयत इत्यर्थ । न ह्यवसात्रयव्यतिरिक्तत्वमात्रबोधकम्

'अहमात्मा अवस्थात्रयातीत' इत्याकारक ब्रह्मात्मज्ञान भवति इत्याशय । यथोक्त संबन्धवार्तिके 'जाग्रत्स्वप्नसुषुप्तेभ्यो यदि नामातिरेक्त । व्यक्तिभ्यो गोत्ववद्दृष्ट ब्रह्म वेऽस्य किमागतम् ॥' (स वा. ८५३) इति । अतोऽस्त्यन्य दपि कार्यं वाक्यव्यापारेणेत्यभिप्राय ॥ ५७ ॥

(मूलम्)

ननु यदि व्यावृत्तसदसद्विकल्पजालं वस्त्वभीष्टं वाक्याद् भवतः, तथापि तृत्सार्यते वाक्यविषया तृष्णा । यस्मात्, अन्तरेणापि वाक्यश्रवणं निरस्ताशेषविकल्पम् आगोपाला-विपालपण्डितं सुषुप्ते वस्तु सिद्धम् । अतो नार्थो वाक्य-श्रवणेन ॥

नैतदेवम् । किं कारणम् ? सर्वानर्थबीजस्य आत्मानव-बोधस्य सुषुप्ते संभवात् । यदि हि सुषुप्ते अज्ञानं नाभविष्यत्, अन्तरेणापि वेदान्तवाक्यश्रवणमनननिदिध्यासनानि 'अहं ब्रह्मास्मि' इत्यध्यवसायात् सर्वप्राणभृतामपि स्वरसत एव सुषुप्तप्रतिपत्तेः सकलसंसारोच्छित्तिप्रसङ्गः । न च कैवल्यात् पुनरुत्थानं न्याय्यम् । अनिर्मोक्षप्रसङ्गात् । न च 'अन्य एव सुषुप्तः, अन्य एवोत्थितः' इति शक्यं वक्तुम् 'नाद्राक्षमहं सुषुप्तेऽन्यत् किञ्चिदपि' इति उत्थितस्य प्रत्यभिज्ञादर्शनात् । तस्मात्, अवश्यं सुषुप्ते अज्ञानमभ्युपगन्तव्यम् । ननु यदि तत्र अज्ञानमभविष्यत्, रागद्वेषघटाज्ञानादिवत् प्रत्यक्ष-मभविष्यत् । यथेह लोके 'घटं न जानामि' इत्यज्ञानम् अव्यवहितं प्रत्यक्षम् । अत्रोच्यते । न । अभिव्यञ्जकाभावात् । कथमभिव्यञ्जकाभाव इति चेत्, शृणु –

याह्यां वृत्तिमनुत्पाद्य व्यक्तिः साक्षाद्यमो यथा ।
नर्तेऽन्तःकरणं तद्वद् ध्वान्तस्य व्यक्तिराञ्जसी ॥ ५८ ॥

( क्लेशापहारिणी )

पुनरपि वाक्यस्य निर्विषयतामेव प्रकारान्तरेण चोदयति नन्विति ॥ यद्यन्वयव्यतिरेकानुमानात् आत्मास्तित्वमात्रं सिध्यति, न तु व्यावृत्तसद्-सद्विकल्पजालं सर्वविकल्पशून्यम् आत्मवस्तु, तच्च वाक्यादेव सिध्यतीति मन्यसे तदर्थं च यदि वाक्यविषया तृष्णा भवतो भवति, तथापि तु सा तृष्णा प्रकारान्तरेणोत्सार्यते अपनीयते । कथमित्यत आह – यस्मादिति ॥ 'आगोपालाविपालपण्डितम्' इति विद्वदविदुषोः सिद्धिः समाना इत्यभिप्रायेण । न हि गोपालादयः स्वप्नेऽपि कृतवाक्यश्रवणाः, अथ च तेषां निरस्ताशेषविकल्पम् आत्मवस्तु सिद्धम् इति कुतं वाक्यश्रवणेनेत्यर्थः ॥

तदेतत् प्रतिवक्ति सिद्धान्ती नैतदेवमिति ॥ इदमत्राकूतम् । सुषुप्ते निर्विकल्पं वस्तु सिद्धम् इति ब्रुवतः कोऽभिप्रायः ? किं निर्विकल्पात्मवस्तु सुषुप्तेऽस्तीति, किं वा तादृशं वस्तु वाक्यश्रवणं विनैव सर्वेषामपि सुनिश्चितमस्तीति ? यदि तावत् निर्विकल्पं वस्तु तत्रास्तीति, अत्यल्पं तदुच्यते यतः सर्वत्र सर्वदापि निर्विकल्पवस्त्वेव वस्तुतोऽस्ति न द्वितीयमण्वपीत्येवाभ्युपगम्यते वेदान्तिभिः । तत्प्रतिपादनार्थमेव हि सर्वेषां वेदान्तानामारम्भ इति ते वदन्तीति । अथ तादृशं वस्तु तत्रैव निश्चीयत इति । तदसत् । किं कारणम् ? सर्वानर्थबीजस्य आत्माऽनवबोधस्य सुषुप्ते संभवात् । ननु कथं तत्र तत्संभव ? तत्राह – यदि हीति । न हि कश्चिदपि सुषुप्ते 'अहं ब्रह्मास्मि' इत्यवस्यति ; तेन अवश्यमज्ञानसद्भावस्तत्राभ्युपगन्तव्यो भवतीत्यर्थ । न चाध्यवसायसाधनानि श्रवणादीनि सुषुप्ते सन्ति । तत्र श्रवणं वेदान्तवाक्यस्य, तदर्थनिश्चयार्थमनुरूपतर्को मननम्, ताभ्यां श्रवणमननाभ्यामनुसञ्जात स्वात्मानुभव एव निदिध्यासनं नाम । तथा हि श्रुतिः 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. २–४–५) इति श्रवणादीनि निश्चयेऽध्यवसायकारणत्वेनेति भाव । नन्वध्यवसायोऽप्यभ्युपगम्यताम् अन्तरेणैव श्रवणादिसाधनम् – इत्यनुभवानारूढमेवाभ्युपयन्तं प्रत्याह – सर्वप्राणभृतामपीति । सर्वेषामपि शास्त्रचोदनां विनैव सुषुप्ति-

प्रतिपत्ते, तन्मात्रेण सकलसंसारोच्छित्तिप्रसङ्ग, संसारहेतोरज्ञानस्य विनाऽऽयास मपायात् इति भाव । ततश्च सुसमात्र एव कैवल्य प्राप्नुयात् इत्यभिप्राय । यस्तु कैवल्यमर्पीति वैयात्याद् वदन्त प्रत्याचष्टे – न च कैवल्यादिति । यदि हि कैवल्य प्राप्ताना पुन सुषुप्तादुत्थान स्यात् तर्हि न कस्यचिदात्यन्तिकी मुक्ति स्यादित्याह – अनिर्मोक्षप्रसङ्गादिति । ततश्च मोक्षशास्त्रवैयर्थ्यमेव प्रसज्येतेति भाव । ननु च सुषुप्तिं गतस्य मुक्तिरेवेति न तस्य पुनरुत्थान भवति । तस्माच्च अन्य एवाय सुषुप्तादुत्थित इति कल्प्यते । तथा च नोक्त प्रसङ्ग इति । तत्राह – न चेति । 'न च शक्य वक्तुम्' इत्युक्तम् । कुत ? – इत्याह 'नाहमेवमह सुषुप्तेऽन्यत्किञ्चिदपीति प्रत्यभिज्ञा-दर्शनात्' इति । तथा च प्रत्यभिज्ञानतोऽनेकत्वावगमात् तद्विरुद्धमन्यत्व कल्पनम् इति भाव । तथा हि बादरायणीय सूत्रम् 'स एव तु कर्मानु स्मृतिशब्दविधिभ्य' (ब्र सू ३-२-९) इति । यथानसाधनमुपसहरति– तस्मादिति ॥

अथाक्षेप्ता सौषुप्ताज्ञानवादेऽनिष्ट प्रसञ्जयति – ननु यदीति । यथा घटाज्ञान प्रत्यक्ष भवति 'घट न जानामि' इति यथा वा रागद्वेषौ 'अत्राह रक्त', 'इदमह द्वेष्मि' इति, एव सुषुप्तेऽपि अभविष्यन् इत्यर्थ । 'अव्यवहितम्' इति विशेषण तु प्रत्यभिज्ञादिव्यवहारादिरियद्योतनार्थम् । न हि स्वाज्ञान कस्यैव जातुचिद् व्यवहितानुभवयोग्य भवेत्, येन कालत्रयव्यवधान मपक्षेत – इति भाव ॥

सिद्धान्ती तु प्रत्यक्षानुभवाभावे कारणमाह – अन्योन्यौ इति । नाज्ञानमत्र सुषुप्ते प्रत्यक्ष भवति । कुत ? अभिव्यञ्जकाभावात् । न हि चक्षुरादिव्यञ्जकाभावे रूपादे प्रत्यक्षतामिव्यक्तिर्भवेत् । एवमत्रापीति भाव । अभिव्यञ्जकाभावमेव आक्षेपसमाधानत्वेन श्लोकमवतारयन् स्फोरयति – 'कथम्' इत्यादिना, 'शृणु' इत्यन्तेन ॥

बाह्यमिति ॥ यथा घटस्य स्थितस्यापि अहम्, यावत् बुद्धि घटाद्याकाराम् अनुत्पाद्य न व्यक्ति स्यात् 'अहमिद जानामि' इति, एवम्

अभिव्यञ्जकम् अन्तःकरणम् ऋते न ध्वान्तस्य अज्ञानस्य आजसी अव्यवहित-प्रत्यक्षरूपा व्यक्तिर्भवति । उभयत्राप्यभिव्यञ्जकसापेक्षत्वस्य समानत्वात् इत्यभिप्रायः ॥

इदमत्रानुसंधेयम् — सुषुप्तौ सर्वानर्थबीजत्वेनाभ्युपगतम् अज्ञानं किं-रूपम् ?—इतीदं निरूप्यम् । यतोऽत्र ज्ञानाभावसंशयमिथ्याज्ञानतत्संस्कारेभ्यो व्यतिरिक्तं भावरूपम् अवस्थात्रयेऽपि दण्डायमानम् यत्किञ्चिदेव अव्यक्तादि-शब्दवाच्यम् सुषुप्ताववतिष्ठते, तदेव च सर्वस्याप्यध्यासस्योपादान-कारणमिति व्याख्यानप्रस्थानान्तरमनुरुन्धानाः केचिदभिप्रयन्ति । सोऽय-मविद्योपादानभेदवादः प्रागेव ग्रन्थसंदर्भे, अस्मिन्नध्याये (३-७) निराकृतोऽस्माभिरिति न पुनस्तस्योज्जीवनाशा अत्र भवति । कथं पुनरज्ञान-स्याभावमात्ररूपस्य सुषुप्तादुत्थाने कारणत्वमुपपद्यत इति ? अत्र ब्रूमः । नेह वार्तिकप्रस्थाने जाग्रत्स्वप्नयोः सुषुप्तस्य च उपादानोपादेयभावेन कार्यकारण-भावः क्वचिदप्याश्रितः, अतः सुषुप्तादुत्थाने किमप्युपादानकारणं मृग्यमिति ग्रन्थकाराशयाननुगुणमेतत् । यावद्धि नात्माज्ञानं वाक्येन निवर्त्यते, तावत् अवस्थात्रयवानहम् इति मिथ्याज्ञानमनुवर्तत एव, तत्र कोऽयमुपादानकारणा-न्वेषणे वृथा श्रमः ? तथा ह्युक्तं बृहद्वार्तिके नास्य स्वापः प्रबोधो वा कुतः स्वप्नस्य संभवः । प्रत्यक्स्वभाव एवास्य जाग्रत्स्वप्नसुषुप्तयः ॥ सुप्तः प्रबुद्ध इत्येवं स्वप्नं पश्यति चेति यः । विकल्प एष भूतानामविद्यायन्त्रितो मितम् ॥ (बृ. वा. २-१-२६४, २६५) इति ॥

किञ्च, सुषुप्ते सत्संपत्तिं ब्रुवाणा श्रुतिः, संपन्निज्ञानाभावे एकत्वमेव कारणम्—इत्याह मधुदृष्टान्तेन, न तु भावरूपाज्ञानसत्त्वम् । तद् यथा 'यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां रस गमयन्ति ॥ ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्य-मुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामह इति ॥ ' (छा. ६-९-१, २) इति ; सत्संपत्त्व-ज्ञानाभावमेव च सुषुप्तादुत्थाने निमित्तमिति चाह श्रुतिः 'त इह व्याघ्रो वा

सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति ' (छा ६–९–३) इति । भाष्यकारश्चैवमर्थत्वेनैव श्रुतिं व्याकरोत् ' यस्माच्चैवम् आत्मन सद्रूपत्वम् अज्ञात्वैव सत्सम्पद्यन्ते, अतस्ते इह लोके यत्कर्मनिमित्ता या या जातिं प्रतिपन्ना आसुर्व्याघ्रादीनाम्, व्याघ्रोऽहं सिंहोऽहम् इत्येवम् ते तत्कर्मज्ञानवासनाङ्किता सन्त सत्प्रविष्टा अपि तद्भावेनैव पुनराभवन्ति पुन सत आगत्य ॥ (छा. भा. पा. ५२९) इति । अतो ज्ञानाभावलक्षणाज्ञानवादेऽपि सर्वं सङ्गच्छत इति नात्राश्रुतचर माराज्ञानमाहात्म्यमिति ॥ ५८ ॥

## १४. अहंज्ञात्रोर्विवेके आक्षेपसमाधाने

( मूलम् )

कश्चिदतिक्रान्तं प्रतिस्मृत्य ' दृश्यत्वादहमप्येवं लिङ्गं स्याद् द्रष्टुरात्मनः ' (३–५६) इति निर्युक्तिकम् अभिहितम् – इत्याह । किं कारणम् ? अहंतज्ज्ञात्रोर्विवेकाप्रसिद्धेः । यथा इह घटदेवदत्तयोः ग्राह्यग्राहकत्वेन स्फुटतरो विभागः प्रसिद्धो लोके, न तथा इह अहंतज्ज्ञात्रोर्विभागोऽस्ति । तस्मात्, असाध्वेतदभिहितमिति । अत्रोच्यते –

दाह्यदाहकतैकत्वं यथा स्याद् वह्निदारुणोः ।
ज्ञेयज्ञात्रेकतैवं स्यादहंज्ञात्रोः परस्परम् ॥ ५९ ॥

( क्लेशापहारिणी )

एव तावत् अहङ्कारस्य, तज्ज्ञातारमात्मानं प्रति लिङ्गत्वमुक्त दृश्यत्वा विशेषाद् घटादिवदिति । अन्वयव्यतिरेकमात्राद् न कथञ्चिदपि वाक्यमन्तरेण निर्विकल्पात्मप्रतिपत्तिरित्यी युक्त प्रसङ्गागता शेपपरिहारेण । अथ प्रकृतमेवा हङ्कारलिङ्गत्वमधिकृत्य दृष्टान्तरमुद्भाव्य व्यपनीयत इत्याह – कश्चिदिति ॥ यथेद लोके घटदेवदत्तयो ' अह घटं गृह्णामि ' इति स्फुटतरो विभागोऽनु

भूयते घटस्य ग्राह्यत्वेन परात्त्वम्, देवदत्तस्य ग्राहकत्वेन प्रत्यक्त्वं च, न तथेह दार्ष्टान्तिके अहन्तज्ज्ञात्रोर्विभागोऽनुभूयते । 'अहमेव मां जानामि' इति ह्यनुभव, न त्वहमो व्यतिरिक्त कश्चिज्ज्ञाता स्फुटतर विभक्तोऽस्ति घटाद्व्यतिरिक्त इव । अतो 'दृश्यत्वाद्दहमप्येवम्' इति न साधूक्तमिति शङ्का । न हि स्वयमेव स्वस्यैव लिङ्गम्, स्वयमेव च स्वस्माद्विभक्तो ज्ञाता इति च श्लिष्ट भवेत् – इति भाव ॥

सिद्धान्ती तु शङ्कापरिहारार्थं श्लोकमवतारयन्नाह – अत्राभिधीयते इति दाह्यदाहकतैकत्रेति ॥ अयमाशय – नायमस्ति नियम, कर्तृकर्मणो स्फुटतरविभागप्रसिद्ध्यैव भाव्य सर्वत्रेति । वह्निदारुणो, दहनक्रियाकर्तृकर्मणोरुभयोरप्येकत्रैव दर्शनात् । तस्मात्, अहङ्कारोर्ज्ञेयत्वेन ज्ञातृत्वेन च पृथग्विभागस्य अप्रसिद्धावपि तयोर्ज्ञेयज्ञातृभावो न विरुद्ध । दृष्टान्तबलेनैव प्रत्यवतिष्ठमानस्य दृष्टान्तबलेनैव परिहारोऽयमभिप्रेत । सुषुप्तादावहङ्कार व्यभिचारोऽपि हीह शक्य उदाहर्तुम् । उक्त चेदम् 'आत्मनश्चेदहं धर्मं' (२–३२) इत्यत्रेत्यनुसन्धेयम् ॥ ५९ ॥

( मूलम् )

एवं तावदविद्योत्थस्य अन्तःकरणस्य बाह्यविषयनिमित्त-रूपावच्छेदाय अहङ्कृतिर्व्याप्रियते । तया अवच्छिन्नं सत् कूटस्थप्रत्यगात्मोपादानावबोधरूपस्य अव्यवधानतया विषय-भावं प्रतिपद्यत इति । तत्र तयोर्ज्ञात्रहन्तारूपयोरवभास्यावभासकत्वसम्बन्धव्यतिरेकेण नान्यत् संबन्धान्तरम् उपपद्यते । अहंतारूपं तु आत्मसात्कृत्वा अहंकञ्चुकं परिधाय उपकार्य-स्यापकार्यत्वक्षमः सन्[1] बाह्यविषयेण उपकारिणा अपकारिणा वा आत्मात्मीयं संबन्धं प्रतिपद्यते – तदभिधीयते –

इदज्ञानं भवेज्ज्ञातुर्ममज्ञानं तथाहमः ।
अज्ञानोपाधिनेद स्यादिक्रियातोऽहमो मम ॥ ६० ॥

1 'उपकार्यत्वोपकारकत्वक्षम सन्' इति मुद्रितपाठ एव परिवर्तित ॥

( क्लेशापहारिणी )

एवं तावदहंतज्ज्ञात्रोर्विवेकं प्रसाध्याथेदानीम् अहंधर्मवद् ज्ञातृत्वमप्याविद्यकमेवेत्येतज्ज्ञापयिष्यन् आत्मनो ज्ञातृत्वाहंस्वरूपयोरुपाधिभेदप्रयुक्तत्वं तावद्दर्शयिष्यामीत्याह – एवं तावदिति ॥ अविद्योत्थस्यान्तःकरणस्य अहंवृत्तिः बाह्यविषयनिमित्तरूपावच्छेदाय व्याप्रियते । बाह्यो विषयः शब्दादिः तन्निमित्तं यद्रूपम्, तत्तदाकारेण परिणामः ; तेन रूपेण अवच्छेदाय शब्दादिरूपपरिच्छित्त्यै व्याप्रियते । बाह्यविषयलक्षणं यन्निमित्तम् तद्रूपावच्छेदाय – इति वा योजना । वर्णितरीत्या विषयपरिच्छेदमात्रम् अहंवृत्तिव्यापारफलं चेत्, तस्य ज्ञातृत्वं कथं भवेत् ? न हि जडस्याहमः ज्ञानप्रकाशवत्त्वं समस्ति, तत्राह – तयावच्छिन्नं सदिति । बाह्यविषयलक्षणशब्दादिनिमित्तविशेषणमेतत् । उक्तविधया अहंवृत्त्या परिच्छिन्नं सद् बाह्यं वस्तु, कूटस्थप्रत्यगात्मनोपादानावबोधरूपस्य, ज्ञातुः इत्यर्थः । स हि ज्ञाता कूटस्थप्रत्यगात्मतद्ज्ञानचिदाभासैर्वेद्यः । यथोक्तं बृहद्वार्तिके ' चिदाभासैकमात्रेण तमः सिद्धिर्न मातृतः । संवित्तन्मोहचिद्विम्बैः प्रात्यक्ष्यं कर्तृरूपिणः ॥' (बृ. वा. ३-४-१०५) इति । स एव च ज्ञानादिवृत्त्याश्रयः । तदुक्तम् ' स्मृतिनिश्चितिसंशीतिरागादिद्विहिरात्मसु । अहंरूपेण योऽन्वेति स प्रमाता परो मतः ' (बृ. वा. ३-४-१०६) इति । अहंवृत्तेरव्यवधानतया ज्ञातृविषयत्वात्, तदवच्छिन्नबाह्यविषयरूपस्यापि तद्विषयत्वम् इति भावेनोक्तम् अवबोधरूपस्याव्यवधानतया विषयभावं प्रतिपद्यत इति । 'अहमिदं जानामि ' इति घटादिबाह्यवस्तुज्ञानम् अहंवृत्तिद्वारा ज्ञातुरव्यवहितप्रत्यक्षं भवतीत्युक्तं भवति ॥

ज्ञातुरहंविषयकं ज्ञानमपि संबन्धान्तरद्वारकमेव किं न स्यात्, अव्यवहितमेवेति कुतोऽवगम्यते ? इत्याशङ्क्य यथा अहंवृत्तिर्बाह्यवस्तुरूपपरिच्छेदाय इन्द्रियादिद्वारेण निर्गतेव व्याप्रियते संबन्धान्तरनिदानं च भवति, नैवमत्राहद्वारकर्मको विशेषरूपेण परिच्छेदोऽपेक्षितः, किं तु तदवभासकत्वमात्रं तद्विषयीकरणम् । अतो वैषम्यम् इति भावेनाह–तत्र तयोरिति ।

तत्र – ज्ञात्रहन्तासंबन्धज्ञातृबाह्यविषयसंबन्धयोर्मध्ये पूर्वत्र ज्ञात्रहन्तयोरव-भासकावभास्यत्वसंबन्धमन्तरेण नान्यः संबन्ध उपपद्यत इत्यर्थः । किं तर्हि तत् संबन्धान्तरं ज्ञातृबाह्यविषययोः यदर्थमहंवृत्तिर्द्वारीक्रियते ? तत्राह – अहंतारूपं स्थिति । स एव ज्ञाता अहंतारूपम् आत्मसात्कृत्वा तदध्यासेन तत्तादात्म्यं गत्वा अहंकञ्चुकं परिधाय अहंप्रत्ययाश्रयस्तद्विषयश्च भूत्वा उपकार्यत्वापकार्यत्वक्षमः सन् – न ह्यहमुपाधिमन्तरेण इष्टानिष्टत्वबुद्धि-र्बहिर्विषयेषु भवति ; यथोक्तं शारीरकभाष्ये 'तेनैव ह्यहंकर्त्रा अहंप्रत्यय-विषयेण प्रत्ययिना सर्वाः क्रिया निर्वर्त्यन्ते तत्फलं च स एवाश्नाति' (सू. भा. १-१-४) इति – यदैव चैवमुपकार्यत्वापकार्यत्वयोग्यो भवति तदैव, बाह्यविषयेणोपकारिणा अपकारिणा वा आत्मात्मीयं संबन्धं स्वस्वामिभाव-संबन्धम् 'अहम्, मम' इत्याकारकं प्रतिपद्यते । तदेतदुत्तरश्लोकेनोच्यत इत्याह – तदभिधीयत इति ॥

इदं ज्ञानमिति ॥ ज्ञातुः अहंविषये इदंज्ञानं भवेत्, तथा अहमः, तस्यैव अहङ्कारापन्नस्य ममज्ञानं भवेत् । किं पुनरेवं ज्ञानद्वैविध्ये प्रयोजक-मिति ? उच्यते–अज्ञानोपाधिना अहंवियुक्तकेवलाज्ञानरूपोपाधिना चिदाभास-सहितेन, ज्ञातृत्वेन – इत्यर्थः । अज्ञाननिमित्तं ज्ञातृत्वं ज्ञेये इदमाकारवत्त्व-मपेक्षते । विक्रियातः, अहमस्तत्तद्विषयकृतसुखदुःखभोगरूपविकारेण ममज्ञानम् 'ममेदमुपकारि', 'ममेदमपकारि' इत्याकारकं ज्ञानं स्यादित्यर्थः ॥ ६० ॥

( मूलम् )

एकस्यैव ज्ञातुः, अन्तर्बाह्यनिमित्तभेदात् अभिन्नेऽपि विषये 'इदम्', 'मम' – इति ज्ञानद्वैरूप्यं जायत इत्युक्तम् । अत्र उपक्रियमाणापक्रियमाणस्यैव ज्ञातुर्विषये ममप्रत्ययो भवति । विपर्यये च इदंप्रत्ययः – इति कथमवगम्यते ? अवगम्यताम् अन्वयव्यतिरेकाभ्याम् । तत् कथमिति ? आह –

अनुपक्रियमाणत्वान्न ज्ञातुः स्यादहं मम ।
घटादिवदिदं तु स्यान्मोहमात्रव्यपाश्रयात् ॥ ६१ ॥

( क्लेशापहारिणी )

उक्तविषये प्रमाणं विवक्षुः, वृत्तग्रन्थाभिप्रायानुवादसमर्थं प्रश्नमुत्थापयति – एकस्यैवेति । एकस्यैव ज्ञातुः, अन्तर्बाह्यनिमित्तभेदात् अन्तरज्ञानोत्थज्ञातृत्वनिमित्तात्, बहिश्चाहङ्कारस्वीकारेण अहमोविकाररूपनिमित्तात् इत्यर्थः । अज्ञानतो ज्ञातृत्वमापन्नस्यैव ह्यहंविकारतो भोक्तृत्वं भवतीति अज्ञानोपाधेरान्तरत्वम् अहंविकारस्य च बाह्यत्वम् इति ज्ञेयम् । अभिन्नेऽपि घटादौ विषये अज्ञानोत्थकेवलज्ञातृत्वोपाधिना हेतुना इदज्ज्ञानम्, अहंविकारोपाधिना च ममज्ञानम् इति ज्ञानद्वैरूप्यं जायते, द्विधाभिन्नं ज्ञानम् उत्पद्यते इत्युक्तम् इत्यर्थः ॥

सत्यमुक्तम्, अत्र किम् ? तत्राह – अत्रेति । अत्र इदंमम ज्ञानयोर्मध्ये घटादौ ममप्रत्ययः, उपक्रियमाणापक्रियमाणस्यैवाहङ्कञ्चुकस्य सतस्तावद्भवति, विपर्यये च उपक्रियमाणत्वादिराहित्ये सति केवलाज्ञानोपाधिमत्वे तु इदंप्रत्ययः इति कथमवगम्यते ? – इति प्रश्नः । यद्यप्यहङ्कारे 'इदम्' इत्युल्लिखितेदंप्रत्ययगम्यत्वं नैवास्ति, तथापि पूर्वश्लोकसन्दर्भोक्त्यभिहितरीत्या आन्तरत्वमात्यन्तमेवात्रेदंप्रत्ययविषयत्वमिति प्रश्नप्रतिवचनयोर्विवक्षितम् । घटादौ तु 'अयं घटः' इत्युल्लिखितेदंप्रत्ययगम्यत्वमपि भवति, वृत्तिपरिच्छिन्नत्वात् – इत्यदोषः ॥

उत्तरमाह सिद्धान्ती – अवगम्यतामन्वयव्यतिरेकाभ्यामिति । उपकार्यत्वादिसत्त्वे ममबुद्ध्यन्वयः, तदभावे च तद्व्यतिरेकः इत्यतः यथोक्तार्थोऽवगम्यत इत्यर्थः । श्लोकमवतारयति प्रश्नोत्थापनपूर्वकम् – तत्कथमिति ? आह–इति ॥ अस्य प्रश्नस्योत्तरं श्लोकेनाहेत्यर्थः ॥

अनुपक्रियमाणत्वादिति ॥ ज्ञातुः अहङ्कारेणानुपक्रियमाणत्वात् । उपलक्षणमिदम्, अनपक्रियमाणत्वाच्च – इत्यपि द्रष्टव्यम् । तस्य घटादिवन्न मम स्यात्, ममज्ञानविषयो न भवतीत्यर्थः । मोहमात्रसमाश्रयात् अज्ञानमात्रोपाधिकत्वात्, इदं तु स्यात्, यथोक्तरीत्या इदंज्ञानविषयत्वमेव तस्य

स्यादित्यर्थः। मोहमात्रेत्यनेन उपक्रियमाणत्वादिरेव व्यावर्त्यते न तूपाध्यन्तरम्, चिदाभासव्यपाश्रयस्यापीष्टत्वात् इति ध्येयम् । तदेवम् उपक्रियमाणत्वापक्रियमाणत्वयुक्तत्वादेव ज्ञातुर्घटादौ ममताज्ञानं भवतीत्यन्वयः, तद्वियुक्तत्वात्त्वहङ्कारे न ममताज्ञानम्, कि तर्हि, इदंताज्ञानमेवेति व्यतिरेकश्च स्फुट इति भावः ॥ ६१ ॥

( मूलम् )

मोहतत्कार्याश्रयत्वात्, ज्ञातृत्वविक्रिययोः पूर्वत्र इदंममज्ञानाश्रयः प्रदर्शितः । अथाधुना तद्व्यतिरेकेण व्यतिरेकप्रदर्शनार्थमाह –

विक्रियाज्ञानशून्यत्वान्नेदं न च ममात्मनः ।
उत्थितस्य सतो ज्ञानं नाहमज्ञासिषं यतः ॥ ६२ ॥

( क्लेशापहारिणी )

इदंममज्ञानयोर्ज्ञातृत्वाहंविक्रिये एव प्रयोजके इत्यन्वयमुखेनोक्तं व्यतिरेकमुखेन द्रढयति । तदाह – मोहतत्कार्याश्रयत्वादिति ॥ ज्ञातृत्वस्य मोहाश्रयत्वात्, विक्रियायाः, मोहकार्यान्तःकरणाश्रयत्वाच्च, ज्ञातृत्वे सतीदंज्ञानान्वयः, अहंविक्रियायां च सत्यां ममज्ञानान्वयश्च पूर्वत्र 'इदंज्ञानम्' इत्यादिग्रन्थे प्रदर्शित इत्यर्थः । अथोत्तरश्लोके किं प्रदर्श्यते ? तदाह – अथाधुनेति । अथेदानीं तद्व्यतिरेकेण तयोर्ज्ञातृत्वाहंविक्रिययोर्व्यतिरेकेण यथोक्तज्ञानयोर्व्यतिरेकप्रदर्शनार्थम् आहेत्यर्थः ॥

विक्रियाज्ञानशून्यत्वादिति ॥ अत्र विक्रियाशब्देन विषयभोगकृतसुखदुःखानुभवरूपो विकारो विवक्षितः, ज्ञानशब्देन च ज्ञातृत्वम् । प्रकृतत्वात् । अथवा विक्रियाशून्यत्वात्, अज्ञानशून्यत्वाच्च इत्येव छेदः । अस्मिंस्तु पक्षे,अज्ञानोत्थज्ञातृत्वोपाधिशून्यत्वात् इत्यर्थः। सुषुप्तौ अहङ्कारगतविक्रियाभावात् न ममज्ञानम् ज्ञातृत्वाभावाच्च नेदं ज्ञानं भवतीत्यर्थः, ननु तत्रावस्थायाम् इदंज्ञानम्, ममज्ञानं वा नास्तीति कथं गम्यते, तत्राह–यतः,

'नाहमज्ञासिषं किञ्चिदपि सुषुप्ते' इति सुप्तोत्थितस्य ज्ञानं भवति । न त्विदमहमज्ञासिषमिति । न च ज्ञातृत्वाहन्ताशून्यमात्मस्वरूपमेव नास्तीति, सुषुप्तौ सर्वविधज्ञानाभावेन आत्मापि तत्र नासीदेवेति वा शङ्कितुं शक्यते, ज्ञातृत्वाहंताशून्यसाक्षिस्वरूपस्यैवात्मनस्तत्र सत्त्वात् । उक्तपरामर्शस्यैव तत्र मानत्वात् । तदुक्तं वृहद्वार्तिके 'निष्क्रियश्चेतनः साक्षी सक्रियोऽचेतनः पराङ् । व्यावृत्तेश्च प्रमात्रादेः सिद्धः साक्षी सुषुप्तगः ॥ न चेदनुभवव्याप्तिः सुषुप्तस्याभ्युपेयते । नावेदिषं सुषुप्तेऽहमिति धीः किंबलाद् भवेत् ॥ बुद्ध्यादेः प्रविलीनत्वाद्देहादेश्च जडत्वतः । लोष्टादेरिव नैव स्यान्नाज्ञासिषमितीक्षणम् ॥ (बृ वा ३-४-१०२, १०३, १०४) इति ॥

अत्र केचित् विक्रियाशून्यत्वात् अज्ञानशून्यत्वाच्च– इति व्याख्याय, ननु कथमज्ञानशून्यत्वम्, सुषुप्तेऽप्यज्ञानस्य साधितत्वात् ? – इति च शङ्कामुत्थाप्य तत्र अज्ञोऽहम्' इति स्फुटतरव्यवहाराभावात्तथोच्यत इति समादधुः । तदिदमसंबद्धमानीय कुचोद्यतत्परिहारान्वेषणमिति न प्रतिभाति । यत्कारणम् अज्ञानान्वये इदज्ञानान्वयो नैवात्र प्रकृतः, किं तु ज्ञातृत्वान्वये तदन्वयः । अतस्तद्व्यतिरेक एवात्र प्रदर्शनीयो नाज्ञानव्यतिरेकः । सुषुप्तौ सिषाधयिषितस्य साक्षित्वस्याप्यज्ञानकल्पितत्वात्, अत एव हि द्वितीयाध्याये (२–५८) ज्ञातृत्वोपाधिमात्मानमाश्रित्याहङ्कारस्यानात्मत्वं प्रतिपाद्य तद न्वविद्यापरिकल्पितं साक्षित्वमाश्रित्य ज्ञातृत्वाद्यपि प्रतिपिद्धम् । 'अज्ञानोपाधिनेदं स्यात्' इति तु अहङ्कारवियुक्तकेवलाज्ञानोत्थज्ञातृत्वग्रहणार्थम्, न पुनस्तस्यैवेदज्ञानप्रयोजकत्वावधारणार्थम्–इत्यन्यदेतत् । अपि च, अज्ञानव्यतिरेकार्थमुदाहृतस्य सुषुप्तस्यापि 'न किञ्चिदज्ञासिषम्' इति सुप्तोत्थितपरामर्शोदाहरणे नाज्ञानान्वयसाधनमेव भवति न त्वज्ञानव्यतिरेक इत्यहो मूलोच्छेदिव्याख्यानकौशलम् ! तस्मात्, मूलग्रन्थसंदर्भानालोचनादेव व्याख्यातॄणामत्राज्ञानान्वयव्यतिरेकविचारावतरणम्, ग्रन्थे व्याहतवचनदोषोद्भावनं चेति नायं पन्था । तस्मात्, अहंविक्रियाज्ञातृत्वयोरेव व्यतिरेकोऽत्र दिदर्शयिषितः, तथैव च व्याख्यानमस्माभिरित्यलं पल्लवितेन ॥ ६२ ॥

## १५. श्रुत्यनुगृहीतान्वयव्यतिरेकोपसंहारः

( मूलम् )

आत्मानात्मविवेकस्य इयत्ताप्रदर्शनार्थमाह –

वाक्यप्रत्यक्षमानाभ्यामियानर्थः प्रतीयते ।
अनर्थकृत्तमोहानिर्वाक्यादेव सदात्मनः　　　　॥ ६३ ॥

( क्लेशापहारिणी )

प्रमाऽन्तसर्वानात्मविविक्तसाक्षिसिद्धिपर्यन्तमेवान्वयव्यतिरेकफलम् इत्युप सहरन्, उत्तरश्लोकमवतारयति – आत्मानात्मेति ॥

वाक्यप्रत्यक्षमानाभ्याम् वाक्यम् अन्वयव्यतिरेकानुग्राहकम् 'य एषोऽक्षिणि पुरुष' (छा ८–७–४), 'अथ यो वेदेद जिघ्राणीति' (छा ८–१२–४), 'योऽयं विज्ञानमयः प्राणेषु' (बृ. ४–३–७) – इत्यादिश्रुत्युदाहृतम्, प्रत्यक्षं चान्वयव्यतिरेकाभ्याम् आत्मानात्मविवेकरूपम् अनुभवनम् । ताभ्याम् इयानर्थः सर्वानात्मविविक्तः साक्ष्यात्मा प्रतीयते विज्ञायते । अतः ऊर्ध्वं सदात्मनः अद्वितीयप्रत्यगात्मनः, अनर्थकृत्तमोहानि, अनर्थानां प्रमातृताप्रमुखानां कर्तृ यत् तमः, तस्य हानिः, विनिवृत्तिः, वाक्यादेव भवति । न तु तत्रान्वयव्यतिरेकन्यायः प्रगल्भत इत्यर्थः ॥ ६३ ॥

## १६. वाक्यादेव तमोहानिः

( मूलम् )

द्वितीयाध्यायादौ श्रोतृचतुष्टयमुपन्यस्तम् । तत्र कृत्स्नानात्मनिवृत्तौ सत्यां यः प्रत्यगात्मन्यवाक्यार्थता प्रतिपद्यते, स क्षपिताशेषान्तरायहेतुरिति न तं प्रति वक्तव्यं किञ्चिदपि अवशिष्यते । योऽपि वाक्यश्रवणमात्रादेव प्रतिपद्यते, तस्यापि

अतीन्द्रियशक्तिमत्त्वात् न किञ्चिदप्यपेक्षितव्यमस्ति । यश्च श्राविततत्त्वमस्यादिवाक्यः स्वयमेवान्वयव्यतिरेकौ कृत्वा तदवसान एव वाक्यार्थं प्रतिपद्यते असावपि यथार्थं प्रतिपन्न इति पूर्ववदेवोपेक्षितव्यः । यः पुनः, अन्वयव्यतिरेकौ कारयित्वापि पुनः पुनर्वाक्यं श्राव्यते यथाभूतार्थप्रतिपत्तये, तस्य कृतान्वयव्यतिरेकस्य सतः कथं वाक्यं श्राव्यत इति ? उच्यते –

नवसङ्ख्याहृतज्ञानो दशमो विभ्रमाद् यथा ।
न वेत्ति दशमोऽस्मीति वीक्षमाणोऽपि तान्नव ॥ ६४ ॥

( क्लेशापहारिणी )

अथ वाक्यादविद्याहानिं वक्तुकाम, तत्र वाक्यार्थश्रावणे विषयभूत विशिष्टाधिकारिण निर्देष्टु द्वितीयाध्यायादौ (२–२, ३) उक्त श्रोतृचतुष्टय तावदनुस्मारयति – द्वितीयाध्यायादाविति ॥ तत्र यथास्मारितेषु चतुर्षु (१) य कृत्स्नानात्मनिवृत्तौ सत्याम् अनात्मन्यशेषेणानृतत्वेनानात्मत्वेन च बाधिते सति य प्रत्यगात्मनि सर्वान्तरे एव स्वात्मनि अवाक्यार्थता प्रतिपद्यते वाक्यागोचरनिर्विशेषाद्वयात्मत्व प्रतिपद्यते, स क्षपिताशेषान्तरायहेतु, न तस्यात्मज्ञानप्रतिबन्ध समस्ति इत्यत न त प्रति वक्तव्य किञ्चिदपि अवशिष्यते, कृतकृत्य स इति न तत्र वाक्येन कर्तव्यमस्ति । (२) योऽपि सकृद् वाक्यश्रवणमात्रादेव पिशाचकवत् अवाक्यार्थता प्रतिपद्यते, तस्यातीन्द्रिय शक्तिमत्त्वात्, प्रत्यक्प्रवणबुद्धित्वात् विनैव श्रवणाभ्यासम् आत्मतत्त्ववेदन भवत्येवेत्यत, न किञ्चित् सकृच्छ्रवणात् अन्यत्र अपेक्षितव्यमस्ति (३) यश्च श्राविततत्त्वमस्यादिवाक्य, श्रुत्यनुगृहीतान्वयव्यतिरेकानुसंधानमनपेक्ष्य तर्क पूर्वक प्रतिपद्यते, असावपि विनैवाधिक यत्न यथार्थं प्रतिपन्न ज्ञातवान् इत्यत पूर्ववदेव, पूर्वोदीरितपुरुषद्वयवदेव उपेक्षितव्य, न यत्नान्तर कर्तव्य तत्कृते इत्यर्थ ॥

तदेवम् उत्तममध्यमाधिकारिणोः कृतपदार्थविवेकत्वाद् वाक्यार्थप्रतिपत्तौ न कोऽपि प्रतिबन्धोऽवशिष्यत इति तौ प्रति नैव यत्नः कार्यः। यः पुनरन्वयव्यतिरेकौ श्रुत्यनुगृहीतनीत्या कारितोऽपि न वाक्यार्थं प्रतिपद्यते, बहिर्मुखत्वादेव, तस्य वाक्येन किं क्रियत इत्येतदधुना उच्यते समनन्तरश्लोकेनेत्याह — कथं वाक्यं श्राव्यत इति ? उच्यते — इति ॥ अत्र कथं श्राव्यत इति श्रावणप्रकारो न पृच्छ्यते, वाक्यश्रवणं कृत्वा, श्रुत्यनुगृहीतान्वयव्यतिरेकप्रसादालब्धात्मानात्मविवेकज्ञानत्वात्, किं तर्हि, तस्य विषये कोऽपरः प्रतिबन्धोऽवशिष्यते, येन तस्य पुनरपि वाक्यश्रावणमपेक्ष्येत ? — इति प्रश्नाभिप्रायः। अवशिष्टं प्रतिबन्धं दृष्टान्तमुखेनोद्घाटयितुमेव समनन्तरश्लोक इति भावेनाह — उच्यत इति ॥

नवसङ्ख्याहृतज्ञान इति ॥ यथा प्रकृतदशसङ्ख्यापूरणं स्वात्मानमेव बाह्यनवसङ्ख्येयजनगणनव्यासक्तत्वात् नवसङ्ख्यापहृतसम्यग्ज्ञानः, तान् नवसङ्ख्याकान् वीक्षमाणोऽपि तत एवाऽऽत्मनो दशमत्वसिद्धावपीत्यर्थः। 'दशमोऽस्मि' इति न वेत्ति, विभ्रमात्। वस्तुतस्तु तस्य दशमत्वसिद्धौ नान्यत् किमप्यपेक्षितव्यमस्ति इत्यभिप्रायः। यथा लोकप्रसिद्धाख्यायिकायाम् दश माणवकाः अतिमन्दबुद्धयो नदीं तीर्त्वा सर्वे वयं पारं तीर्णा वा न वा — इति संशयानाः प्रत्येकं स्वातिरिक्तानेव नव बाह्यान् माणवकान् गणयन्तः दशमं त्वनीक्षमाणाः शोचन्ति स्म 'नष्टो दशमः कश्चिदस्माकं मध्ये' इति। तत्र दशमस्य वस्तुतो बाह्यान् नव वीक्षमाणस्यैव स्वस्मिन् दशमत्वेन शक्यनिर्धारणेऽपि 'अहमस्मि दशमः' इति ज्ञानं न जातम्, एवमत्रापि बाह्यानात्मापहृतज्ञानत्वादेवात्मन्यात्मत्वमतिर्न जातेति भावः ॥ ६४ ॥

( मूलम् )

अथ दृष्टान्तगतमर्थं दार्ष्टान्तिकार्थे समर्पयिष्यन्नाह —

अपविद्धद्वयोऽप्येवं तत्त्वमस्यादिना विना।
वेत्ति नैवात्मनात्मानं नान्वेष्यं चात्र कारणम् ॥ ६५ ॥

( क्लेशापहारिणी )

दृष्टान्तगतमर्थं प्रकृते दार्ष्टान्तिके संगमयत्युत्तरश्लोकेन – **अपविद्ध-द्वयोऽपि इति** ॥ अन्वयव्यतिरेकाभ्यां निवृत्तद्वैतोऽपि, एवम् आख्यायिकागत दशमवत् एकलम् अद्वितीयमात्मानं तत्त्वमस्यादिना वाक्येन श्रावितेन विना न वेत्ति। नित्यनिवृत्ताविद्यस्यापि वाक्यादेवाविद्यानिवृत्तिरपेक्ष्यते इत्यर्थः। ननु कथमपविद्धद्वय इति सहसैवोच्यते ? यावता कृतान्वयव्यतिरेकस्याप्यात्मन सकाशात् अविद्यातदुत्थान्तःकरणादिकं द्वितीयमस्त्येवेत्यवधारितम्। अविद्या हि सर्वानर्थबीजभूता सुषुप्तेऽप्यस्तीत्युक्तम् (३–५८), तदुत्थज्ञातृत्वाहन्तादि रूपं च द्वैतं जाग्रत्स्वप्नयोः। तत् कथमपविद्धद्वयत्वम्, कथं वा वाक्यज्ञानात् तन्निवृत्तिरिति ? अथ कथञ्चिन्निवृत्ताविद्य एवासौ, अतोऽपविद्धद्वयोऽपीत्युच्यते, तत कथं निवर्त्याविद्याया अभावेऽपि वाक्यज्ञानापेक्षेति ? तत्राह – **नान्वेष्यं तत्र कारणमिति** ॥ कारणं विनैव दशमत्वोपदेशस्वाभ्याकाङ्क्षणवत् अस्यापि वेदान्तवाक्योपदेशकाङ्क्षणम् इत्यभिप्रायः ॥ ६५ ॥

( मूलम् )

**'नान्वेष्यं चात्र कारणम्' इत्युक्तम्। तत् कस्मात् ?– इति चोदिते प्रत्याह अन्वेषणासहिष्णुत्वात्। तत् कथमिति ? आह –**

**सेयं भ्रान्तिर्निरालम्बा सर्वन्यायविरोधिनी।**
**सहते न विचारं सा तमो यद्वद्दिवाकरम् ॥ ६६ ॥**

( क्लेशापहारिणी )

अविद्या स्वविषये कञ्चिदपि विचारं न सहते। अत्यल्पमिदं पृच्छ्यते कथं निवृत्तद्वयोऽप्यविद्यानिवृत्तिं काङ्क्षत इति – इति वक्तुं प्रश्नोत्तरत्वेन श्लोकमवतारयति – **नान्वेष्यमिति** ॥

**सेयमिति** ॥ सेयमविद्याभ्रान्तिर्निरालम्बा, न किञ्चिदपि स्वरूपत्वेन आलम्बते बालकल्पितनमःपिशाचवत् इत्यर्थः। **सर्वन्यायविरोधिनी**।

अविद्यमानैव कथं प्रतीयते ? तमःस्वभावा च सती कथं स्वप्रकाशमात्मानम् आश्रयत्वेन विषयत्वेन चालम्बते ? कथं च तस्या नित्यनिवृत्ताया निवृत्तिः ? निवृत्ता च सा कुत्र गच्छति ?— इत्यादिविचाराघातं नैव सहते। न ह्येतस्याः लोकसिद्धपदार्थान्तरस्येव स्वरूपस्थितिकार्यनिवृत्त्यादिकं युक्तिबद्धम् इत्यर्थः । अतः साधूक्तमिदं सा न विचारं सहत इति । तत्र दृष्टान्तः — तमो यद्वद् प्रकाशस्वरूपं दिवाकरम्, उदितमात्रे सूर्ये यथा तमः, तथैव विचारावतार-मात्रेण सा प्रणश्यतीत्यर्थः ॥

अयमत्राशयः — सर्वमिदम् अविद्यातदुत्थसद्भावादिकथनं पराग्भूत-प्रमातृदृष्ट्यैव, प्रत्यग्भूतसाक्षिदृष्ट्या तु नैवाविद्या तत्कार्यं वा अवस्थात्रयेऽपि दृश्यते । प्रत्यग्दृष्टिरेव तु परमार्थदृष्टिः, तदवलम्ब्यैव च वाक्येन सर्वमपि द्वैतं निवर्त्यते । तथा चोक्तं बृहद्वार्तिके 'पराक्प्रवणया दृष्ट्या धीम्भो ऽज्ञानमात्मनि । व्योमकार्ष्ण्यादिवत्तच्च सम्भावयति न स्वतः ॥ नैवाज्ञानं मृषाज्ञानं संशयज्ञानमिष्यते । प्रत्यक्प्रवणया दृष्ट्या जाग्रत्स्वप्नसुषुप्तिषु ॥ न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिः । कालाद्यव्यवधानत्वान्न ह्यात्मस्मृतिभाक् ॥ न भूतकालस्पृक् प्रत्यङ् न चागामिस्पृगीक्ष्यते । स्वार्थदेशः परार्थोऽर्थो विकल्पस्तेन न स्मृतः ॥ '(बृ. वा. १-४-२९८—३०१) इति । एवम् अवस्थात्रयवत्स्वलक्षणं द्वैतमप्यस्य वस्तुनो नास्त्येव । यदप्युक्तं तत्रैव 'नास्य स्वापः प्रबोधो वा पुनः स्वप्नस्य सम्भवः । प्रत्यक्स्वभाव एवास्य जाग्रत्स्वप्नसुषुप्तयः ॥' (बृ. वा. २-१-२६४) इति । अतः सर्वमिद-मनवद्यमिति ॥ ६६ ॥

(मूलम्)

तस्याः सत्यस्या अविद्याया भ्रान्तेः सम्यग्ज्ञानोत्पत्ति-द्वारेण निवृत्तिः —

सुषुप्त्योच्छेदिनी यास्य मदसीत्यादिना दृढम् ।
प्रतीचि प्रतिपत्तिः स्यात्सामासौ मानान्तराद् भवेत् ॥ ६७ ॥

( क्लेशापहारिणी )

तदीदृश्या अविद्याया निवृत्तौ न कथमपि मानान्तरापेक्षणमित्यतो वाक्यजन्यमेव सम्यग्ज्ञानं तद्बाधकमित्याह तस्याः इत्यादिना ॥

बुभुत्सोच्छेदिनीति ॥ प्रामाण्यविघातकहेतूनामसत्त्वात् वाक्यज्ञाने जाते *जिज्ञासापरिसमाप्तिरवश्यंभाविनीत्यर्थः* । *नासौ प्रतिपत्ति मानान्तराद्* पराग्विषयात् भवेत् – इत्यत्र हेतुसमर्पकं साभिप्रायं 'प्रतीचि' इति विशेषणमात्मनः । 'सदसीत्यादिना' इति तु आप्तवाक्यादिमानान्तरापेक्षवाक्यान्तरव्यावृत्त्यर्थम् ॥ ६७ ॥

( मूलम् )

**कथं पुनर्वाक्यं प्रतिपादयत्येवेति चेत् दृष्टान्तोक्तिः –**

**जिज्ञासोर्दशमं यद्वन्नवातिक्रम्य ताम्यतः ।**
**त्वमेव दशमोऽसीति कुर्यादेवं प्रमां वचः ॥ ६८ ॥**

( क्लेशापहारिणी )

प्रामाण्यविघातकहेत्वभावमेव स्पष्टयन् प्रश्नमुत्थाप्य वाक्यस्य अवबोधकत्वं तावद्दशमवाक्यसाम्यकथनेनैव स्पष्टयति कथं पुनरिति ? प्रतिपादयत्येवेत्यवधारणं न जातुचिदप्यबोधकत्वमित्यभिप्रायेण ॥

जिज्ञासोरिति ॥ यद्वत् नव माणवकान् स्वातिरिक्तान् अतिक्रम्य अदशमत्वेन निराकृत्य 'को नु दशमः ?' इति ताम्यतः, खिद्यतः, दशमजिज्ञासोः 'त्वमेव दशमोऽसि' इति वचः सावधारणं जिज्ञास्वात्मस्त्रोतस्तया बुद्धिं प्रवर्तयत् वस्तुतन्त्रं च भानं जनयद् तस्य दशमत्वे प्रमां कुर्यादेव, एवं तत्त्वमसीति वचोऽपि जिज्ञासोरात्मनि प्रमां कुर्यादेवेत्यर्थः ॥ ६८ ॥

( मूलम् )

**सा च तत्त्वमस्यादिवाक्यश्रवणजा प्रमा, उत्पन्नत्वादेव । न च 'नैवम्' इति प्रत्ययान्तरं जायते । तदेतद् दृष्टान्तेन प्रतिपादयति –**

दशमोऽसीति वाक्योत्था न धीरस्य विहन्यते ।
आदिमध्यावसानेषु न नवस्य संशयः ॥ ६९ ॥

एवं तत्त्वमसीत्यस्माद् द्वैतनुत्प्रत्यगात्मनि ।
सम्यग्ज्ञातत्वमर्थस्य जायेतैव प्रमा दृढा ॥ ७० ॥

( क्लेशापहारिणी )

ननु उत्पन्नापि प्रमा पुनर्द्वैतज्ञानेन बाध्येत, अनेकजन्मानुभववासना वशात् अविद्या पुनरपि कदाचिदुद्भवेत् । तत्राह–न चेति ॥ बाधकज्ञानस्य बाध्येन पुनर्बाधशङ्कायोगात् इति भाव । यथोक्तं बृहद्वार्तिके 'बाध्याऽविद्या कथं विद्या बाधिका बाध्यते सदा । दाहकस्य न दाहोऽस्ति वह्नेर्दाह्येन वस्तुना ॥ विद्यमानाऽप्यविद्येयं विद्यां चेन्नाबधीत् पुरा । ध्वस्ता बाधिष्यतेऽविद्या विद्यामित्यत्र का प्रमा ॥' (बृ वा ४-४-९१६, ९१७) इति । तदेतद् दृष्टान्तेन सङ्क्रमयतीत्याह – तदेतदिति ॥

अत्र संबन्धवाक्ये वाक्यश्रवणजा प्रमा, उत्पन्नत्वादेव – इत्येतदन्तम् एकं वाक्यम्, पूर्वस्मिन् श्लोके "प्रमां कुर्यात्' इतीयत्प्रतिज्ञोपपादकत्वेन हेतुसमर्पकम् । उत्पन्नत्वादेव अनोधकत्वलक्षणं अप्रामाण्यहेतुर्नास्ति वाक्यस्य – इत्यर्थकमेतत् । 'न च नैवम् इति' इति संशयेन विपरीतप्रत्ययेन वा न बाध्यत्वमस्ति संजातज्ञानस्येत्यभिप्रायेण ॥

दशमोऽसीतीति, एवमिति च ॥ दशमोऽहमित्येव मतिर्दशम वाक्येन जायते । अस्य माणवकस्य नवसु स्वव्यतिरिक्तेषु य कश्चित् दशमो भवेदिति कदाचिदपि संशयो न जायत इति संशयो विपरीतबोधकत्वं वा नास्ति वाक्यस्य । एवं तत्त्वमसिवाक्यस्यापीत्यर्थ । तदेतदुक्तं भगवत्पादैरपि – "अशनायादिनिर्मुक्त्यै तत्काला जायते प्रमा । तत्त्वमस्यादिवाक्यार्थे त्रिषु कालेष्वसंशय ॥' (उप १८-२००) इति ॥ ६९ ॥ ७० ॥

( मूलम् )

प्रत्यगात्मनि प्रमा उपजायत इत्युक्तम् । तत्र चोद्यते । किं यथा घटादिप्रमेयविषया प्रमा कर्त्रादिकारकभेदानपह्नवेन जायते तथैव, उत अशेषकारकग्रामोपमर्देन कर्तुः प्रत्यगात्मनि – इति ? उच्यते –

प्रत्यक्ताऽस्य स्वतोरूपं निष्क्रियाकारकाफलम् ।
अद्वितीय तदिद्धा धीः प्रत्यगात्मेव लक्ष्यते ॥ ७१ ॥

( क्लेशापहारिणी )

'वाक्यात् प्रत्यगात्मनि प्रमा जायते' इत्युक्तत्वात् प्रमातृप्रमाण प्रमेयविभागो मा शङ्कीत्याशयवानाऽऽचष्टे – प्रत्यगात्मनीति ॥ उच्यते 'अस्य चोद्यस्य परिहार समनन्तरश्लोकेन' इति शेष ॥

प्रत्यक्तेति ॥ अस्यात्मन प्रत्यक्त्वैव स्वतोरूपम्, तच्च रूपम्, निष्क्रियाकारकाफलम् अद्वैतम्, प्रमातृप्रमाणप्रमेयप्रमितिविभागस्तु तदज्ञानोत्थ मिथ्याध्यास एव इति भाव । यथोक्त बृहद्वार्तिके 'निर्निमित्त प्रमात्रादे प्रत्यग्रूपमनात्मन । सनिमित्त पराग्रूपमात्मनो मोहहेतुत ॥' (बृ वा १–४–१४९९) इति । अतोऽत्राद्वैतात्मज्ञानमुत्पद्यमान न क्रियाकारकफलभेदा नपह्नवेन उत्पत्तुमर्हति । अन्यथा प्रमातृत्वस्याप्यवशेषे शुद्धप्रत्यक्त्वस्यैवा सिद्धेरिति भाव । अत एवात्र शास्त्राचार्यादिद्वैतमप्युपमृद्यत एवेति मन्तव्यम् । यदप्युक्त तत्रैव 'प्रत्यगज्ञानहेतूत्थशास्त्राचार्यादिसाधन । तद्विरुद्धमथैकात्म्य प्रत्यपद्यत मायया ॥' (बृ वा १–४–६०४) इति । ननु यथास्यात्मन प्रत्यक्ता स्वतोरूपम्, एवमन्त करणस्यापि प्रत्यक्त्वैव स्वतोरूपमिति विभाव्यते, नेत्याह – तदिद्धा धीः प्रत्यगात्मेव लक्ष्यत इति ॥ उक्तमेतत् प्रागेव 'कूटस्थबोधप्रत्यक्त्वमनिमित्त परात्मन । बोद्धृताहतयोर्हेतु' (३–११) इति । तदिद्धा चैतन्याभासदीप्ता धी देहाद्यपेक्षया प्रत्यगात्मेव लक्ष्यते, न तु परमार्थत प्रत्यक्त्व तस्या । उपपादित हि ज्ञेयत्वमस्या प्राक् 'दाह्यदाहक तैकत्र' (३–५९) इत्यादिना इति भाव ॥ ७१ ॥

यस्मादेवम् – ( मूलम् )

विपश्चितोऽप्यतस्तस्यामात्मभावं वितन्वते ।
दवीयस्स्विन्द्रियार्थेषु क्षीयते ह्युत्तरोत्तरम् ॥ ७२ ॥

( क्लेशापहारिणी )

यतो धिय प्रत्यक्त्वाभास आत्मचिदाभासकृत, तत एव विवेचनासमर्था. वादिनस्तत्रात्म वमतिं कुर्वते । अतो मुमुक्षुणा आत्मानात्मविवेके जागरूकेण भाव्यमित्युपदिशत्युत्तरश्लोक इति मानेन समवतारयति – 'यस्मादेवम्' इति ॥

विपश्चितोऽपीति ॥ तदेतत् प्रश्नपूर्वक व्याख्यातं गीताभाष्ये " अथ किमिद संसारिणामिव 'अहमेवम्' (अहमेवेदम् ?), 'ममैवेदम्' इति पण्डितानामपि? शृणु, इद तत् पाण्डित्य यत् क्षेत्र एवाऽऽत्मदर्शनम् " (गी. भा १३-२, पा. १९४) इति । एव तर्हि कथम् इन्द्रियादिष्वपि आत्ममतिस्तत्तादृशी न नि सन्धिनन्धनेति ? तत्राऽऽह–दवीयःस्विति ॥ बुद्धिमनइन्द्रियदेहेष्वात्मचैतन्याभासत्व यद्यपि समानम्, तथापि मनआदिषु उत्तरोत्तरं व्यवधानेन दवीयस्त्वात् आत्मबुद्धिविभ्रम ईषदीषत् क्षीयते । स्थूलबुद्धयस्तु पुत्रादिष्वपि अत्यन्तबाह्येषु आत्मतां कुर्वत एवेति प्रत्यक्ष लोके इत्यर्थ । अतो बुद्धे प्रत्यक्त्वा न स्वत इत्यवगम्यत इत्यभिप्राय ॥ ७२ ॥

## १७. वाक्ये कर्तृत्वादेर्बाधार्थमनुवादः

( मूलम् )

आह – यदि वाक्यमेव यथाभूतार्थावबोधकम्, अथ कस्य हेतोः अविद्योत्थापितस्य कर्तृत्वादेरुपदेश इति ? उक्ते प्रतिविधीयते –

भ्रान्तिसिद्धमनूद्यार्थं तत्त्वं भ्रान्तिबाधया ।
अयं नेत्युपदिश्येत यथैवं तत्त्वमित्यपि ॥ ७३ ॥

( क्लेशापहारिणी )

अथ तत्त्वमस्यादिवाक्ये त्वपदार्थस्य निष्ठा निर्दिधारयिपुराक्षेप मुत्थापयति – आहेति ॥ यदि वाक्यमेव प्रमाणान्तरावेद्यम् अद्वितीयात्मान बोधयतीत्युच्यते, प्रत्यक्षादिसिद्धकर्तृत्वादिक तु आविद्यकमेवेति च, अथ तर्हि नार्थस्त्वपदादानेन । तत्र हि पदे अविद्योत्थापितकर्तृत्वादिरेव प्रतीयते, न चासौ बुबोधयिषितोऽर्थ , न हि श्रुत्युपदिष्टो जातुचिदाविद्यको भवेत् – इति भाव । शङ्कापरिहारार्थमुत्तरश्लोकमवतारयति – उक्ते प्रतिविधीयत इति ॥

भ्रान्तिसिद्धमिति ॥ भ्रान्तिमात्रसिद्ध स्थाणुपुरुषादिकम् अर्थमनूद्य तत्तत्त्व स्थाणुत्वादिक 'नाय पुरुष स्थाणुरेव तु' इति यथा उपदिश्येत, एवम् त्वमित्यनेन भ्रान्तिसिद्ध जीवत्वम् अनूद्य भ्रान्तिबाधया तत्तत्त्वम् अद्वितीयप्रत्यगात्मत्वम् उपदिश्यते इत्यर्थ । यथाहुर्भगवत्पादाः – 'सिद्धादेवाहमित्यस्माद् युष्मद्धर्मो निषिध्यते । रज्ज्वामिवाहिधीर्युक्त्या तत्त्वमित्यादिशासनै ॥ (उप १८-४) इति ॥ ७३ ॥

( मूलम् )

इममर्थं दृष्टान्तेन बुद्धौ आरोहयति –

स्थाणुः स्थाणुरितीवोक्तिर्न नृबुद्धिं निरस्यति ।
व्यनुवादात् तथैवोक्तिर्भ्रान्तिं पुंसो न बाधते ॥ ७४ ॥

( क्लेशापहारिणी )

भ्रान्त्यनुवादाभावे तु तत्त्वमात्रोपदेशेन भ्रान्तिनिरासो न भवेत् इत्येतदपि दृष्टान्तमुखेन स्फुटयितुमुत्तरश्लोक । तदाह – इममर्थमिति ॥ 'स्थाणु स्थाणु ' इत्युक्ति , श्रोतु स्थाणुगता पुरुषबुद्धि न निरस्यति । तत्र हि श्रोता स्थाणु स्थाणुरिति ज्ञातमेव, किमित्ययम् अत्यन्त प्रसिद्धमर्थम् अनुवदतीति वक्तारम् उपेक्षतैव, न तु पुरोऽवस्थिते पुरुषबुद्धि मुञ्चति । कुत ? व्यनुवादात् । '*नाय पुरुष* ' इति भ्रान्तिसिद्धमनूद्यानिषेधात् । तथैव

'सद्ब्रह्म सद्ब्रह्म' इत्युक्तिः पुंसः श्रोतुरधिकारिणः 'संसार्यहम्' इति भ्रान्तिं न बाधते, 'त्वम्' इत्यनूद्य 'तदसि' इत्यनुक्तत्वात् इत्यर्थः। अत्र त्वंपदमनुचार्य 'तदसि' इत्येतावन्मात्रोक्तौ न संसारित्वनिवृत्तिरित्युच्यत इति न भ्रमितव्यम्, यावता 'तदसि' इति वाक्यस्यापि 'तत्त्वमसि' इति वाक्यादविशेषार्थकत्वमस्त्येव। अतः, त्वंपदवाच्यार्थभूतकर्तृत्वभोक्तृत्वादिरूपमविद्याप्रत्युपस्थापितसंसारित्वमनूद्य तत्परमार्थं ज्ञापयतैव वाक्येन भ्रान्तिबाधः स्यान्नान्यथा – इत्येव विवक्षितमिति बोध्यम् ॥ ७४ ॥

( मूलम् )

यस्मात् श्रोतृप्रसिद्धानुवाद्येव त्वमिति पदम्, तस्मात् उद्दिश्यमानस्थत्वाद् दुःखित्वादेरविवक्षितत्वमेव। विधीयमानत्वे हि सति विरोधप्रसङ्गः, न तु विधीयमानानूद्यमानयोः – इति। स्वप्रधानयोर्हि पदयोर्विरोधाशङ्का, सामान्यालिङ्गितत्वात् तयोः, न विपर्यये –

अनालिङ्गितसामान्यौ न जिहासितरादिनौ।
व्युत्थितौ तत्समौ तस्मादन्योन्याभिसमीक्षणौ ॥ ७५ ॥

( क्लेशापहारिणी )

एवं तावत्, अविद्याप्रत्युपस्थापितस्य कर्तृत्वदुःखित्वादेरनुवादेन तद्बाधया तत्त्वविजिज्ञापयिषया तदुपदेशः सम्भवति इत्युक्तम्। अथेदानीं तत्त्वंपदयोः सामानाधिकरण्ये सति तदर्थयोर्विशेष्यविशेषणभावेन, अविवक्षितार्थानां बाध्यत्वं विवक्षितार्थानां च बाधकत्वं निरूपयितुं प्रक्रमते। तत्र कथं दुःखित्वादेरविवक्षितत्वमित्यत्राऽऽह – यस्मादिति॥ यस्मात् दृष्टान्तगतपुष्पपदवत् त्वमितिपदं श्रोतृप्रसिद्धानुवाद्येव, तस्मात् उद्दिश्यमानत्वंपदार्थस्थत्वात् दुःखित्वादिभ्रान्तिबाधेन तत्त्वमस्योद्दिदिक्षितत्वात् दुःखित्वादेरविवक्षितत्वमेव। तदेतदुक्तम् प्रागेव 'उद्दिश्यमानं वाच्यम्' (३–२२) इति श्लोकगतग्रन्थवाक्ये; तथा च न तस्य असंसारित्वप्रतिपादनेन विरोधः। विधीयमानत्वे हि

दुःखित्वस्य विरोधप्रसङ्गः, दुःखि चासंसारि च – इति विप्रतिपिद्धमिति । न तु विधीयमानानूद्यमानयोरसंसारित्वदुःखित्वयोर्विरोधप्रसङ्गः । विधीयमानानूद्यमानयोः स्थाणुत्वपुरुषत्वयोरिवत् । इतिशब्दो हेतौ । इत्यतः, तत्त्वपदार्थयोर्विशेष्यविशेषणभावो न विरुध्यत इत्यर्थः । अत एवाविवक्षितार्थहानात् पदयोः सामानाधिकरण्यं न विरुध्यते । तत् कथमिति ? तत्राह – स्वप्रधानयोर्हि इति ॥ कुत एतत् ? सामान्यालिङ्गितत्वात् । अश्वो महिष इति हि पदसामानाधिकरण्यं न घटते, तदेतत् कस्य हेतोः ? स्वस्ववाच्यभूताश्वत्वमहिषत्वरूपसामान्याभ्याम् आलिङ्गितत्वात् पदयोः । तदपरित्यागात् इत्यर्थः । तथा च सामान्यार्थापरित्यागेन अश्वत्वमहिषत्वरूपसामान्यद्वयस्य न कुत्राप्येकस्मिन् वस्तुनि संभव इति पदयोः सामानाधिकरण्यं विरुध्यते । न विपर्यये तद्वैपरीत्येन सामान्यार्थपरित्यागेन तद्गतविशेषमात्रं वदतोः सामानाधिकरण्यं घटत एव । तथा 'सिंहो देवदत्तः' इत्यत्र सिंहत्वसामान्यवाचकस्य सिंहपदस्य देवदत्तपदेन पुरुषत्ववाचकेन सह सामानाधिकरण्ये विरुध्यमानेऽपि सिंहगतक्रौर्यादिविशेषमात्रवाचिना सिंहशब्देन देवदत्तशब्दसामानाधिकरण्यं न विरुध्यते । देवदत्ते क्रौर्यादेः सम्भावितत्वात् । एवमिहापि स्वप्रधानयोर्यद्यपि तत्त्वपदयोः कर्तृत्वदुःखित्वरूपसामान्यालिङ्गितस्य त्वंपदस्य पारोक्ष्यरूपसामान्यालिङ्गितस्य च तत्पदस्य स्वप्रधानत्वाद् विरोधः सामानाधिकरण्येऽभ्युपगम्यमाने, तथापि तद्गतविशेषार्थमात्रस्य अद्वितीयप्रत्यगात्मत्वस्य स्वीकारे नास्ति कोऽपि विरोधः – इत्यभिप्रायः ॥

तदेतमर्थं श्लोकेन संगृह्णाति – अनालिङ्गितसामान्यौ इत्यादिना । यस्मात् जिहासितवादिनौ, अत एवानालिङ्गितसामान्यौ, प्रतिपिपादयिषितविशेषार्थमात्रपरत्वात्, सामान्यार्थात् व्युत्थितावेव – परित्यज्यैव – अन्योन्यसमीक्षणौ परस्पराकाङ्क्षिणौ भवतः – इत्यर्थः ॥ ७५ ॥

( मूलम् )

अपास्तसामान्यार्थत्वात्, अनुवादस्थत्वात्, विधीयमानेन च सह विरोधात्, दुःखित्वादेरस्तु कामं जिहासितार्थयो-

रसंसर्गः । यथोपन्यस्तदोषविरहात् तत्त्वमर्थयोः संसर्गोऽस्तु नीलोत्पलवदिति चेत्, नैवमप्युपपद्यते । यस्मात् –

तदर्थयोऽस्तु निष्ठात्मा द्वयपारोक्ष्यवर्जितः ।
नाद्वितीयं विनात्मानं नात्मा नित्यदृशा विना ॥ ७६ ॥

( क्लेशापहारिणी )

अथाविवक्षितदुःखित्वादिनिरासेऽपि तत्त्वंपदार्थयोर्विशेषणविशेष्यभावेन संसर्गो दुर्वार इत्याक्षिपति– अपास्तसामान्यार्थत्वादिति ॥ त्वंपदार्थान्तर्गत सामान्यमात्रत्वात् बाधनार्थमनूद्यमानेऽर्थजातेऽन्तर्भावात्, विधीयमाने नाद्वितीयप्रत्यगात्मस्वरूपेणार्थेन सह विरोधाच्च, तत्त्वमसिवाक्ये अपास्तस्य बाधितस्य अनुवादस्थस्य विरुद्धस्य च दुःखित्वादेर्न तत्पदार्थभूतेन अद्वितीयात्मना संसर्गः, एवं यथोक्तहेतुभ्य एव परोक्षत्वस्यापि तत्पदार्थस्य न त्वंपदार्थभूतेनापरोक्षप्रत्यगात्मना संसर्गः – इत्यस्तु कामम्, तयोरर्थयोर्निहासितत्वात्, तथापि ▮ परिशिष्टयोस्तत्त्वंपदार्थयोः – त्वंपदार्थस्य अपरोक्षप्रत्यगात्मनः, तत्पदार्थस्याद्वितीयत्वस्य च – नीलोत्पलवत् 'अद्वितीयोऽसौ अपरोक्षः प्रत्यगात्मा' इति विशेषणविशेष्यभावः किं न स्यात् ? यथोपन्यस्तदोषविरहात्, ▮ यत्र तु दुःखित्वपरोक्षत्वादेरिव अपास्तसामान्यार्थत्वादयो हेतवः सन्ति, येन संसर्गः प्रतिरुध्येत – इति भावः ॥

तदर्थयोस्त्विति ॥ तदर्थयोः तत्त्वंपदार्थयोस्तु जिहासितहानादूर्ध्वं परिशिष्यमाणयोः द्वयपारोक्ष्यवर्जितः 'आत्मैव' निष्ठा पर्यवसानम् । ▮ एव हि त्वंपदार्थभूत आत्मा, स एव तु तत्पदार्थोऽपि । कथम् ? तत्राह – 'नाद्वितीयं विना' इत्यादि । तत्पदार्थभूतम् अद्वितीयत्वम् आत्मानं विना न पृथगस्ति, नापि त्वंपदार्थं आत्मा, नित्यदृशा विना तत्पदार्थभूतेन 'तदैक्षत' इत्यादिना निर्दिष्टेनाद्वितीयसद्ब्रह्मणा विना पृथगस्ति । अद्वितीयापरोक्षनित्यचैतन्यात्मैव हि उभयोरपि पदयोरवशिष्यमाणोऽर्थः । न तु 'मित्रो देवदत्तः' इत्यादाविव निरासितहानादूर्ध्वं द्वावर्थौ परस्परभिन्नाववशिष्येते, ययोः संसर्गोऽप्याशङ्क्येत–इति भावः ॥ ७६ ॥

(मूलम्)

अत्राऽऽह – किमिह जिहासितम्, किं वा उपादित्सितमिति? उच्यते – प्रत्यगर्थात्माभिधायिनस्त्वंपदात् उभयं प्रतीयते 'अहं दुःखी', 'प्रत्यगात्मा' च। तत्र च प्रत्यगात्मनः 'अहं दुःखी'त्यनेन अभिसंबन्ध आत्मयाथात्म्यानवबोधहेतुक एव। अतोऽहमर्थः, अनर्थोपसृष्टत्वात्, अज्ञानोत्थत्वाच्च हेयः – इति प्रत्यक्षहेतोरवसीयते। तदर्थं किं हेयम्, किं वा उपादेयम् इति नावध्रियते। तत इदमभिधीयते –

पारोक्ष्यं यत्तदर्थे स्यात्तद्धेयमहमर्थवत्।
प्रतीचेवाहमोऽभेदः पारोक्ष्येणाऽऽत्मनोऽपि मे ॥ ७७ ॥

(क्लेशापहारिणी)

मे साक्षात्प्रत्यगात्मरूपस्यापि मे मम पारोक्ष्येण अभेदोऽप्यज्ञानहेतुक एव । न हि 'तत्सत्यं स आत्मा' इति श्रुत्युपदिश्यमानं सद्ब्रह्म 'सदेव सोम्येदमग्र आसीत्' इति परोक्षेणोपक्रम्यत इत्येतावता परोक्षं भवेत्–इति भावः । अयमाशयः – 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्युपक्रम्य श्रुतिः ब्रह्मणोऽद्वितीयनिर्विशेषस्वरूपत्वमेव विवक्षति, न तु आसीदिति परोक्षत्वमप्यवधारयतीति गम्यते 'सदेव', 'एकमेवाद्वितीयम्' – इति च सावधारणनिर्देशात् । 'आसीत्' इति तु इदंशब्दाभिधेयस्य जगतः सावधारणं सदभिन्नत्वमाहाव्याकृतावस्थायाम्, इदानीं निभाल्यमानस्य व्याकृतरूपस्याविद्याकृतत्वं स्पष्टयितुम्–इत्यविरोधः । अतः पारोक्ष्यं हेयमेवेति ॥ ७७ ॥

( मूलम् )

कथं पुनस्तदर्थोऽद्वितीयलक्षणः प्रत्यगात्मोपाश्रयं सद्वितीयत्वं दुःखित्वं (च ?) निरन्वयम् अपनुदति ? उच्यते – नचैतयोर्निवर्तकनिवर्त्यभावं वयं ब्रूमः ; कथं तर्हि, त्वमर्थे प्रत्यगात्मनि प्रागनवबुद्धाद्वितीयता, साऽनेनावबोध्यते । अतोऽनवबोधनिरासेन तदुत्थस्य सद्वितीयत्वस्य त्वमर्थस्थस्य, परोक्षत्वस्य च तदर्थस्थस्य निरसनात्, न वैयधिकरण्यादिचोद्यस्यावसरोऽस्तीति । तदिदमभिधीयते –

त्वमर्थेन संपृक्तो नानात्वं विनिवर्तयेत् ।
नापरित्यक्तपारोक्ष्यं त्वं तदर्थे सिसृप्सति ॥ ७८ ॥

शुक्तिरजत निवर्त्यते – इत्याक्षेप । सिद्धान्ती त्वाह – **न चैतयोरिति** ॥ न हि वयमेकपदार्थज्ञानेन पदार्थान्तरगत किञ्चिन्निवर्त्यत इति ब्रूम, कथ तर्हि सद्वितीयत्वादेर्हेयत्वमुक्तमिति ? उच्यते – तत्त्वपदसामानाधिकरण्य पदार्थविशेषणविशेष्यताप्रभावेण तत्त्वपदार्थज्ञानेन तत्तद्गताज्ञानमेव [?] बाध्यते ततश्च तत्तत्कार्यं निवर्तते । तथा च सति तदर्थस्य पारोक्ष्य त्वमर्थस्य सद्वितीयत्व च निवर्तत इति ब्रूम –इत्यभिप्राय । अतो **न वैयधिकरण्यादि चोद्यस्यावसरोऽस्तीति** । यद्विषयक यज्ज्ञानम्, तदधिकरणकार्येव एव तज्ज्ञानेन बाध्यत इति स्थिति । इह पुनस्तदर्थविषयक ज्ञान त्वपदार्थगत सद्वितीयत्व निरस्यति, त्वपदार्थज्ञान च तदर्थगत पारोक्ष्यं निरस्यतीत्युच्यते, अतो वैयधिकरण्यम् – इति चोद्य वैयधिकरण्यचोद्यम् । न तस्यावसरोऽस्त्यत्र । यथैव सामानाधिकरण्यप्रभावेण विशेष्यविशेषणतासंबन्धप्रभावेण च पद संबन्धात् प्रागपि स्थितमेवोत्पले नैल्य प्रागुत्पलत्वानवबुद्ध नीलपदेनाव बोध्यते, एवमिहापि बोध्यम् । दृष्टान्तस्तु अनवबुद्धबोधनाशमात्रे ग्राह्य, न त्विह नीलोत्पलवत् पदार्थद्वयम्, तत्संसर्गो वा पदसामानाधिकरण्येन विवक्ष्यत इति मन्तव्यम् । अद्वितीयप्रत्यगात्मैव हि पदद्वयेनापि बोध्यते भ्रान्तिसिद्धसद्वितीयत्वपारोक्ष्ययोर्निरसनेन – इतिभावेनोक्त 'न वैयधिकरण्यादि चोद्यस्यावसरोऽस्ति' इति । आदिशब्देन वैयधिकरण्यदोषपरिहारार्थं तत्पदेनैव त्वपदार्थोऽपि बोध्यते इत्युच्यते चेत् तत्त्वपदयो पर्यायतापत्ति, ततश्च पदद्वयप्रयोगवैयर्थ्यम्, तत्परिहारार्थम् एकपदमात्रादाने तु वाक्यत्वाभाव प्रसङ्ग – इत्यादि चोद्यानि संगृह्यन्ते । उक्तेऽर्थे श्लोकमवतारयति – **तदिद-मभिधीयत इति** ॥

( मूलम् )

कस्मात् पुनः कारणात् तदर्थोऽद्वितीयलक्षणः त्वमर्थेन प्रत्यगात्मना अपृथगर्थः सन् अवियोत्थं सद्वितीयत्वं निहन्तीति ? उच्यते । विरोधात्, तदुच्यते —

संसारिताद्वितीयेन पारोक्ष्यं चाऽऽत्मना सह ।
प्रासङ्गिके विरुद्धत्वात् तत्त्वम्भ्यां बाधनं तयोः ॥ ७९ ॥

( हेयोपादेयविवरणम् )

नन्वेवमपि तदर्थस्त्वंपदार्थेन सहैकीभावाय प्रवृत्त, न तु कस्यचिन्निषेधनाय । तत् कथं तेन त्वमर्थगता सद्वितीयता निवर्त्येत ? इत्याक्षिपति — कस्मात्पुनरिति ॥ अपृथगर्थं सन् एकमेवार्थम् अद्वितीयप्रत्यगात्मरूप तात्पर्येणावबोधयितुं सनद्ध सन् इत्यर्थ । कस्मात् कारणात् अवियोत्थ सद्वितीयत्वं निहन्ति ? यदि हि सद्वितीयतानिषेधार्थमपि व्याप्रियेत, तर्हि वाक्य भिद्येत इति भाव । सिद्धान्ती तु विरोधादेव तद्वति । ज्ञानस्य हि स्वोत्पत्तिमात्रेण स्वविरोध्यज्ञाननिवर्हणं स्वभाव इत्याह— उच्यते, विरोधात् इति । एवमर्थे श्लोक इति तमवतारयति — तदुच्यते इति । तस्मादुच्यत इत्यर्थ ॥

संसारितेति ॥ संसारिता तावत् प्रासङ्गिकी, त्वपदप्रयोगाद् भ्रान्तिप्रसक्ता, न तु विवक्षिता । एवं पारोक्ष्यमपि तत्पदप्रयोगात् प्रसक्त न तु विवक्षितम् । एवं च विरुद्धत्वात्—संसारिताया प्रासङ्गिक्या प्रतिपिपादयिषितेनाद्वितीयत्वेन विरुद्धत्वात्, पारोक्ष्यस्य च प्रासङ्गिकस्य प्रतिपिपादयिषितेन आत्मत्वेन विरुद्धत्वात्, तयो संसारितापारोक्ष्ययो, तत्त्वम्भ्या तदर्थत्वमर्थाभ्या बाधनं सङ्गच्छत इत्यर्थ ॥ ७९ ॥

( मूलम् )

तत्त्वमर्थयोस्तु बाधकत्वे अन्यदपि कारणम् उच्यते —

अज्ञातपुरुषार्थत्वाच्छ्रौतत्वात् तत्त्वमर्थयोः ।
स्वमर्थमपरित्यज्य बाधकौ स्तां विरुद्धयोः ॥ ८० ॥

( क्लेशापहारिणी )

तदेव तत्त्वमर्थौ बाधकौ, ससारितापारोक्ष्ये बाध्ये इत्यत्र विरोध कारणम् इत्युक्तम् । अथ तत्त्वमर्थावेव बाधकौ इत्यत्र कि विनिगमकम् ? वैपरीत्येनैव बाध्यबाधकभाव कि न स्यात् ?– इत्याशङ्कामुत्थाप्य तत्परिहार समर्पकत्वेनोत्तरश्लोकमवतारयति – तत्त्वमर्थयोस्त्विति ॥

अज्ञातपुरुषार्थत्वादिति ॥ तत्त्वमर्थयोरद्वितीयत्वप्रत्यक्त्वयो , अज्ञात पुरुषार्थत्वात् तौ बाधकौ, न बाध्यौ । अज्ञात हि प्रतिपादनीय वाक्येन, फलवच्च । ज्ञातस्यैव प्रतिपादने अनुवादत्वेन, निष्फलस्य तु प्रतिपादने अधिकार्यभावेन च श्रुतेरप्रामाण्यप्रसङ्गात् । अत्र त्वमर्थस्याद्वैतत्व तदर्थस्य च प्रत्यगात्मत्व चाज्ञातम्, प्रमाणान्तरेणानवगतम् , पुरुषार्थत्व च तज्ज्ञान स्यास्ति , तेन सर्वक्लेशप्रहाणात्, नित्यसुखप्राप्तेश्च । तदेवम्, अज्ञातत्वात् पुरुषार्थत्वात्, तत्त्वमर्थयो प्रत्यगात्मत्वाद्वितीयत्वयो , तयोरेव च श्रौतत्वात् तावेव स्वविरुद्धयो संसारित्वपरोक्षत्वयोरनूद्यमानयोर्निष्फलयोर्बाधकौ इति युक्तम् इत्यर्थ । अतो न वैपरीत्येन बाध्यबाधकभाव शक्यशङ्क इति भाव ॥ ८० ॥

## १८. तत्त्वमस्यादिवाक्यैः प्रसङ्ख्यानं न विधीयते

( मूलम् )

एवं तावद् यथोपक्रान्तेन प्रक्रियावर्त्मना न प्रत्यक्षादि-प्रमाणान्तरैर्विरोधगन्धोऽपि संभाव्यते । यदा पुनः सर्व-प्रकारेणापि यतमाना नैवेमं वाक्यार्थं समाधयामः, प्रत्यक्षादि-प्रमाणान्तरविरोधत एव, तस्मिन्नपि पक्षे उच्यते –

प्रत्यक्षादिविरुद्धं चेद् वाक्यमर्थं वदेत् क्वचित् ।
स्यात्तु तद्दृष्टिविध्यर्थं योषाग्निवदसंशयम् ॥ ८१ ॥

( क्लेशापहारिणी )

तदेवं प्रत्यक्षाद्यविरोधेनैव वाक्यादवाक्यार्थप्रतिपत्तिर्भवति इत्येतत् प्रतिपादितं वाक्यव्याख्यानग्रन्थेन । अथाधुना वाक्यज्ञानं नैव जायते प्रत्यक्षादिविरोधाद् वाक्यज्ञानस्य, अतः प्रसङ्ख्यानेन ज्ञानं सपादयेत् इति वाक्यार्थं स्वीकुर्वाणानां मतं निराचिकीर्षुस्तत्र पातनिकां करोति — एवं तावदिति ॥ प्रत्यक्षादिप्रमाणान्तरावगतं संसारित्वादि न विवक्ष्यते, अद्वितीयप्रत्यगात्मैव तु लक्ष्यार्थतया विवक्ष्यते— इत्येवम् उपक्रान्तेन वर्त्मना, अन्वयव्यतिरेकपुरःसरं वाक्यमेवावाक्यार्थरूपमात्मानं प्रतिपादयति ; अन्वयव्यतिरेकमात्रान्नावाक्यार्थप्रतिपत्तिः, किं तर्हि, अविचारितसिद्धाज्ञानव्यपोहनेन तत्त्वमस्यादिवाक्यमेव दशमवाक्यवत् अद्वितीयप्रत्यगात्मत्वं बोधयति, वाक्यस्थपदयोः सामानाधिकरण्यम्, तदनु तदर्थयोर्विशेषणविशेष्यता, ततः परं पदार्थयोरद्वितीयप्रत्यगात्मनश्च लक्ष्यलक्षणभावः-इत्येतदुपक्रान्तं प्रक्रियावर्त्म वाक्यव्याख्यानमार्गे., तेन प्रदर्शितम् । अतः प्रत्यक्षादिप्रमाणैः श्रुतिवाक्यं नैव विरुध्यते, भिन्नविषयत्वात् श्रुतेः प्रमाणान्तराणां च — इत्युपपादितं भवतीत्यर्थः ॥

अथ प्रसङ्ख्यानविधिमतं शङ्कयति – यदा पुनरिति ॥ प्रसङ्ख्यानवादिनो हि मतमेतत् यद् वाक्यजन्यं ज्ञानं नैव स्वार्थं निष्प्रत्यूहं समर्पयितुमलं स्वोत्पत्तिमात्रेण, प्रत्यक्षादिरूपप्रबलप्रमाणान्तराहितसंसारित्ववासनया प्रतिबन्धादिति । तदाह – नैवेमं वाक्यार्थं सम्भावयामः । प्रत्यक्षादिप्रमाणान्तरविरोधादेवेति । अभ्युपगम्यापि विरोधं वाक्यस्य गतिरुच्यते उत्तरश्लोकेनेत्याह – तस्मिन्नपि पक्षे उच्यते इति ॥

प्रत्यक्षादिविरुद्धं चेदिति ॥ प्रमाणान्तरविरुद्धमेवार्थं चेद् वाक्यं क्वचिद् वदेत्, तर्हि वस्तुनिष्ठमित्येव तावन्न स्याद् तत्, विरुद्धव्याहारत्वेन अप्रामाण्यप्रसङ्गात् तस्य, किं तु तद् योषाग्निवत् 'योषा वाव गौतमाग्निः' (छा. ५-८-४) इत्यत्रेव दृष्टिविध्यर्थं स्यात् । योषिति अग्निदृष्टिः कर्तव्या इति हि तत्रार्थः कर्तव्य, न हि स्त्रिया अग्नित्वं वस्तुत एवास्तीति ।

तस्मात् यत्र क्वचित् वाक्ये प्रत्यक्षादिविरुद्धम् उच्यत इव, तत्र दृष्टिविधानमेव कल्प्यते, न हि विवेकिभिस्तत्रापि योषित्यग्नित्वज्ञानोदयार्थं प्रसङ्ख्यान विधीयत इति विरुद्ध कल्प्येत -- इति भाव ॥ ८१ ॥

( मूलम् )

यदा तु तत्त्वमस्यादिवाक्यं सर्वप्रकारेणापि विचार्यमाणं न क्रियां कटाक्षेणापि वीक्षते, तदा प्रसङ्ख्यानादिव्यापारो दुःसम्भाव्य इति । तदुच्यते --

वस्त्वेकनिष्ठं वाक्यं चेन्न तस्य स्यात् क्रियार्थता ।
वस्तुनो ह्येकरूपत्वाद् विकल्पस्याप्यसम्भवः ॥ ८२ ॥

( क्लेशापहारिणी )

अत्रापि तर्हि तदर्थदृष्टिविधिपरमेव वाक्यमित्यस्तु, तत्राह -- **यदा त्विति** ॥ न तावदिह योषाग्निवाक्यवदिद वाक्य शक्य दृष्टिविधान परत्वेन नेतुम् । दृष्टफलत्वात् । तत्र हि वाक्यशेषे 'तद्य इत्थ विदु ' (छां ५-९-१, २) इति तद्दृष्ट्यधीनफलमुपासकाना ब्रह्मलोकप्राप्तिरित्युच्यते 'स एतान् ब्रह्म गमयत्येष देवयान पन्था ' इत्युपसंहारात् । इह पुन सद्ब्रह्मण एव तेजआदिसृष्ट्व तस्यैव तत्र प्रवेश च दर्शयित्वा 'तत्त्वमसि' इति सिद्धवद् दृष्टमेव सदात्मभावमुपदिशतीति वैषम्यम् । न च दृष्टिविधानपक्षे 'आचार्यवान् पुरुषो वेद ' (छा ६-१४ २) इति ज्ञानोपायोपदेश सगच्छते, दृष्टिविधानेनैव वेदनसिद्धे । न चोपदेशानन्तर किञ्चिदनुष्ठेयमिहोपदिश्यते प्रासव्य वा, ' तद्धास्य विजज्ञौ ' (छा ६-१६-३) इति विज्ञानप्राप्तिमात्रेण परिसमाप्तिदर्शनात् । तस्मात् सूक्तमेतत् यत्तत्त्वमस्यादिवाक्य सर्वप्रकारेणापि विचार्यमाण न क्रिया कटाक्षेणापि वीक्षत इति । नन्वस्त्वेव किमत ?-- इत्यत आह -- **तदा प्रसङ्ख्यानादिव्यापारो दुःसंभाव्य इति** । यद्यपि प्रसङ्ख्यान मतमेवात्र निराकरणायोपात्तम्, तथापि क्रियाविधिमात्रे शक्यातिदेशनोऽयन्याय इति मत्वा आह -- **'प्रसङ्ख्यानादिव्यापार'** इति । प्रसङ्ख्यानादि इत्यादि-

पदेन-(१) वाक्यजन्य ज्ञान तद्भावनोपचयात्तु शेषमज्ञानमपनयति,(२) यद्यपि तत्त्वमसिवाक्यजन्य ज्ञान ससृष्टात्मकत्वान्न ब्रह्मात्मवस्तुयाथात्म्यावगाहि भवेत्, तथापि तदेवाभ्यासाद् विज्ञानान्तरमुत्पादयत्यवाक्यार्थबोधकम्– इति चैवमादिपक्षा अप्यनुष्ठेयक्रियानुप्रवेशद्वारेण तत्त्वमस्यादे प्रामाण्यमीप्सन्तोऽत्र सगृहीता भवन्ति । उक्तार्थे श्लोकमवतारयति – तदुच्यत इति ॥

वस्त्वेकनिष्ठमिति ॥ वाक्य वस्तुमात्रे तात्पर्यवदिति चेदभ्युपगम्यते, तर्हि न तस्य क्रियार्थता संभवति । अयमाशय – वाक्यगताना पदानाम् अद्वितीयप्रत्यगात्मनि निश्चिते समन्वयेऽवगम्यमाने न नियोगपरत्वकल्पना युक्ता । श्रुतहान्यश्रुतकल्पनाप्रसङ्गादिति । ननु वाक्य वस्तुपरमित्यपि भवतु, पक्षे प्रसङ्ख्यानादिविधायकमपीति च, उदितानुदितहोमविधिवाक्यवत् । तत्र को दोष ? इत्याशङ्क्याह – वस्तुनो ह्येकरूपत्वात् इति ॥ अयमाशय । क्रियाया हि पुरुषतन्त्राया विकल्प संभवति एव वा करोति, अन्यथा वा इति, न तु वस्तुनि । एकरूपत्वात् तस्य । न ह्येकस्मिन्नेव वस्तुनि स्थाणुर्वा पुरुषो वा इति तत्त्वज्ञान भवति । तथा प्रकृतेऽपि अद्वयात्मरू वस्तु चेत् तस्यैकरूपत्वात् नित्यसिद्धैकस्वभावत्वात् न प्रसङ्ख्यानादिव्यापारायत्ता तत्सिद्धि , प्रसङ्ख्यानादिव्यापारसाध्य चेत् तन्न नित्यसिद्धम् , न ■ एकरूप वस्तु नित्यसिद्ध व्यापारसाध्य चेत्यर्धवैशस भवतीति । अत मूल वस्तुमात्रनिष्ठ चेद् वाक्य तस्य न क्रियार्थतापि स्यादिति । यद्यपि देवतादिवस्तुप्रमेयक वाक्यम् उपासनादिक्रियापरमपि दृष्टम् । तथापि न तद् देवतैकनिष्ठम्, किं तर्हि उपासनादिक्रियानिष्ठम्, तच्छेषतयैव तु देवता समर्पयतीति भावेन 'वस्त्वेकनिष्ठ चेत्'– इत्युक्तमिति ध्येयम् ॥ ८२ ॥

( मूलम् )

भिन्नविषयत्वाच्च न प्रमाणान्तरविरोधः । कथम् ? उच्यते –

अपूर्वाधिगमं कुर्वत् प्रमाण स्यान्न चेन्न तत् ।
न विरोधस्ततो युक्तो विभिन्नार्थावबोधिनोः ॥ ८३ ॥

( क्लेशापहारिणी )

यत्र प्रमाणान्तरविरुद्ध वाक्य तत्र दृष्टिविधानार्थता तस्य कल्प्या इत्युक्तमधस्तात्, प्रसङ्ख्यानवादव्यावृत्त्यर्थम् । प्रसंख्यानवादी हि प्रत्यक्षादिविरुद्धत्वात् तत्त्वमस्यादिवाक्यम् उत्पन्नमात्र न स्वार्थे प्रमामुत्पादयतीत्यत प्रसङ्ख्यानविधिं कल्पयति । तत्र विरोधाभ्युपगमेऽपि दृष्टिविधानकल्पनं स्यात् न प्रसंख्यानविधिकल्पनमित्युक्तम् । अथाभ्युपगमवाद परित्यज्य उपक्रान्तेन प्रक्रियावर्त्मना 'न प्रत्यक्षादिप्रमाणान्तरैर्विरोधगन्धोऽपि सम्भाव्यत' इति यत् प्रतिज्ञातम्, तदेवानुसृत्य वाक्यप्रत्यक्षयोर्विरोध एव नास्ति, कुतस्तदालम्ब्य प्रसङ्ख्यानकल्पनमित्याशयेनाऽऽह-भिन्नविषयत्वाच्चेति ॥ तदेव कथमित्येत च्छङ्कामुत्थाप्य तदपनोदाय श्लोकमवतारयति – कथम् ? इति, उच्यते इति च ॥

अपूर्वाधिगम इति ॥ अनधिगतार्थस्याधिगमयित्रेव हि प्रमाण नाम, न चेत् अपूर्वार्थं अधिगमयति न तत् प्रमाणम् । एव च प्रमाणाना प्रत्येक स्वस्वविषयाधिगमे एव व्यापारात् विभिन्नार्थावबोधिनो शब्दप्रत्यक्षयो विरोधो न युक्त । प्रत्यक्ष हि शब्दरूपादिपराग्विषयम्, शब्दश्चाद्वितीय प्रत्यगात्मविषय । तत्र कुतो विरोध ? – इति भाव ॥ ८३ ॥

( मूलम् )

य एवमपि भिन्नविषयाणा विरोधं वक्ति, सोऽत्रापि विरोधं ब्रूयात् –

नायं शब्दः कुतो यस्माद्रूपं पश्यामि चक्षुषा ।
इति यद्वत्तथैवायं विरोधोऽक्षजवाक्ययोः ॥ ८४ ॥

( क्लेशापहारिणी )

उक्तमविरोध दृष्टान्तेन स्पष्टयति – य एवमपीति ॥

'तथैवायं विरोधः' इति । शब्दश्रवणरूपदर्शनयोर्भिन्नविषययोर्यथा विरोधो मुधैव विकल्प्यते, तथैवाय शब्दप्रत्यक्षयोरित्यर्थ ॥ ८४ ॥

( मूलम् )

प्रमाणानां सतां न विरोधः श्रोत्रादीनामिव भिन्नविषयत्वात् । ययोश्चाभिन्नविषयत्वं तयोराशुनकुलयोरिव प्रतिनियत एव बाध्यबाधकभावः स्यात् । अतस्तदुच्यते –

प्रत्यक्षं चेच्च शाब्दं स्याच्छब्दं चेदक्षजं कथम् ।
प्रत्यक्षाभासः प्रत्यक्षे ह्यागमाभास आगमे ॥ ८५ ॥

( क्लेशापहारिणी )

प्रत्यक्षादीना प्रमाणानां न विरोधः, भिन्नविषयत्वादित्युक्तम् । प्रमाणाभासाना तु यथार्थप्रमाणबाध्यत्वमभ्युपगम्यत एवास्माभिरपीत्यन्यदेतत् । तथा च तत्त्वमसीति वाक्यस्य प्रत्यक्षाद्यबाध्यत्वं सुस्थमित्याशयवानाह – **प्रमाणानां सताम् इति** ॥ **ययोश्चाभिन्नविषयत्वमिति** ॥ प्रमाणप्रमाणाभासयोरिति शेषः । तत्र हि पूर्वा मति बाधित्वैवोत्तरा जायत इति प्रमाणाभासत्वं बाध्यस्येति क्लिप्यत इत्यर्थः । उक्तेऽर्थे श्लोकमवतारयति – **अतस्तदुच्यत इति** ॥

**प्रत्यक्षं चेदिति** ॥ न हीन्द्रियजन्यं शब्देन जन्यते, न च चोदनानिमित्तं धर्मज्ञानं प्रत्यक्षादिनिमित्तैरपि जन्यते – इत्यभिप्रायः । तथा च **जैमिनीयं सूत्रम्**–'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्' इति । (जै.सू. १-१-४) अनुमानादीनामपि प्रत्यक्षपूर्वकत्वात् शब्दमात्रनिमित्तेऽर्थे अनिमित्तत्वम् इत्यपि द्रष्टव्यम् । इदमुक्तं भवति । यच्छब्देन बोध्यते न तत्प्रत्यक्षादिना बोध्यते बाध्यते चेति । यस्मात् प्रत्यक्षे विषये नागमः क्रमते । तस्य प्रत्यक्षसिद्धवादित्वे अनुवादकत्वप्रसङ्गात्; तस्मात् यन्निरूपितप्रत्यक्षसिद्धम्, नागमस्य तत्र प्रामाण्यं भवेत् । अतः प्रत्यक्षविरुद्ध आगमः आगमाभास एव । एवं प्रमाणभूते आगमे न प्रत्यक्षं क्रमत इति । तस्यापि तत्राभासत्वमेवेत्यर्थः । यथोक्तम् उपदेशसाहस्र्याम्–
'प्रत्यक्षादीनि बाधेरन् कृष्णलादिषु पाकवत् । अक्षजादिनिमित्तैः, कथं

साद्वाक्यबाधनम् ॥' (उप १८-१७७) इति । तस्मात्, यत्र यत्र विरोध इव प्रमाणयो, तत्र प्रत्यक्षयोरेव द्वयो, आगमजन्ययोरेव द्वयोर्ज्ञानयो विरोध । तत्र यत्र प्रत्यक्षमेव ज्ञानद्वयम्, तत्र एकस्य प्रत्यक्षाभासत्वमिति वाच्यम् । यथा शुक्तिकायामध्यारोपितरजतस्य । यत्र तु आगमजन्यमेव ज्ञानद्वयम्, तत्रैकस्य दुर्बलस्यागमाभासत्व बाध्यत्व चेत्यनवद्यम् । अत्रोत्तरार्धे छन्दोभङ्गो भूरिगनुष्टुब्लक्षणाङ्गीकारेण प्रतिसमाधेय ॥ ८५ ॥

( मूलम् )

न च प्रतिज्ञाहेतुदृष्टान्तन्याय इह संभवति शब्दादीनां प्रत्येकं प्रमाणत्वात् । अत आह –

स्वमहिम्ना प्रमाणानि कुर्वन्त्यर्थावबोधनम् ।
इतरेतरसांनिध्ये प्रामाण्य नेष्यते स्वतः ॥ ८६ ॥

( क्लेशापहारिणी )

ननु अनेकविषयत्वेऽपि निमिति प्रत्यक्षस्य आगमस्य वा प्रमाणाभासत्व मान्येयम् ? परस्परसहायकत्वेन सम्भूयकारित्वे विषयप्रतीतिदार्ढ्यमेव लभ्यते इति कि न स्यात् इत्याशङ्क्याऽऽह – न चेति ॥ परार्थानुमाने 'पर्वतो वह्निमान्' इति प्रतिज्ञा, 'धूमवत्त्वात्' इति हेतुना वह्नि साध्यते, 'महानसवत्' इति दृष्टान्तेन लिङ्गलिङ्गिसंबन्धो नियमेनास्तीति निदर्शितो हेतु साध्यसमर्पणे समर्थ इति स्थिति । तत्र यथा प्रतिज्ञादयोऽन्योन्यापेक्षया पक्षस्य साध्य वत्त्वज्ञापने समर्था भवन्ति, एव प्रकृतेऽपि शब्दप्रत्यक्षादयोऽप्यन्योन्यसहाया प्रत्यगात्मनस्तत्त्वमवगमयन्ताम् इति शङ्कायामाह न चासौ न्याय इह संभवति । कुत ? शब्दादीना प्रत्येक प्रमाणत्वात् । शब्दादयो हि स्व स्व प्रमेय स्वातन्त्र्येणैव समर्पयन्त प्रमाणतामश्नुवते । प्रतिज्ञादयस्तु सम्भूयैवानुमानाख्य प्रमाण समर्पयन्तीति वैषम्यमिति भाव । एतस्मिन्नर्थे श्लोकमवतारयति – अत आहेति ॥

स्वमहिम्नेति ॥ प्रत्यक्षादीन्यपि प्रमाणानि स्वमहिम्ना अर्थावबोधनं कुर्वन्ति । इतरसाहाय्यनिरपेक्षमेव स्वमर्थम् अवबोधयदेव हि प्रमाणं नाम । प्रतिज्ञाहेतुदृष्टान्तन्यायमनुसृत्य इतरेतरसाचिव्येनैव प्रमाणानि स्वं स्वं विषयमवबोधयन्तीति पक्षे तु स्वतःप्रामाण्यं नेष्यत एवेति स्यात् । अयमाशयः — प्रसंख्यानवादिनः प्राहुः "शब्दयुक्तिप्रसंख्यानैरात्मना च मुमुक्षवः । पश्यन्ति मुक्तमात्मानं प्रमाणेन चतुष्पदा ॥"[1] इति । तत्र दूषणमेतत् न प्रत्येकं प्रामाण्यं स्यात् शब्दादेर्भवतः पक्षे चतुर्भिरपि पादैः संभूय प्रतिज्ञादिन्यायेन प्रमितिर्जन्यते इति वदतः । तच्चानिष्टम्, यतः प्रमाणं नाम स्वत एवान्यनिरपेक्षं स्वविषयावबोधकमिति । न च भवन्मतेऽपि पादास्ते मेयोपलब्धये संहन्यन्ते, किं तु मित्युत्पत्त्य एव । तदेतदुक्तं संबन्धवार्तिके "न संभूय यतः पादास्तैलवर्त्यग्नयो यथा । मितेः स्वरूपलाभाय न तु मेयोपलब्धये ॥" (सं. वा. ८११) इति ॥ ८६ ॥

( मूलम् )

न च सुखदुःखादिसंबन्धोऽवगत्यात्मनः प्रत्यक्षादिभिः प्रमाणैर्गृह्यते येन विरोधः प्रत्यक्षादिप्रमाणैरुद्भाव्यते । कथम् ? शृणु–

दुःखिताद्यगतेश्चेत्[2] स्यान्न प्रमीयेत सात्मवत् ।
कर्मण्येव प्रमा न्याय्या न तु कर्तर्यपि क्वचित् ॥ ८७ ॥

( क्लेशापहारिणी )

अहं दुःखीति प्रत्यक्षजेन ज्ञानेन सदसीति वाक्योत्थं ज्ञानं विरुध्यते इति शङ्कामुत्थाप्य भिन्नविषयत्वादक्षजागमजयोर्ज्ञानयोर्न विरोधोऽस्तीति परिहार उक्तः । वस्तुतस्तु सुखित्वदुःखित्वादेरात्मधर्मत्वं नैव प्रमाणसिद्धम् इतीदानीं विरोधशङ्का व्यपनीयत इत्याह — न चेति ॥ दुःखित्वमनात्मधर्म इति कथं ज्ञायते ? — इत्याशङ्कां परिहरन् श्लोकमवतारयति — कथमिति शृण्विति च ॥

1. सम्बन्धवार्तिकटीकाकारेण (सं. वा. ८१०) समुदाहृतोऽयं श्लोकः कुत्रत्य इति न विज्ञायते ॥ 2. 'अवगतेः' इति पाठो न साधुः ॥

दुःखित्वज्ञानेन प्रत्यक्षजेनागमजन्यं ज्ञानं विरुध्यते इत्येतत् प्रसंख्यानवादिनो मतं निराकृतं प्रमाणवृत्तनिरूपणद्वारेण । भिन्नविषयत्वात् प्रत्यक्षागमयोर्न विरोधसंभवः, समानविषययोस्तु बाध्यबाधकत्वं स्यादेवेत्यत आगमजन्यज्ञानेन सर्वं द्वैतं बाध्यतैवेति न दोषः – इति । सर्वमिदं प्रत्यक्षादिप्रमाणैरात्मनः सुखदुःखादिसंबन्धोऽस्तीति गम्यते इत्यभ्युपगम्य । वस्तुतस्तु तस्य स्वाऽऽत्मधर्मत्वं न केनापि प्रमाणेन गृह्यत इति परमसिद्धान्त माह – न चेति ॥ 'अवगत्यात्मन' इति साभिप्रायं विशेषणम् । अवगते कदापि केनचिद्ग्राह्यत्वायोगात् । न हि धर्मिणोऽग्राह्यत्वे तद्धर्मोणां ग्राह्यत्वं संभवति, स्वबन्ध्याग्रहणात् इत्यभिप्रायः । अभिप्रायमजानन् पृच्छति कथमिति । एतदुत्तरत्वेन श्लोकमवतारयति – शृण्विति ॥

दुःखितेति ॥ दुःखिता यद्यवगतेः धर्मः स्यात् सा न केनचित् प्रमाणेन प्रमीयेत आत्मवदेव । आत्मा प्रमातृरूपो न तावत् स्वेन ग्राह्यः, कर्मकर्तृत्वविरोधात्, नाप्यनात्मना प्रमाणेन । कुतः ? कर्मण्येव हि पराग्विषये प्रमा न्याय्या, न तु कर्तर्यपि प्रमातरि क्वचित् । लोकेऽपि हि प्रमाता प्रमेयपरिच्छित्तये प्रमाणान्याददते, स्वयं तु प्रमाणव्यापारात् प्रागेव सिद्ध इति स्थितिः, किमु वक्तव्यं नित्यावगतिरूपः प्रत्यगात्मा न केनचिदपि प्रमाणेन प्रमीयते इति । इत्थं च आत्मनोऽविषयत्वे सति न केनचित् प्रमाणेन तस्य प्रमेयता शक्यकल्पना स्यात् । अत एव तस्य दुःखित्वादिसंबन्धः केनचित् प्रमाणेन गृह्यत इति दुर्भणमित्यभिप्रायः । उपलक्षणमेतत् । आत्मज्ञानान्तत्वाच्च सर्वप्रमाणव्यवहारस्य इत्यपि द्रष्टव्यम् । प्रमातृत्वमेव ह्यात्मनो निवर्तयत्यागमः । तत्र कुत एव प्रमाणव्यापाराशङ्केति ॥ ८७ ॥

(मूलम्)

अभ्युपगमेऽपि च प्रमातृत्वानशतेनापि नैव त्वं सम्भावितदोषान्मुच्यसे । अत आह –

प्रमाणदन्दमूलत्वाद्दुःखित्वं केन वार्यते ।
अग्युष्णत्वमिवाहन्तेर्नैरात्म्यं दोति सौगतम् ॥ ८८ ॥

( क्लेशापहारिणी )

अपि चाभ्युपगमेऽपि दुःखित्वादेरात्मधर्मत्वस्य न कश्चिल्लाभः प्रसङ्ख्यानवादिनः, प्रत्युत अनिष्टप्राप्तिरपीत्याह – अभ्युपगमेऽपीति । उक्तार्थोपपादकं श्लोकमवतारयति – अत आहेति ॥

प्रमाणवद्धमूलत्वादिति ॥ प्रमाणेन रूढमूलत्वात् आत्मस्वभावभूतं सत् दुःखं केन प्रसङ्ख्यानेन तदन्येन वा उपायेन वार्यते निवर्त्यते ? न केनापि निवर्त्येतेत्यर्थः । तत्र दृष्टान्तः – अग्न्युष्णवदिति ॥ न ह्यग्नेः स्वभावभूतम् औष्ण्यं केनाप्युपायेन निवर्त्येत। अथ तस्यापि कथञ्चित् निवृत्तिश्चेत् भविता सहैव धर्मिणाग्निना निवृत्तिः स्यात् । एवम् आत्मनश्चेत् स्वभावभूतं दुःखित्वं निवर्त्येत इति कल्प्येत, तर्हि सहैवाऽऽत्मना निवर्त्येत, तथा हि सौगतसुगतानुयायिमतं नैरात्म्यम् प्रति । न चैतदिष्टं भवत इति भावः । तदेतदुक्तं संबन्धवार्त्तिकेऽपि– 'आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तर्हि मुक्तताम् ॥ न हि स्वभावो भावानां व्यावर्त्येतौष्ण्यवद्रवेः । स्वभावाद् विनिवृत्तोऽर्थो निःस्वभावः खपुष्पवत् ॥ नाविनश्यन् यतो वह्निर्व्यावर्त्येतौष्ण्यतः क्वचित् ॥' (सं. वा. ५५–५७) इति ॥

( मूलम् )

अथ मतम् –

निराकुर्यात् प्रसंख्यानं दुःखित्वं चेत् स्वनुष्ठितम् ।
प्रत्यक्षादिविरुद्धत्वात् कथमुत्पादयेत् प्रमाम् ॥ ८९ ॥

( क्लेशापहारिणी )

ननु सम्यगनुष्ठितं प्रसंख्यानं प्रत्यक्षावगतमपि दुःखित्वं विनिवर्तयेदिति यो वैयात्याद् वदेत् तं प्रति श्लोकान्तरमवतारयति – अथ मतमिति ॥

निराकुर्यादिति ॥ यदि नाम प्रत्यक्षविरुद्धमपि ज्ञानम् उत्पादयेत् प्रसंख्यानम्, तर्हि भावनामात्रफलत्वात् नैव तज्ज्ञानं यथार्थं भवेदित्यभिप्रायः । अथ प्रमाणमेव प्रसंख्यानमित्यभिनिवेशः, तर्हि यथैव शास्त्रं प्रत्यक्ष

विरोधान्न प्रमामुत्पादयति, एवमेव प्रत्यक्षविरोधादेव प्रसंख्यानमपि नैव प्रमामुत्पादयेत् इत्यपि द्रष्टव्यम् ॥ ८९ ॥

( मूलम् )

ननु प्रसंख्यानं नाम तत्त्वमस्यादिशब्दार्थान्वयव्यतिरेकयुक्तिविषयबुद्ध्याम्रेडनमभिधीयते । तच्चानुष्ठीयमानं प्रमितिवर्धनया परिपूर्णां प्रमितिं जनयति न पुनरैकाग्र्यवर्धनया; यथा अशेषाशुचिनीडे स्त्रीकुणपे कामिनीति निर्वस्तुकः पुरुषायासमात्रजनितः प्रत्यय इति । तन्न, यतः –

अभ्यासोपचयाद्बुद्धेर्यत् स्यादैकाग्र्यमेव तत् ।
न हि प्रमाणान्यभ्यासात् कुर्वन्त्यर्थावबोधनम् ॥ ९० ॥

अभ्यासोपचिता कृत्स्नं भावना चेन्निवर्तयेत् ।
नैकान्तिकी निवृत्तिः स्याद्भावनाजं हि तत्फलम् ॥ ९१ ॥

( क्लेशापहारिणी )

अथ प्रसंख्यानवादी पुन प्रत्यवतिष्ठते – नन्विति ॥ प्रसंख्यान शब्दयुक्त्याम्रेडन तयोरभ्यास । तच्च प्रमितिवर्धनया परिपूर्णां प्रमितिं जनयति, न पुनरैकाग्र्यवर्धनया इति । ऐकाग्र्यवर्धनाया निदर्शनम् 'यथाशेषाशुचिनीडे' इति । स्त्रीकुणपे हि 'कमनीयेयम्' इति प्रत्ययो निर्वस्तुक, विकल्पमात्रम् । यस्मात् पुरुषायासमात्रजनित स, न तु वस्तुतन्त्र इत्यर्थ । इह पुन प्रसंख्यान 'शब्दयुक्तिप्रसंख्याने' इति प्रागुदाहृतनीत्या पादचतुष्टयात्मक प्रमाणाश , तत्रैकैकस्मात् पादात् प्रमितेर्वृद्धिरित्यभ्युपगम्यत इति विशेष । तत्र शब्दस्तत्त्वमस्यादि परोक्षज्ञानजनक , युक्तिरन्वयव्यतिरेकन्यायानुसरणम् ; प्रसंख्यान तु तदुभयाभ्यासरूप निदिध्यासनशब्दवाच्यम् , आत्मा च पादत्रितयजन्योऽनुभव , विगलितसंसर्गपारोक्ष्यरूप । एव चतुष्पान्मानैकत्व बोध्यत इति न कोऽप्यत्र दोष । ऐकाग्र्यवर्धनया हि पूर्वश्लोकोक्तदूषण

लब्धप्रसरं भवेदिति भावः । तदेतन्निरासार्थत्वेन श्लोकद्वयमवतारयति – तन्न, यतः – इति ॥

अभ्यासोपचयादिति ॥ प्रमस्यानं नामाभ्यासः । न च प्रमाणस्याभ्यासात् प्रमेये अतिशयो जायते । शब्दयुक्त्यादीनां प्रत्येकं प्रमाणत्वे प्रत्येकमेव स्वस्वप्रमेयसिद्धौ स्वान्यसहायत्वं किमर्थम् ? सम्भूयैव प्रमाणत्वे प्रत्येकं प्रमितिवृद्धिरिति न सङ्गच्छते इत्यादिकं दूषणं सम्बन्धवार्तिकानुसारेण अनुसन्धेयम् । तस्मात्, बुद्धेरुपचयाद् यत् स्यात् तदैकाग्र्यमेव भावनारूपमेव, न प्रमितिरूपमित्यर्थः ॥

नन्वस्तु भावनैवैषा इति । ततोऽपि किम् ? इत्यत आह – अभ्यासोपचितेति ॥ कृत्स्नं दु:खित्वम् अभ्यासोपचिता भावनैव निवर्तयेच्चेत्, सा निवृत्तिः नैकान्तिकी स्यात् । नात्यन्तिकी नियमेन पुनरावृत्तिरहितैवेति न स्यात् । हि यस्मात् तत्फलं दुःखनिवृत्तिरूपं भावनाजं तदा स्यात्, न च भावना वस्तुतत्त्वं स्पृशतीति भावः ॥ ९१ ॥

(मूलम्)

अपि चाह –

दुःख्यस्मीत्यपि चेद्बुद्धा कल्पकोट्युपबृंहिता ।
सर्वपीयोऽभ्यासजा सास्त्वी भावनेत्यत्र का प्रमा ॥ ९२ ॥

ननु शास्त्रात् स्यास्त्वुत्यं भविष्यति । नैवम् । यथावस्थितवस्तुयाथात्म्यावबोधमात्रकारित्वात् शास्त्रस्य । न हि पदार्थशक्त्याधानकृच्छास्त्रम् । प्रसिद्धं च लोके –

भावनाजं फलं यत् स्यात् साधनं स्यात्कर्मणः फलम् ।
न तद् स्यात्स्थितं मन्तव्यं द्रविडेष्विव सङ्गतम् ॥ ९३ ॥

(क्लेशापहारिणी)

भावनाजन्यफलस्यानैकान्तिकत्वे युक्तिमपरलोकैर्नोच्यत इत्याह – अपि चाहेति ॥ कल्पकोटिभिरुपबृंहिता अनादिकालेनोपचिता 'दुःख्यस्मी'ति

भावना प्रसङ्ख्यानेन भावनात्मकेन ध्वस्ता चेत् स्वल्पीयोऽभ्यासजा अत्यल्प-कालानुष्ठितशब्दयुक्त्यभ्यासजन्या भावना स्थास्त्री न विनश्यतीत्यत्र का प्रमा ? न तत्र प्रमाणं संभावयाम इत्यर्थः ॥ ९२ ॥

शास्त्रमेव तस्य स्थास्नुत्वे प्रमाणमिति शङ्कयति – नन्विति ॥ 'न च पुनरावर्तते' (छा. ८–१५–१) इति शास्त्रप्रामाण्यादेव भावना-जन्यस्यापि फलस्य स्थायित्व भविष्यतीति चेन्मन्यसे इत्यर्थ । परिहरति – नैवमिति ॥ तत्र हेतुमाह – यथावस्थितेति ॥ सिद्धवस्तुव्यञ्जकं मानम्, न पदार्थशक्त्याधानकृत् । अत. शास्त्रमपि न कृतकस्य नित्यतामाधातुमल-मित्यभिप्राय । 'नास्त्यकृत कृतेन' इति न्यायोपबृंहितश्रुतिविरोधात्, अनावृत्तिश्रुतिर्भावनाजन्यस्य नित्यता बोधयितु न शक्नोति । तस्या ब्रह्मज्ञान द्वारेणाप्यनावृत्तिज्ञापनपरत्वोपपत्ते । 'इह न पुनरावृत्ति', 'इमं मानवमावर्तं नावर्तन्ते' इति विशेषणदर्शनात् वा कालान्तरे आवृत्तिरेव श्रुत्या बोध्यत इत्यपि शक्यमनावृत्तिश्रुतिव्याख्यान कर्तुम् इति भाव । अपि च दृष्टमेव लोके भावनाजन्यस्यानित्यत्वम् । तद्विरोधादपि न शास्त्रान्नित्यत्वमेष्टव्यं तस्येत्यस्मिन्नर्थे श्लोकमवतारयति – प्रसिद्धं चेति ॥

भावनाजमिति ॥ श्लोक स्पष्टार्थ ॥ ९३ ॥

( मूलम् )

यद्यपि प्रत्यक्षादिप्रमाणोपात्तमात्मनो दुःखित्वम्, तथापि तत्त्वमस्यादिवाक्योत्थप्रत्यय एव बलीयान् इति निश्चयः । अव्यभिचारिप्रामाण्यवाक्योपात्तत्वात् । प्रमेयस्य च स्वत एव निर्दुःखित्वसिद्धेः । प्रत्यक्षादेस्तु सव्यभिचारित्वात् सम्भावना-याश्च पुरुषपरिकल्पनामात्रावष्टम्भत्वाच्चेति ॥

निर्दुःखित्वं स्वतःसिद्धं प्रत्यक्षादेश्च दुःखिता ।
को ह्यात्मानमनादृत्य विश्वसेद् बाह्यमानतः ॥ ९४ ॥

संबन्धार्थं एव –

अपि प्रत्यक्षबाधेन प्रवृत्तिः प्रत्यगात्मनि ।
पराञ्चि खानीत्येतस्माद् वचसो गम्यते श्रुतेः ॥ ९५ ॥

( क्लेशापहारिणी )

प्रत्यक्षादिविरुद्धत्वे शास्त्रस्य दौर्बल्यमङ्गीकृत्य दृष्टिविधानार्थत्व तस्य कल्पनीयमित्युक्तम् 'प्रत्यक्षादिविरुद्धं चेत्' (२-८१) इत्यत्र । तु मिस्व प्रत्यक्षाविसिद्ध चेत् प्रसंख्यानेन तत्रैव निवर्तेत इति चोक्तम् 'प्रमाणवद्ध मूलत्वात्' (२-८८) इत्यत्र । अथेदानीं पुनरपि प्रत्यक्षादीना परस्पर-विरोधाङ्गीकारपक्षेऽपि वाक्योत्थप्रत्यय एव सद्बाधको भविष्यतीत्युच्यते हेत्वन्तरावष्टम्भेन । तदाह – यद्यपीति ॥ वाक्योत्थप्रत्यय एव बलीयानिति कुत ? – इत्यत आह – अव्यभिचारि प्रामाण्यवाक्योपात्तत्वादिति । अपौरुषेयत्वेनासम्भावितदोषत्वात् अप्रामाण्यकारणाभावाच्चेति भाव । उक्त हि 'विप्लवते हि खल्वपि कश्चित् पुरुषकृतात् वचनात् प्रत्यय । न तु वेद-वचनस्य मिथ्यात्वे किंचन प्रमाणमस्ति' (शा. भा १-१-२) इति । इतश्च वाक्यप्रत्ययस्य प्राबल्यम् इत्याह – प्रमेयस्य चेति । न केवल प्रमाणस्य निर्दुष्टत्वात्, किं तर्हि प्रत्यग्दृष्ट्या निरूप्यमाणस्याऽऽत्मन स्वत एव दु खि साक्षित्वात् निर्दु खित्व सिद्ध्यतीत्यतोऽपीत्यर्थ । एतच्चोक्त द्वितीयाध्याये । 'दु खिन साक्षिताऽयुक्ता साक्षिणो दु खिता तथा' (२-७६) इत्यत्र । ननु प्रत्यक्षादेरपि प्रमाणत्वात् कथं तस्य दौर्बल्यम् ? तत्राह – प्रत्यक्षादे-रिति ॥ व्यभिचारित्वादिति । उक्त हि वृत्तिकारेण 'तस्य निमित्तपरीष्टि' (जै. १-१-३) इति सूत्रव्याख्यानावसरे 'शुक्तिका हि रजतवद् प्रकाशते यत । तेन प्रत्यक्ष व्यभिचरति । तन्मूलत्वादनुमानादीन्यपि' इति । ननु वाक्यस्यापि व्यभिचारित्व संभाव्यते लौकिकवचनसाम्यात् इत्यत आह – सम्भावनापाद्येति । न हि पौरुषेयवाक्यसाम्यादपौरुषेयस्यापि तत्सम्भावन युक्त भवेत् इति भाव । तदप्युक्तम् आचार्येण शबरस्वामिना 'न चान्यस्य विततभावेऽन्यस्य नैतथ्य भवितुमर्हति । अन्यत्वादेव । न हि देवदत्तस्य

श्यामत्वे यत्तद्वत्तस्यापि श्यामत्वं भवितुमर्हति । अपि च पुरुषवचनसाधर्म्याद् वेदवचनं वितथमित्यनुमानं व्यपदेशात् अवगम्यते । प्रत्यक्षस्तु वेदवचनेन प्रत्यय ' (शा भा १-१-२) इति ॥

तत्र प्रमेयस्वभावपर्यालोचनया वचनस्य प्राबल्यमुपन्यस्यति श्लोकेन - निर्दुःखित्वमिति ॥ न ह्यात्मानुभवात् प्रबलतरं बाधमानमिति युक्तिमत् । प्रमाणानामप्यात्मानुभवादेव सिद्धेरित्यर्थः ॥ ९४ ॥

इदानीं प्रत्यक्षस्य सदोषत्वं श्रुत्यैव दर्शितमिति श्रुत्यर्थापत्त्यापि वचस प्राबल्यं कथयति श्लोक । तदाह - संबन्धार्थ एवेति ॥ पूर्वश्लोकसंबन्ध ग्रन्थस्थो योऽर्थ , वाक्यो यत्र यत्र एव प्रत्यक्षादेर्न्नीयानिति, तस्मिन्नेवार्थे प्रमाणमुच्यत इत्यर्थ ॥

अपि प्रत्यक्षबाधेनेति ॥ प्रत्यक्षबाधेनापि प्रत्यगात्मनि वचस प्रवृत्ति इत्येतत् 'पराञ्चि खानि' (का ) इत्येतस्मात् श्रुतिवचनाद् गम्यते , इन्द्रियाणा पराग्विषयत्वकथनपूर्वकम् आत्मज्ञानकारणत्वाभावम् उद्बोध्य तेभ्यो व्यावृत्त्यैव प्रत्यग्दर्शन कर्तव्यमिति सुस्पष्टमुपदेशात् इत्यथ । 'पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ्पश्यति नान्तरात्मन् । कश्चिद्धीर प्रत्यगात्मान मैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥' (का २-१-१) इति हि श्रुति ॥ ९५ ॥

## १९. प्रत्यक्षविरोधपरिहारः

(मूलम्)

अभ्युपगम्यैवमुच्यते न तु प्रमाणं सत् प्रमाणान्तरेण विरुध्यत इत्यसकृद्वोचाम । यत्रापि वाक्यप्रत्यक्षयोर्विरोधाशङ्का तत्रापि पुरुषमोहनिबन्धनैव सा जायते न तु परमार्थत इति । अत आह -

प्रमा चेज्जनयेद् वाक्यं प्रत्यक्षादिविरोधिनीम् ।
गौणी प्रत्यक्षता स्यान्मुख्यार्थासंभवाद् बुध' ॥ ९६ ॥

तस्यार्थस्य सुखप्रतिपत्त्यर्थमुदाहरणम् –

अग्निः सम्यगधीतेऽसौ जहासोच्चैश्च मञ्चकः ।
यथा तद्वदहंवृत्त्या लक्ष्यतेऽनर्हयापि सः　　॥ ९७ ॥

( क्लेशापहारिणी )

यद्यपि तत्र तत्रैवं प्रत्यक्षविरोधमभ्युपगम्यैव वाक्यस्य प्रामाण्यं साध्यते, तथापि नास्माकमत्र निर्भरः । प्रमाणं सत् प्रमाणान्तरेण नैव विरुध्यते, स्वविषयशूरत्वात् प्रमाणानाम् इति परमसिद्धान्तमेवावलम्ब्याऽऽह– अभ्युपगम्येति ॥ यद्यपि 'अपूर्वाधिगमं कुर्वत् प्रमाणं स्यात्' (३–८३) इत्यादिग्रन्थैरसकृदुक्तमेतत् पूर्वमपि, तथापि यत्रापि वाक्यप्रत्यक्षयोर्विरोधाशङ्का मोहवशाज्जायते, तत्र प्रत्यक्षस्य गौणत्वेनापि प्रवृत्तिसम्भवात् नास्ति वस्तुवृत्तेन विरोध इति वक्तुमयमारम्भः – इति न पुनरुक्ततेति द्रष्टव्यम् ॥

'प्रमा चेत्' इत्यादिश्लोकः स्पष्टार्थः ॥ ९६ ॥

गौणार्थस्य सुखप्रतिपत्त्यर्थं दृष्टान्त आनीयते श्लोकेनेत्याह – तस्यार्थस्येति ॥

अग्निरिति ॥ यथा 'अग्निरसौ सम्यगधीते' इत्यत्र अग्नेरचेतनत्वात् अध्येतृत्वानुपपत्त्या अग्निशब्देन गौण्या वृत्त्या माणवको लक्ष्यते, यथा च 'मञ्चा उच्चैर्जहास' इत्यत्र मञ्चकस्याचेतनत्वात् हासकर्तृत्वानुपपत्त्या, मञ्चकशब्देन तत्स्थः पुरुषो लक्ष्यते, तद्वत् अहंवृत्त्यापि अनात्मभूतया प्रकाशरूपत्वानर्हयापि स प्रत्यगात्मा लक्ष्यते – इत्यर्थः ॥ ९७ ॥

( मूलम् )

कस्मात् पुनः कारणात् साक्षादेव आत्मा नाभिधीयते किमनया कल्पनयेति ? तत्राऽऽह –

त्वमित्येतत् विहायान्यन्न यस्माऽऽत्मावबोधने ।
समस्तीह त्वमर्थोऽपि गुणलेशेन वर्तते　　॥ ९८ ॥

( क्लेशापहारिणी )

अहवृत्ते साक्षादात्मधर्मत्वाभावेऽपि तस्या एवात्मस्वरूपोपदेशार्थ मादाने कारणमुत्तरश्लोकेनोच्यते । तत् प्रदर्शयितु पातनिका करोति प्रश्नोद्भावनेन – यस्मादिति ॥ कस्मान्नाभिधीयते साक्षाद्वाचकशब्दान्तरेण, किमित्यनर्ह यापि अहवृत्त्या लक्ष्यते ? – इति प्रश्नार्थ । प्रश्नोत्तरत्वेन श्लोकमवतारयति – तत्राहेति ॥

त्वमित्येतदिति ॥ आत्मज्ञापने त्वमित्येतत् अहविशिष्टात्मवाचक पद विहाय अन्यद् वर्त्म मार्गान्तरम् न समस्ति, पदान्तर साक्षादात्माभिधायक नान्यत् संभवतीत्यर्थ । अत्र हेतुस्त्वनुपदमेव वक्ष्यत इति भाव । यदि पदान्तर नास्ति, तर्हि त्वपदमेव कुतो गृह्यत इति ? तत्राह–त्वमर्थोऽपीति । त्वपदार्थभूता अहवृत्तिरपि गुणलेशेन आत्मलक्षणत्वे समर्था वर्तते । उक्त हि गुणलेशवत्त्व तस्मिन् द्वितीये 'प्रत्यक्त्वादतिसूक्ष्मत्वादात्मदृष्ट्यनुशीलनात्' (२–५५) इति । तस्मात् पदान्तरस्य साक्षादात्मवाचकस्य अभावात्, अहवृत्तेर्लक्षणया वृत्त्या तत्समर्पणे शक्तत्वाच्च त्वपदमेवात्र गृह्यत इत्यभिप्राय ॥ ९८ ॥

( मूलम् )

कस्मात् पुनर्हेतोरहमित्येतदपि गुणलेशेन वर्तते, न पुनः साक्षादेवेति ? विधूतसर्वकल्पनाकारणस्वाभाव्यादात्मन' । अत आह –

व्योम्नि धूमतुषाराभ्रमलिनानीव दुर्धियः ।
कल्पयेयुस्तथा मूढाः ससार प्रत्यगात्मनि ॥ ९९ ॥

( क्लेशापहारिणी )

प्रत्यगवाचित्वाद् यदि त्वपदमहपद वा गृह्यते, तर्हि तत एव प्रत्यगात्म वाच्यपि साक्षात् तदिति स्वीक्रियताम्, किं लक्षणावृत्त्याश्रयणायासेनेति शङ्कते – कस्मात् पुनरिति ॥ परिहरति – विधूतेत्यादिना ॥ विकल्पना

कारणं जातिद्रव्यगुणक्रियासम्बन्धान्यतरलक्षणं शब्दप्रवृत्तिनिमित्तम्; स्वभावत एव तद्राहित्यादात्मनो न केनापि शब्देन वाच्यत्वमस्ति । अत उच्यते – गुणलेशेन वर्तत इतीत्यभिप्रायः । एतस्मिन्नर्थे श्लोकमवतारयति – अत आहेति ॥

व्योम्नीति ॥ यथा धूमादिसंबन्धं व्योम्नि कल्पयन्ति बालाः, तथा प्रत्यगात्मस्वभावानभिज्ञा मूढा अपि त्वमहंशब्दवाच्यं संसारं तस्मिन् कल्पयन्ति । तस्मात्, यथा धूमादिसंसर्गनिषेधमुखेनाऽऽकाशस्वरूपं प्रत्याययन्ति विवेकिनः, तथा अहंशब्दवाच्यससारित्वनिषेधेन प्रत्यगात्मस्वरूपं प्रत्याययितुं तत्र त्वमहमादिपदानि प्रयुञ्जते गुणलेशनिमित्तेन, न त्वहंशब्दप्रवृत्तिनिमित्तमपि विवक्षन्तीत्यभिप्रायः ॥ ९९ ॥

( मूलम् )

ननु सर्वकल्पनानामप्यात्मन्यत्यन्तासम्भवे समाने, अहंवृत्तौ कः पक्षपाते हेतुः, येन वृत्त्यन्तराणि विधूयाहंवृत्त्यैव आत्मा उपलक्ष्यत इति ? उच्यते –

चिन्निभैयमहंवृत्तिः प्रतीचीवाऽऽत्मनोऽन्यतः ।
पूर्वोक्तैम्यश्च हेतुभ्यस्तस्मादात्माऽनयोच्यते ॥ १०० ॥

वृत्तिभिर्युष्मदर्थाभिर्लक्ष्यते चेद्दृशिः परः ।
अनात्मत्वं भवेत् तस्य वितथं च वचः श्रुतेः ॥ १०१ ॥

यथोक्तेन –

अनेन गुणलेशेन ह्यत्यहंकर्तृकर्मणा ।
लक्ष्यतेऽसावहंवृत्त्या नाञ्जसाऽत्राभिधीयते ॥ १०२ ॥

नाञ्जसाऽत्राभिधीयत इति को हेतुरिति चेत् –

षष्ठीगुणक्रियाजातिरूढयः शब्दहेतवः ।
नात्मन्यन्यतमोऽमीषां तेनाऽऽत्मा नाभिधीयते ॥ १०३ ॥

( चन्द्रिकापहारिणी )

ननु यथैवायमात्मा अहशब्दप्रवृत्तिनिमित्तरहित, तथैव प्राणेन्द्रिय देहफलादिशब्दप्रवृत्तिनिमित्तरहित । तत् कस्मात् हेतोरहवृत्त्यैवोपलक्ष्यते, न तु वृत्त्यन्तरेणापीत्याशङ्कते– नन्विति ॥ शङ्कापरिहाराय श्लोकमवतारयति – उच्यत इति ॥

**चिन्निभेयमिति** ॥ इय अहवृत्ति चिन्निभा चिदाभासा यतोऽत आत्मनोऽन्यत स्वस्मादन्यस्मादनात्मन, स्वान्यापेक्षया इति यावत् । प्रतीचीव भाति । एतदुक्त प्रागेव – 'तदिद्धा धी प्रत्यगात्मेव लक्ष्यते' (३–७१) इति । न केवल चिन्निभत्वात्, किं तर्हि, पूर्वोक्तेभ्यश्च द्वितीयाध्यायोक्तेभ्यो हेतुभ्य 'नाज्ञासिषमिति प्राह'(२ ५४), 'प्रत्यक्त्वादतिसूक्ष्मत्वात्' (२ ५५), 'आत्मना चाविनाभावम्' (२–५६) – इति परिगणितेभ्यो हेतुभ्य, स्वेतरापेक्षया प्रतीचीव भाति । तस्मात् आत्मा अनया वृत्त्या उच्यते लक्ष्यते इत्यर्थ ॥ १०० ॥

**वृत्तिभिरिति** ॥ अहवृत्तिं विहाय युष्मदर्थाभि पराग्वस्तुविषयाभि र्वृत्तिभि परो दृशि परमात्मा लक्ष्यते चेत् तद्वाचका शब्दा यदि लक्षणार्थां गृह्णीरन् इत्यर्थ । तर्हि गङ्गाया घोष इत्यादिस्थले इव लक्ष्यार्थस्य तस्य अनात्म सबद्धत्वात् अनात्मत्वमेव स्यात्, तथा च तद्वादिन्या श्रुतेर्वच वितथम् अयथार्थं च स्यात् । तस्मात्, 'अयम्', 'असौ', 'स' – इत्याद्यभिधानोप लक्ष्याभिरन्याभिर्वृत्तिभिर्नोपलक्ष्यते परमात्मा उपनिषत्सु इत्यर्थ । इदमत्र बोध्यम् – सर्ववेदान्तेषु प्रत्यक्त्वेन वेद्यतैव प्रदर्श्यते परमात्मन अहमिति, न बहिर्वेद्यता 'असावयम्' इति, बाह्यपदार्थप्रकाशकवृत्तिभिर्हि प्राधान्यत अनात्मैव बोध्यत इति हृत्वेति । तेन 'तत्त्वमसि', 'अयमात्मा ब्रह्म'–इत्यादि वाक्येषु श्रोतृप्रत्यगात्मत्वेनैव ब्रह्मणो विवक्षणात्, 'अहम्' इत्यस्मच्छब्दाना दानेऽपि न दोष । यद्यपि अहवृत्तेरप्यनात्मत्वमस्त्येव तथापि तस्य स्वा या पेक्षया प्रत्यक्त्वादात्मानात्मोभयोपरागात्, केवलबाह्यविषयत्वाशङ्काहेतोरभाव इति बोध्यम् ॥ १०१ ॥

उपपादितम् अहंवृत्तेरात्मोपलक्षणार्हत्वमुपसंहरन्, यत्तदुक्तम् 'अभिधाश्रुते प्रामाण्यं सुप्तपुरुषबोधकवाक्यस्येव वक्तव्यमित्ययमारम्भः' (२-४७) इति, तन्निरूपणाय बीजावापं करोति – यथोक्तेनेति ॥ 'गुणलेशेन' इति श्लोकस्थेनास्य संबन्धः ॥

अनेनेति ॥ अनेन यथोक्तेन प्रत्यक्त्वादिरूपेण गुणलेशेन अस्मदर्थकर्मतया परित्यक्तात्मशब्दवाच्यार्थान्तर्गताहंवृत्त्याश्रयविषयतया, केवलप्रत्यक्तामात्रावबोधिन्या इति यावत्। ईदृश्या अहंवृत्त्या असौ प्रत्यगात्मा लक्ष्यते, न तु अञ्जसा मुख्यवृत्त्या अभिधीयते इत्यर्थः ॥ १०२ ॥

न केवलम् अहंवृत्तिवाचकेन शब्देन, अपि तु न केनचिदपि शब्देनाभिधातुं शक्यम् आत्मतत्त्वम्। अतोऽपि लक्ष्यत्वमेवाश्रयणीयमिति वक्तुं प्रश्नमुत्थाप्य तदुत्तरत्वेन श्लोकमवतारयति – यदीति ॥

षष्ठीति ॥ षष्ठी षष्ठ्यर्थः संबन्धः, यथा धनी, गोमान् इत्यादौ धनादिसंबन्धः शब्दप्रवृत्तिनिमित्तम्। नात्मनि कस्यचित् संबन्धोऽस्ति, एकत्वात्। नापि गुणवत्त्वम्, येन नीलादिशब्दैरुच्येत, उत्पलादिवत्। नापि क्रियावत्त्वम्, येन पाचकादिवत् क्रियाद्वारेणोच्येत। नापि जातिः, येन गोत्वाश्वत्वादिमत्त्वनिमित्तेन गवादिशब्दैरुच्येत। नापि रूढिः, जलाकाशादिवत्, सर्वव्यवहारातीतत्वात्। अत उक्तानामेषां शब्दप्रवृत्तिहेतूनाम् अन्यतमोऽपि नात्मन्यस्ति येनेनापि कारणेन आत्मा अहंवृत्त्या नाञ्जसाऽभिधीयत इतीत्यर्थः। न च तर्हि आत्मशब्दवाच्यत्वमपि न स्यात् तस्येति शङ्क्यम्। अभ्युपगमात्। तेनापि परागर्थस्यैवाभिधीयमानत्वात्, यथोक्तं छान्दोग्यभाष्ये – 'देहवति प्रत्यगात्मनि भेदविषये प्रयुज्यमानः शब्दो देहादीनामात्मत्वे प्रत्याख्यायमाने यत् परिशिष्टं सत् अवाच्यमपि प्रत्याययति' (छा भा ७-१-३) इति। तदेतदिहापि अनुसन्धेयमेव स्फुटमित्यवगन्तव्यमात्मतत्त्वम् ॥ १०३ ॥

## २०. शब्दादात्मनि सम्यग्ज्ञानोत्पत्तिप्रकारः

( मूलम् )

यदि शब्दोऽभिधानाभिधेयत्वसंबन्धाङ्गीकारेण नात्मनि वर्तते, कथं शब्दात् 'अहं ब्रह्मास्मि' इति सम्यग्बोधोत्पत्तिः ? उच्यते –

असत्ये वर्त्मनि स्थित्वा निरुपायमुपेयते ।
आत्मतत्त्वकारणाद् विप्रो गुणवृत्त्या विबोधिताः ॥ १०४ ॥

( क्लेशापहारिणी )

यदि केनचित् शब्देन नाभिधीयते परमात्मतत्त्वम्, तर्हि वाक्यार्थोऽपि न स्यादित्याशङ्कते – यदीति ॥ न हि सर्वथा अवाच्यस्य केनचिल्लक्ष्यत्वमपि दृष्टं क्वचित् । तथा च लक्ष्यलक्षणभावस्यैवाभावे सति कथं शब्दात् वाक्यलक्षणात्, अहं ब्रह्मास्मीति सम्यग्बोधोत्पत्तिः ? – इति शङ्कार्थः । श्लोकेनैतत् प्रत्युच्यत इत्याशयेनाऽऽह – उच्यत इति ॥

असत्ये वर्त्मनीति ॥ अपरमार्थे प्रवाहवृत्तिरूपे मार्गे स्थित्वा, निरुपायं केनचित् साधनेनाप्रतिबोधनीयमप्यात्मतत्त्वम् उपेयते । प्राप्यत इवेत्यर्थः । कथं प्रापकसाधनाभावेऽपि तदुपेयेत ? तत्राऽऽह – आत्मतत्त्व-कारणात् ॥ नित्याप्तस्वरूपत्वात् । गुणवृत्त्या प्रत्यक्तत्त्वज्ञापनपरया अहंवृत्त्यैव लक्षणाभासया विबोधिताः सन्तो विप्राः । न हि येनकेनापि शब्देन वाच्यस्यैव लक्ष्यत्वम्, लक्ष्यसंबन्धस्यैव लक्षणत्वम् इति वा नियमोऽस्ति कल्पितस्यापि स्वास्पदभूतवस्तूपलक्षणत्वसंभवात् । उक्तं चेदं प्राक् 'लक्षणं सर्पवद् रज्ज्वा' (३–२–७) इत्यत्रेति सर्वमवदातम् ॥ १०४ ॥

( मूलम् )

कथं पुनरभिधानमभिधेयेनानभिसंबद्धं सदनभिधेयेऽर्थे प्रमां जनयतीति ? शृणु, यथानभिसंबद्धमप्यनभिधेये अर्थे अविद्यानिराकरणमुखेन बोधयतीत्याह –

शयानाः शयशो लोके बोध्यमानाः स्वनामभिः ।
सहसैव प्रबुध्यन्ते यथैवं प्रत्यगात्मनि ॥ १०५ ॥

न हि नाम्नास्ति संबन्धो व्युत्थितस्य शरीरतः ।
तथापि बुद्ध्यते तेन यथैवं तत्त्वमित्यतः ॥ १०६ ॥

यथा च –

घोषावोषौ नभोऽस्पृष्ट्वा कृष्णधीनीडगौ यथा ।
वाध्येतरात्मकौ स्याता तथेहाऽऽत्मनि गम्यताम् ॥ १०७ ॥

( क्लेशापहारिणी )

शङ्कते कथं पुनरिति ॥ यद्यहशब्दस्य अभिधानाभिधेयसम्बन्धाङ्गीकारेण वृत्तिर्नास्त्येवाऽऽत्मनि, तर्हि आत्माऽनभिसबद्ध एव शब्दस्तत्र प्रमा जनयतीत्युक्त भवति । न चैतद् घटते । न हि काञ्चिद् वृत्तिमनाश्रित्य शब्दस्य कुत्रचिद् बोधकत्व दृष्टचरम् इति भाव । सिद्धान्ती तु स्वात्मनो नित्यावगतिरूपत्वात्, नाबुद्धबोधनमिह काङ्क्षितम्, किं तु अविद्यानिराकरण मात्रम् इत्याह – शृणु यथेति ॥ यद्यप्येतत् 'अविद्यानाशमात्र तु फल मित्युपचर्यते' (२-१०५) इत्यत्रोक्तमेव प्राक्, तथाप्यनभिसबद्धमप्यनभिधेयेऽथस्य बोधकमस्तीति उपपादयितु पुनरप्युच्यत इति न दोष ॥

शब्दस्य स्वानभिसबद्धप्रतिपाद्यगताविद्यानिराकरणशक्तिरस्तीत्यत्र दृष्टान्तमाह श्लोकद्वयेन – शयाना इति, न हि नाम्ना – इति च । न हि शरीराद्व्युत्थितस्य – शरीराभिमानाद् व्युत्थाय स्थितस्य – सुप्तस्य नाम्ना संबन्धग्रहणम् अस्ति । अथ च तेन शब्देन स्वासंबद्धेनैव निमित्तभूतेन निद्रा हित्वा बुध्यते यथा, एवं तत्त्व वाक्यादपि बुध्यते अविद्यानिराकरणमुखेन इत्यभिप्राय ॥ १०५ ॥ १०६ ॥

आत्मनि ज्ञानाज्ञानाश्रयत्व तद्विषयत्व वा नास्त्येव वस्तुत , अतो वाक्यात् अज्ञाननिरासेन आत्मनि कश्चिद्विशेष स्यादिति शङ्काया अपि नावसरोऽस्तीति सदृष्टान्तमाह– यथा चेति ॥ तथा इत्यनेन श्लोकार्धेनास्य संबन्ध ॥

**बोधाबोधाविति ॥** यथा कृष्णधीनीरूपौ कृष्णबुद्धिविषयौ बोधाबोधौ 'आकाशः कृष्ण' इत्यबोध, 'नीरूप स, न कृष्ण' इति बोधश्च – इत्येतौ यथा नभोऽस्पृष्ट्वा तत्र कमपि विशेषमनापाद्यैव यथा बाध्यबाधकावेवं स्याताम्, तथा इह आत्मनि 'अह दु खी', 'नाह दु खी' इत्येतौ बोधाबोधावपि बाध्यबाधकौ स्याताम् इति गम्यतामित्यर्थ । उक्त हि सूत्रभाष्ये– "न चाविद्यावस्थे तदपगमे च वस्तुन कश्चिद् विशेषोऽस्ति । यथा कश्चित् सतमसे पतिता काञ्चिद् रज्जुम् अहिं मन्यमानो भीतो वेपमान पलायते, त चापरो ब्रूयात् 'मा भैषी, नायमही रज्जुरेव' इति, स च तदुपश्रुत्य अहिकृत भयमुत्सृजेत् वेपथु पलायन च, न त्वहिबुद्धिकाले तदपगमकाले च वस्तुन कश्चिद् विशेष स्यात् । तथैवेदमपि द्रष्टव्यम्" (सू भा १-४ ६) इति ॥ १०७ ॥

( मूलम् )

'असत्ये वर्त्मनि स्थित्वा' इत्युपश्रुत्य अतिविस्मितो महता सम्भ्रमेण कश्चिचोदयति –

नासन्नुपायो लोकेऽस्ति परमार्थविनिश्चये ।
नासल्लिङ्गाद्धि बाष्पादेः कश्चिदग्निं प्रपद्यते ॥ १०८ ॥
इत्येवं चोदयेद् योऽपि ज्ञापयेत्तं घटादिना ।
सदसद्भ्यां विभक्तोऽसौ पर्यायश्च न चानयोः ॥ १०९ ॥

( क्लेशापहारिणी )

मिथ्याभूतस्यापि उपायत्व भवतीत्युक्तमधस्तात् (२-१०४) । तदेव द्रढयितुकामश्चोदनामुत्थाप्य परिहरति श्लोकद्वयेन । तदाह – 'असत्ये वर्त्मनि स्थित्वा' इत्युपश्रुत्येत्यादिना ॥

**नासन्निति ॥** असत्य सत्यनिश्चये नोपायो भवितुमर्हति । न हि बाष्पादिर्धूमाभास अग्निनिश्चयेऽनुमितौ लिङ्ग भवति लोके – इति शङ्कितुरभिप्राय । 'इत्येवम्' इत्यादिपरिहारग्रन्थाभिप्रायस्तु – असतो नोपायत्वमिति

कोऽर्थ ? किं सतो नियमेनोपायत्वं सर्वत्रेति, किं वा मिथ्याभूतस्योपायत्व नास्त्येवेति ? तत्र नाद्य कल्प क्षोदक्षम, घटादीनामपि सत्यत्वेनाभिमतानाम्, अग्निनिश्चयनेऽनुपायत्वात्, नापि द्वितीय, प्रतिबिम्बादेरपि बिम्बादि निश्चायकोपायत्वात् । यत् पुनर्धूमाभासाद् बाष्पादेर्नाग्निनिश्चय — इति, तत्तु बाष्पादेर्नियमेनाग्निसम्बन्धाभावकृतम्, न तु तदसत्यत्वकृतम् । किं च यत्रापि घटादि सत्यमेव स्वकारणाद्यनुमितौ लिङ्गमित्यभिनिवेश, तत्रापि लिङ्ग न वस्तुत सत्, मृदादिस्वकारणव्यतिरेकेणानुपलब्धे । व्यपदेशमात्र हि घट इति, मृद् एव तथा व्यवह्रियमाणत्वात् । 'वाचारम्भण विकारो नामधेय मृत्तिकेत्येव सत्यम्' (छा ६-१-४) इति श्रुते । न चासन्नेव घट शशविषाणादिवत्, जलाहरणाद्यर्थक्रियाकारित्वदर्शनात् । तस्मात् सदसत्त्वा विभक्तस्य मिथ्यारूपस्यैवोपायत्व त्वयाप्यभ्युपेयमित्यतोऽस्थाने चोद्यमेतदिति ॥ १०९ ॥

(मूलम्)

एवं कुचोद्यमुन्मूल्य अथेदानीं प्रकृतमभिधीयते । प्रकृतं च अनभिधेये कथमभिधाश्रुतिरविद्याध्वंसि आत्मनि ज्ञानं जनयतीति । तत्रैव कारणान्तरमुच्यते —

अतिदुःखोऽप्रबोधोऽत्र ह्यात्मैवास्य प्रबुद्धता ।
निमित्तमात्राद् व्येत्येषा नासाग्रे बदरं यथा ॥ ११० ॥

अनुदितानस्तमितकूटस्थबोधमात्रस्वाभाव्यादात्मनो दुःसम्भाव्योऽविद्यासद्भावः इति चेत्, न ; अविद्याप्रसिद्ध्यैव तत्सद्भावसिद्धेः, उलूकनिशावत्, इत्यत इदमुच्यते —

अहो धाष्टर्यमविद्याया न कश्चिदतिवर्तते ।
प्रमाण वस्त्वनादृत्य परमात्मेव तिष्ठति ॥ १११ ॥

यस्मादविद्याप्रसिद्ध्यैवाविद्यासद्भावसिद्धिः, अत आत्मवस्तुवृत्तानुरोधेन न कथञ्चनापि तत्सम्भावनाप्यस्ति, अत[1] आह—

1 'अत' इत्यतो परमेव पाठ आसीत ॥

ज्ञानं यस्य निजं रूपं क्रियाकारकवर्जितम् ।
सम्भावनाप्यविद्यायास्तत्र स्यात् केन हेतुना ॥ ११२ ॥

( क्लेशापहारिणा )

अविद्याया अविद्यासिद्धत्वादेव निवृत्युपपत्तिः

तदेवमसतोऽपि वाक्यस्य आत्मप्रतिपत्त्युपायत्वं प्रसाध्य प्रसङ्गागत चिन्तामुत्सृज्य प्रकृतामविद्यानिवृत्तिचिन्तामेवानुवर्तयतीत्याह – एवमिति ॥ असत्त्वात् सत्यत्विनिश्चयो न सम्भवतीत्येतत् शुष्कतर्कमात्रावष्टम्भेन समुत्थापित त्वात् कुचोद्यम् । तस्योन्मूलनं तु परमार्थदृष्ट्यवलम्बनेन सर्वस्याप्युपायस्य मिथ्यात्वप्रदर्शनेनेति स्पष्टम् । अथाधुना प्रकृतमेव अनभिधेये वाक्यस्याविद्या ध्वंसिज्ञानजनकत्वं कथमित्येतदेवानुवर्तयिष्यता तत्रैव कारणान्तरं सुतपुरुष बोधकवाक्योदाहरणादन्यत् उपपादकं कारणम् – अविद्याया अविद्यामात्र प्रसिद्धस्वरूपम् उच्यते–समनन्तरश्लोकेनेत्याह – तत्रैवेत्यादिना ॥

अतिदुःस्थ इति ॥ अत्रात्मनि अप्रबोधोऽतिदुःस्थः । अविचार दशायामेव प्रतीयमानत्वात् । अतस्तन्निरासो वाक्येन ईषत्करः इति भावः । हि यस्मात् आत्मैवास्य प्रबुद्धता, न हि सा केनापि कारणव्यापारेणो पाद यितव्या, किं त्वस्यस्वभाव एव, नित्यप्रबोधरूपत्वमेव ह्यस्य स्वरूपम् इत्यर्थः । अतः निमित्तमात्रात् वाक्येन ज्ञापनमेव केवलं निमित्तीकृत्य, तावतैव पमोऽप्रबोधो व्येति । तत्र दृष्टान्तः 'नासाग्रे बदरं यथा' इति । यथा नासाग्रे अतिदुःखेन स्थापितं बदरम् ईषत्कम्पादिकं निमित्तीकृत्यापगच्छति एवम् । वाक्योपदेशनिमित्तप्रत्यग्दृष्टिमात्रेण तिरोभवतीत्यर्थः ॥ ११० ॥

अतिदुःस्थत्वमेवाऽऽक्षेपपरिहारव्याजेन स्पष्टयति – अनुदितानस्त मितेति ॥ 'कूटस्थनित्यचैतन्यस्वरूपे अत्यन्तासम्भावितैवाविद्या, कुतस्तस्या निवृत्त्यपेक्षा'–इत्याक्षेपः, परिहारस्तु सत्यमेव परमार्थदृष्ट्या, अविद्यादृष्ट्यैव तु तत्सिद्धिः, अतो न दोषः इति । तदाह – अविद्याप्रसिद्ध्यैवेति । तत्र दृष्टान्तः उदूकनिशावदिति । यथा प्रचण्डभानुकिरणप्राये‌ऽप्यह्नि निशात्व

मुमुक्षूणाम्, एवं कूटस्थप्रकाशेऽप्यविद्यावद्दृष्टीनाम् अविद्याश्रयविषयत्वम्। अतो विद्याविद्यादृष्टिविभागेनोभयमप्युपपद्यत इति भावः। तदुक्तं संबन्धवार्तिके 'ब्रह्माविद्यावदिष्टं चेन्ननु दोषो महानयम्। निरविद्ये च विद्याया आनर्थक्यं प्रसज्यते॥ नाविद्यास्त्येत्यविद्यायामेवासित्वा प्रकल्प्यते। ब्रह्मदृष्ट्या त्वविद्येयं न कथञ्चन युज्यते॥' (स वा. १७५, १७६) इति॥

अहो धार्ष्ट्यमविद्याया इति॥ प्रमाणं वस्तु स्वयं प्रमाणभूतं प्रमातृप्रमाणप्रमेयाणां प्रमाभासस्य चावभासकं नित्यसिद्धानुभवरूपम् आत्मवस्तु अनादृत्य तस्मिन्नप्यवस्तुताम् आपाद्य स्वयं परमात्मेव परमार्थवस्त्विव तिष्ठति विभाव्यते मूढैः – इत्यहो अविद्याया धार्ष्ट्यम्! इत्यर्थः। तदेतदुक्तं बृहद्वार्तिके 'यत्प्रसादादविद्यादि सिध्यतीव दिवानिशम्। तमप्यपह्नुतेऽविद्या नाज्ञानस्यास्ति दुष्करम्॥' (बृ. वा. ४-३-७४) इति॥ १११॥

वस्तुतस्तु अविद्या नैव विद्यते प्रत्यगात्मदृष्ट्या निरूप्यमाणेत्याह – यस्मादिति॥

'ज्ञानं यस्य निजं रूपम्' इति॥ यस्मात्मन. क्रियाकारकवर्जितं ज्ञानं निजं रूपम्, तत्रात्मनि केन हेतुना कथङ्कारं स्यादज्ञानम्? अज्ञानं ज्ञानस्य धर्म इत्येतदतीवोपहास्यम् इति भावः। तदुक्तं बृहद्वार्तिके – 'स्वतो बुद्धं स्वतः शुद्धं स्वतो मुक्तं निरात्मिका। अविचारिततत्सिद्धिरविद्याऽऽ-लिङ्गते कथम्॥' (बृ. वा. ४-३-७५) इति। न चैवं वाक्यनिरस्या-विद्याया असद्भावे शास्त्रप्रामाण्यमानर्थक्यम् इति शङ्क्यम्। पराग्दृष्ट्या तत्सद्भावस्यापह्नोतुमशक्यत्वात्; यथा तु प्रत्यग्दृष्ट्या तस्या असंभावितत्व-मवसीयते, तस्यास्तु वाक्यैकसम्पादनीयत्वात्, तत्पूर्वं वस्तुतः स्थितेनापि परमात्मस्वरूपज्ञानेन प्रमाणमाहात्म्यमन्तरा तस्या अनिरस्यत्वात्। यथोक्तं बृहद्वार्तिके – 'तस्मात्तत्र यास्तवं रूपं तद् ध्वान्तापनोदकम्। तस्मिन् सत्येव मोहादि व्युत्पत्तेः प्रागभूदतः॥ प्रमाणात्स्वधर्मेनैतद्ध्वन्यविद्यापदोदितः। क्वचिद्दिरतो यस्मात् प्रमाणमिह सम्मितम्॥' (बृ. १-४-३१४, ३१५) इति॥ ११२॥

# २१. अविद्यायाः शास्त्रैकमानेन निवृत्तिः

( मूलम् )

सोऽयम् एवमनुदितानस्तमितावगतिमात्रशरीर आत्मापि सन्, अविचारितप्रसिद्धाविद्यामात्रव्यवहित एव अतथेवेक्ष्यते यतः, अतः –

अनुमानादयं भावाद्व्यावृत्तोऽभावमाश्रितः ।
ततोऽप्यस्य निवृत्तिः स्याद् वाक्यादेव बभुत्सतः ॥ ११३ ॥

भाववदभावादपि निवृत्तिरनुमानादेव किमिति न भवति ? – इति चेत्, शृणु –

न व्यावृत्तिर्यथा भावाद् भावेनैवाविशेषतः ।
अभावादप्यभावत्वाद्व्यावृत्तिर्न तथेष्यते ॥ ११४ ॥

यतो नानुमानेन व्याविद्धाशेषक्रियाकारकफलात्मनि स्वाराज्ये अभिषेक्तुं शक्यते, तस्मात् –

अविद्यानिद्रया सोऽयं प्रसुप्तो दुर्विवेकया ।
भावाभावव्युदासिन्या श्रुत्यैव प्रतिबोध्यते ॥ ११५ ॥

अत्राह – अनुदितानस्तमितविज्ञानात्ममात्रस्वरूपत्वात्, दुःसंभाव्या अविद्येति । नैतदेवम् । कुतः ? यत आह –

कुतोऽविद्येति चोद्यं स्यान्नैव प्राग् हेत्वसंभवात् ।
कालत्रयापरिच्छित्तेर्न चोद्यं चोद्यसंभवः ॥ ११६ ॥

( क्लेशापहारिणी )

तत्त्वमस्यादिवाक्यस्य प्रामाण्यम्

पूर्वश्लोकोक्तार्थमेवानूद्य वाक्यैर्निवर्त्यत्वमविद्याया उपसंहरिष्यन्नाह – 'सोऽयम्' इति ॥ कूटस्थचिन्मात्र एव सन् उदयास्तमययुक्तज्ञानाद्याश्रय इव

लक्ष्यते यत, अत प्रमातृरूपत्वमेवाऽऽत्मनो यथार्थत्वेन गृहीत्वा प्रमाणादेव केनचित् स्वरूप निश्चेतुमीहते । वस्तुतस्तु अविचारितसिद्धाविद्यामात्र व्यवहितस्वरूपत्वात् शास्त्रवाक्यमात्रात् तस्य स्वरूपे निष्ठा भवेत् नान्यत – इति वक्तुमुत्तरश्लोकप्रवृत्तिरित्यर्थ ॥

अनुमानादिति ॥ अन्वयव्यतिरेकलक्षणादनुमानात् अथ जिज्ञासु भावात् स्थूलसूक्ष्मशरीरलक्षणात् व्यावृत्त, अभावम् 'नाह देहेन्द्रियादि स्वरूप' इत्येवरूपम् आश्रित । तस्मात्, अस्य बुभुत्सत 'कोन्वहमस्मि' इति वीक्षापत्स्य ततोऽप्यभावात् निवृत्ति वाक्यादेव स्यात, नान्यस्मात् प्रमाणात् इत्यर्थ ॥ ११३ ॥

अथ देहादिव्यतिरिक्तज्ञानादपि व्यावृत्तिरनुमानादेव किं न स्यात् इति शङ्कामुत्थापयति – भावयदित्यादिना ॥ यद्यप्यन्वयव्यतिरेकन्यायानुसरणेनैवैषा व्यावृत्तिर्न सिध्यतीत्यत्र हेतु 'प्रत्यगात्मत्वहेतोश्च स्वार्थत्वाद्प्रमेयत' (२–४८), 'प्रमाणव्यवहारोऽयम्' (२–५२), 'लिङ्गमस्तित्व निष्ठत्वात्' (२–५७) इत्यादिभि श्लोकैरसकृदभिहित, तथापि भङ्ग्यन्तरेण तदभिधानार्थं शङ्कात्र समानीयत इत्यदोष । शङ्कापरिहारत्वेन श्लोक मवतारयति – शृणिवति ॥ न व्यावृत्तिरिति ॥ यथा भावात् देहाद्यात्मभावलक्षणात् भावेनैव 'एतत्स्वरूपोऽहम्' इति भावरूपत्वबोधकप्रमाणेनैव न व्यावृत्तिर्भवति । कुत ? अविशेषतः व्यावर्तकस्यापि भावत्वाविशेषात् – इत्यर्थ । न हि प्रमेयगुणिमध्यातीनस्य देहेन्द्रियादिष्वेवाहममामिमानवत 'तन्मध्यपतित एव कश्चिदहम्' इति ज्ञानेन तादृशदेहाद्यात्मभावनिवृत्ति स्याज्जातुचित्, 'एतत्सङ्घातविविक्त एवाह परलोकसंबन्धित्वात्' इत्याकारक ज्ञानेनैव ▪ शास्त्रजनितेन तादृशं ज्ञान निवर्त्यत इति प्रसिद्ध वेदविदाम् । एवमेव अभावादपि 'देहादिविलक्षणोऽहम्' इत्यस्मादपि तथैव 'तस्मादपि शरीरविलक्षणादपि विलक्षणोऽह भवितुमर्हामि अमुकहेतो' इत्याकारकानुमानेनैव व्यावृत्तिर्निष्यते, कुत ? अभावत्वाविशेषात् व्यावर्त्यव्यावर्तकयो । न हि 'भावरूपादेतस्माद् विलक्षणोऽहम्' इति बुद्ध्या यथा पूर्वभावबुद्धिबाध,

तथा 'एतद्विलक्षणादपि रूपाद् विलक्षणरूपोऽहम्' इत्यादया तत्पूर्वतनबुद्धे र्बाधो भवेत्, अभावे विशेषाभावात् बाध्यबाधककल्पनानुपपत्तेरित्यभिप्राय ॥ ११४ ॥

फलितमुपसंहरति – यत इति ॥ श्लोकमवतारयति – तस्मादिति ॥ अविद्यानिद्रयेति ॥ सोऽयं प्रमाता अविद्यानिद्रया स्वरूपतिरस्करिण्या दुर्विवेकया मानान्तरेण विवेक्तुमशक्यया प्रसुप्त भावाभावरूपान् स्वप्नान् पश्यन्, भावाभावव्युदासिन्या भावाभावविलक्षणाद्वितीयप्रत्यगात्मबोधिन्या तत्त्वमस्यादिरूपया श्रुत्यैव प्रतिबोध्यते । अत्रेदमनुसन्धेयमभियुक्तवचनम् – "अनादिमायया सुप्तो यदा जीव प्रबुध्यते । अजमनिद्रमस्वप्नमद्वैत बुध्यते तदा ॥" (गौ का १–१६) इति । एतदुक्त पूर्वमेव 'कार्यमेतदविद्याया ज्ञात्मना त्याजयेत् वच ' (३–६) इति, उपसंहृतम् विदीना वाक्य व्याख्यानान्ते निगमनार्थम् इति विशेष ॥ ११५ ॥

वाक्यनिवर्त्याविद्याया अज्ञदृष्ट्या स्वानुभवसिद्धता प्राज्ञदृष्ट्या नि स्वभावता च पुनरपि प्रकारान्तरेणाह आक्षेपोत्थापनपूर्वकम् – अत्राहेति ॥ कूटस्थविज्ञानात्ममात्रस्वरूपत्वात् आत्मन, दु समान्या अविद्या तस्मिन् इत्याक्षेप । परिहारमाह – 'नैतदेवम्' इति । 'कुतः ?' इति प्रश्न । उत्तरत्वेन श्लोकमवतारयति – यत आहेति ॥

कुतोऽविद्येति चोद्यमिति ॥ प्राक् विद्योत्पत्ते पूर्वं नैवेद चोद्य भवति । कुत ? हेत्वसम्भवात् । न ह्यविद्यावान् 'अनुदितानस्तमितविज्ञान स्वभावोऽहम्' इति जानीते इत्यथ । यदुक्त सम्बन्धवार्तिके 'अविद्यावानविद्यां तां न निरूपयितु क्षम ।' (सं वा १७७) इति । न च विद्योत्पत्तेरूर्ध्वं चोद्यसंभव । कुत ? कालत्रयापरिच्छित्ते । न हि कालत्रयेऽप्यविद्यासद्भाव स्वात्मनि परिच्छिनत्ति विद्वान् इत्यर्थ । तदप्युक्त तत्रैव – 'तत्त्वमस्यादि वाक्योत्थसम्यग्धीजन्ममात्रत । अविद्या सह कार्येण नासीदस्ति भविष्यति ॥' (सं वा १८३) इति ॥ ११६ ॥

( मूलम् )

यस्मात् तत्त्वमस्यादिवाक्यमेव आत्मनोऽशेषाम् अविद्यां निरन्वयम् अपनुदति, तस्मात् –

अज्ञातममनादृत्य प्रमाणं सदसीति ये ।
बुभुत्सन्तेऽन्यतः कुर्युस्तेऽक्ष्णापि रसवेदनम् ॥ ११७ ॥

एवम् अप्रतिहताम् 'अहं ब्रह्म' इति प्रमां तत्त्वमस्यादिवाक्यं कुर्वदपि न प्रतिपादयतीति चेत् अभिमतम्, न कुतश्चनापि प्रतिपत्तिः स्यात् । अत आह –

इदं चेदनृतं ब्रूयात् सत्यामवगतावपि ।
न चान्यत्रापि विश्वासो ह्यवगत्यविशेषतः ॥ ११८ ॥

न च उपादित्सितात् वाक्यार्थात् वाक्यार्थान्तरं कल्पयितुं युक्तम् । यस्मात् –

न चेदनुभवोऽतः स्यात् पदार्थावगतावपि ।
कल्प्यं विध्यन्तरं तत्र न ह्यन्योऽर्थोऽवगम्यते ॥ ११९ ॥

न च यथाभिमतोऽर्थो यथोक्तेन न्यायेन नावसीयते । कोऽसौ न्याय इति ? आह –

नामादिभ्यो निराकृत्य स्वमर्थं निष्परिग्रहः ।
निःस्पृहो युष्मदर्थेभ्यः शमादिविधिचोदितः ॥ १२० ॥
भक्त्या चान्नमयादींस्तान् पञ्चानात्मतयार्गलान् ।
अहं ब्रह्मेति वाक्यार्थं वेत्ति चेन्नार्थ ईहया ॥ १२१ ॥

न चेदेवमुपगम्यते वाक्यस्य प्रमाणस्य सतः अप्रामाण्यं प्राप्नोति, तदाह –

यदर्थं च प्रवृत्तं यद् वाक्यं तत्र न चेत्कृतम् ।
प्रमामुत्पादयेत् तस्य प्रामाण्यं केन हेतुना ॥ १२२ ॥

तदेवमन्वयव्यतिरेकपूर्वकं वाक्यमेव निरन्वयमविद्यां निवर्तयतीति तदेव प्रमाणम् आत्मावबोधे इति स्थितम् । तदेतदर्थात् सिद्धं प्रामाण्यं स्थूणानिखनन्यायेन प्रतिष्ठापयितुम् उत्तरग्रन्थः प्रवर्तते । तत्र स्थिते वाक्यप्रामाण्ये आत्मावबोधाय प्रमाणान्तरं साधनान्तरं वा न मृग्यमिति तावदाह – अज्ञातममिति ॥ स्फुटतमं साक्षादेव प्रमितिजनकं सदसीति-वाक्यरूपं प्रमाणम् अनादृत्य येऽन्यत् अनुमानादिना प्रसङ्ख्यानादिना वा आत्मानं बुभुत्सन्ते ते अक्ष्णापि रसवेदनं कुर्युः । असाधनेनापि ज्ञानप्राप्त्याकाङ्क्षित्वात् इति भावः ॥ ११७ ॥

स्थाने स्यादयमुपहासो यदि तावत् तत्त्वतोऽज्ञातं प्रमाणं स्याद् वाक्यम्, तदेव त्वद्यापि न सिद्धम् इति वदन्तं प्रतिबोधयितुमारभते समनन्तरग्रन्थं इत्याह – एवमिति ॥ यदि वाक्यं प्रमाणभूतमपि न प्रतिपादयति तर्हीति प्रसङ्गः इत्यस्मिन्नर्थे श्लोकमवतारयति – अत आहेति । इदं चेदिति ॥ वाक्यमप्रमाणमिति शङ्कमानः प्रष्टव्यः – किं वाक्यं विपरीतबोधकत्वात् तत्त्वं न प्रतिपादयतीत्युच्यते, किं वा पदार्थावगतौ जातायामपि वाक्यात् साक्षादनुभवो न जायत इति प्रसङ्ख्यानादिविधिः कल्पनीय इत्यभिप्रायः, आहोस्विन् प्रमां नैवोत्पादयतीति ? तत्र नाद्य इत्युत्तरश्लोकेनाह – इदं चेदिति ॥ इदं तत्त्वमसीति वाक्यम् अवगतौ सत्यामपि अनृतं ब्रूयात् चेत्, अन्यत्रापि प्रसङ्ख्यानादिबोधकत्वेनाभिमतात् वेदवाक्याज्जातायामपि अवगतौ न विश्वासः स्यात्, कुतः ? अवगत्यविशेषतः । न हि वाक्यजन्यावगतेः कस्याश्चिद्भ्रान्तित्वम्, कस्याश्चित् प्रमात्वमिति विशेषः कल्पयितुं शक्यते इति भावः । यद्वा अन्यत्रापि प्रत्यक्षादिना जातायामप्यवगतौ न विश्वासः स्यात् । इदं प्रमेयमवगतं वा न वा – इति संशयोऽपि जायेत । कुतः ? अवगत्यविशेषतः । तथा च सर्वप्रमाणप्रमेयव्यवहारलोपः प्रसज्येतेति भावः । न च संशेते कश्चित् अवगतौ जातायामपि । तथा च किमपराद्धं प्रकृतेन वाक्यप्रमाणेन, अवगतिजनकत्वे दृष्टेऽपीति भावः । इदं च प्रौढिवादमाश्रित्येति मन्तव्यम्, न ह्यद्वितीयात्मावगतौ जातायामविद्यानिवृत्तिफलं न दृश्यते, बाधकज्ञानान्तरस्यावकाशो वा समस्तीति ॥

न च द्वितीयः कल्पः इत्यभिप्रायेण द्वितीयश्लोकमवतारयति — **न चोपादित्सितादिति** ॥ स हि वाक्ये उपादित्सितोऽर्थो यद्विषये वाक्यगतानां पदानां निश्चितः समन्वयोऽवगम्यते । इह च 'तत्त्वमसि' इति वाक्ये ब्रह्मात्मविषये निश्चितः समन्वयः । अतो ब्रह्मात्मत्वमेवोपादित्सितोऽर्थो भवितुमर्हतीत्यभिप्रायः ॥

**न चेदिति** ॥ न चेयमवगतिर्नोत्पद्यत इति शक्यं वक्तुम् । 'तद्धास्य विजज्ञौ' (छा. ६–१६–३) इत्यादिश्रुतिभ्यः । अवगतिसाधनानां च श्रवणादीनां विधानाच्च इति शेषः । न चान्योऽर्थो वाक्यादवगम्यते, येन प्रसङ्ख्यानादिविधिः कल्प्यः स्यात् ; लिङादीनामन्यतमस्याप्यश्रवणात्, विनापि लिङाद्यध्याहारं वाक्यार्थावगतेर्जायमानत्वाच्च । न च निश्चितायामवगतौ जायमानायामपि अर्थान्तरकल्पनान्याय्या, श्रुतहान्यश्रुतकल्पनादोषप्रसङ्गात् — इत्यभिप्रायः ॥ ११९ ॥

ननु वाक्यं यद्यप्यैकात्म्यपरम्, तथापि नैव केवलेन तेन श्रुतेनानुभवो जायते । तस्मात् सदस्मीति फलमुक्त्वा तदनुभवार्थमेव साधनं विधीयते । तामेनामाशङ्कां परिहरन्नाह — **न चेति** ॥ यथाभिमतोऽर्थः, आत्मानुभवः, यथोक्तेन न्यायेन अन्वयव्यतिरेकलक्षणेन नावसीयते — इति च नेत्यर्थः । न्यायस्य वाक्यार्थज्ञानोपायत्वमेवोपपादयितुं प्रश्नपूर्वकं श्लोकद्वयम् अवतारयति **'कोऽसौ न्याय'** इति ॥

**नामादिभ्य इति** ॥ शमादिविधिचोदितः, 'शान्तो दान्तः' (बृ. मा. ४–२–२८) इत्यादिना विहितं साधनमनुतिष्ठन्, निष्परिग्रहः, त्यक्तकर्मतत्साधनः सन्, भूमविद्यामन्त्रोक्तप्रकारेण नामादिभ्यः प्राणान्तेभ्यस्त्वमर्थं निराकृत्य व्यावर्त्य, युष्मदर्थेभ्यः अनात्मभूतेभ्यो निस्पृहः ; साध्यसाधनलक्षणं सर्वं परित्यज्य इत्येतत् । अन्नमयादीन् पञ्च कोशान् अर्गलान् आत्मप्रतिपत्तिप्रतिबन्धभूतान् अनात्मतया विनिश्चित्य भङ्क्त्वा । सर्वप्रतिबन्धराहित्येनावगतपदार्थः सन् इति यावत् । 'अहं ब्रह्म' इति वाक्यार्थं वेत्ति चेत् । कस्यचिदेव पुरुषधौरेयस्य यथोक्तसाधनसंपन्नस्य त्वीदृशं वाक्यार्थवेदनं

लभ्यम् इत्याशयेन 'चेत्' इत्याह । तदित्थं वाक्यार्थमनुभवन्, ईहया प्रसङ्ख्यानादिव्यापारेण नार्थः ; कृत्यं नावशिष्यत इत्यर्थः ॥ १२१ ॥

अथ मतं यथोक्तं वाक्यं नैवानुभवमुत्पादयतीति, तस्मिन् पक्षे अनिष्टमाह – न चेदिति ॥

**यदर्थमिति** ॥ प्रमाणस्य हि सतो वाक्यस्य प्रमोत्पादनमेव हि प्रामाण्यं नाम । तदिह ब्रह्मात्मैकत्वप्रतिपादनार्थं प्रवृत्तं वेदान्तवाक्यं तत्र प्रमां नोत्पादयति चेत् तर्हि केन हेतुना कस्यचिदपि वाक्यस्य प्रामाण्यं स्यात् ? एवं हि सर्ववाक्यस्य स्वार्थबोधनाय प्रवृत्तस्य तत्र प्रमाऽनुत्पादकत्वमेव प्रसजेत् । तथा च वाक्यप्रामाण्यप्रतिषेधाय प्रवृत्तमपि तव वाक्यं न कुर्यात् प्रतिषेधम् इत्यनिष्टप्रसङ्गः । तस्मात् यदर्थं प्रवृत्तं यद्वाक्यं तत्र तत् प्रमामुत्पादयत्येवेत्यवश्यमभ्युपगन्तव्यम् । न चास्ति बाधकं प्रमाणमत्रे-त्यवोचाम । अतो दूरनिरस्तमबोधकत्वं वाक्यस्येत्यभिप्रायः॥ १२२ ॥

## २२. प्रसङ्ख्यानाभ्युपगमे दोषः

( मूलम् )

**अथ मन्यसे –**

जानीयाचेत् प्रसङ्ख्यानाच्छब्दः सत्यवचाः कथम् ।
पारोक्ष्यं शब्दो नः प्राह प्रसङ्ख्यानास्त्वसंशयम् ॥ १२३ ॥

**न च युक्तिशब्दाद्यखिलक्षणात् प्रसङ्ख्यानात् यथावत्प्रतिपत्ति-र्भविष्यतीति सम्भावयामः । यस्मात् –**

युक्तिशब्दौ पुराप्यस्य न चेदकुरुतां प्रमाम् ।
साक्षादावर्तनात् ताभ्यां किमपूर्वं फलिष्यति ॥ १२४ ॥

**अथैवमपि प्रसङ्ख्यानमन्तरेण प्राणान् धारयितुं न शक्नोषीति चेत्, श्रवणादावेव सम्पादयिष्यामः । कथम् ?**

प्रसंख्याने श्रुतावस्य न्यायोऽस्त्याम्रेडनात्मकः ।
ईषच्छ्रुतं सामिश्रुतं सम्यक् श्रुत्वाऽवगच्छति ॥ १२५ ॥

ननु प्रसङ्ख्यानविधिमनभ्युपगच्छतः पारमहंसी चर्या बौद्धादिचर्यावत् अशास्त्रपूर्विका प्राप्नोति ; ततश्च आरूढपतितत्वं न स्यात् । अशेषकर्मणा च निवृत्तिर्न प्राप्नोतीति । उच्यते –

स्वमर्थस्यावबोधाय विधिरप्याश्रितो यतः ।
तमन्तरेण ये दोषास्तेऽपि नायान्त्यहेतवः ॥ १२६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादशिष्यश्रीसुरेश्वराचार्यविरचितायां नैष्कर्म्यसिद्धौ सत्त्वबोधो तृतीयोऽध्यायः

( क्लेशापहारिणी )

'अथ मन्यसे' इति वाक्यप्रामाण्यमभ्युपगम्यापि प्रसङ्ख्यानादेवानुभवप्राप्तिमातिष्ठमानो वादिनो मतमनुवर्ण्य तत्र दोषाविष्करणायारम्भः । तन्मतं हि समनन्तरोत्तरश्लोके, तत परेण च निराक्रियत इति । 'जानीयाच्चेत्' इति ॥ स्थापितशङ्कानुवर्णनमिदम् । सत्यं वाक्यं प्रमाणमिति, तत्त्वावजानीमः । सकृच्छ्रुतौ तु न ब्रह्मात्मत्वप्रतीतिरुपपद्यत इति प्रसङ्ख्यानात्तदर्थं जानीयात् श्रोता इत्युत्पश्याम –इति मन्यसे चेत् इत्यर्थः । तदा शब्दः, 'तत्त्वमसि' इत्यादिलक्षणः सत्यवचाः कथम् ? – इति परिहारः । चेच्छब्दोऽसम्भावितत्वमाह । न हि प्रसङ्ख्यानं प्रमाणमिति संभवति । शब्दाद्यावृत्तिरूपं हि तत्, न त्वावृत्तेर्ज्ञापकत्वेन प्रामाण्यं सम्भवि–इति भावः । अथ चाभ्युपगम्य ब्रूमः –शब्दः सत्यवचाः कथम् ?–इति । न हि तदा शब्दस्तत्त्वमसीति सिद्धवदुपदेशरूपप्रमोत्पादकः स्यात्, 'प्रसङ्ख्यानेन तत्त्वं भविष्यसि' इत्याकारेणैव हि तेन तदा भाव्यम् । एतदर्थकत्वेन वा 'तत्त्वमसि' वाक्यं परिणेयं स्यात् । तस्मात्, प्रसङ्ख्यानवादे ध्रुवं शास्त्रस्याप्रामाण्यमिति भावः । तथा सूपदिष्टं भगवत्पादैः – 'सिद्धो मोक्षोऽहमित्येव ज्ञात्वाऽऽत्मानं भवेद्यदि । विनिर्दिष्टं स मूढात्मा नाम चोद्यादरपि ॥' (उप १८–१९९) इति । न हि शब्दस्य प्रामाण्ये

तदावृत्ति कारणमिति कल्पयितु शक्यम् । प्रत्यक्षादिषु तथाऽदृष्टे – इत्यभिप्राय ॥

अत्र प्रसंख्यानवादी शङ्कते – 'पारोक्ष्यं शब्दो नः प्राह' इति । न भवता असदभिप्राय सम्यग् व्यज्ञायि, यत शब्द सत्यवचा एवास्मन्मतेऽपि । कथम् ? यत पारोक्ष्येण यदेव स प्राह तदेव तु प्रसख्यानात् तत्साक्षात्त्यात् असशय प्राह । तदेव स्थिते कथमयमुपालम्भ शोभते 'शब्द सत्यवचा कथम् ?' इति ? तस्मात्, अस्म पक्ष नास्ति कश्चिद्दोष इत्यभिप्राय । अथवात्र प्रकारान्तरेण श्लोकाक्षरयोजना कर्तव्या – पारोक्ष्य शब्दो न प्राह, स एव तु प्रसख्यानात् असंशय प्राह । अतो जिज्ञासु प्रसख्यानादेव तत्त्व जानीयात् इति चेन्मन्यसे, तदा शब्द सत्यवचा कथम् ? न हि तदानीं 'तत्त्वमसि' इति सिद्धवदुपदेश कार्य, किं तु प्रसंख्यानात् तत्त्व भविष्यसीति वक्तव्य भवेत् इति – इत्यभिप्राय । एव हि भगवत्पादैरप्यनूदित प्रसंख्यानवादिमतम् – "सदेव त्वमसीत्युक्ते नात्मनो मुक्तता स्थिरा । प्रवर्तते प्रसख्यानमतो युक्त्याऽनुचिन्तयेत् ॥ सकृदुक्त न गृह्णाति वाक्यार्थज्ञोऽपि यो भवेत् । अपेक्षतेऽत एवान्यदवोचाम द्वय हि तत् ॥" (उप १८–९, १०) इति ॥

अभ्युपगम्य प्रसख्यानात् तत्त्वप्रतिपत्तिम् एतदुक्त 'शब्द सत्यवचा कथम्?' इति । न तु तत् सम्भाव्यम् इत्याह – न चेति ॥ असम्भाव्य त्वोपपादनार्थं श्लोकमवतारयति – यस्मादिति ॥

युक्तिशब्दाविति ॥ साक्षात् प्रमां नाकुरुताम् इत्यन्वय । न हि शब्देनानुमानेन वा परोक्षतया अवगतो वह्नि श्रुत्यनुमानाभ्यासादपरोक्षो भवन् दृष्टचर – इति भाव । तदेतदुक्त भगवता सूत्रभाष्यकारेणापि 'न हि सकृत् प्रयुक्ताभ्या शास्त्रयुक्तिभ्यामनवगतो विशेष शतकृत्वोऽपि प्रयुज्यमाना भ्यामवगन्तु शक्यते' (सू. भा ४–१–२) इति ॥ १२३ ॥ १२४ ॥

एव तावत् प्रसंख्यान न श्रुतिविहित नापि तस्मात् प्रमोत्पत्ति सम्भाविता – इति बह्वीभिरुपपत्तिभि साधितम् । अथ क्वचित् कथञ्चित्

प्रसङ्ख्यानेन भाव्यम् इत्यभ्युपगन्तव्यम्, अन्यथा 'आवृत्तिरसकृदुपदेशात्' (वे सू ४-१-१) इति बादरायणीयं सूत्रं निरवकाशं स्यात् इति काशकुशं वा अवलम्ब्य प्रसंख्यानं सिषाधयिषु प्रत्याह — अथैनमपीति ॥ प्राणान् धारयितुं न शक्नोपि इति चेत् 'वस्तुमिति' — इति शेषः। 'न शक्नोमि' इति पाठान्तरे नाध्याहारक्लेशः। श्रवणादावेव श्रवणमननयोरेव प्रसंख्यानं संपादयिष्यामः इत्यर्थः। श्लोकमवतारयति, कथं तत्र वा तत्संपादनमिति विशदयितुम् — कथमिति ॥

प्रसंख्याने इति ॥ प्रसंख्याने यो न्यायः, आम्रेडनात्मकः अभ्यासलक्षणः त्वया अभ्युपगम्यते, स अस्य साधकस्य श्रुतौ श्रवणे अस्तु भवतु, अभ्युपगम्यताम्। यतोऽस्मिन् पक्षे ईषच्छ्रुतं सामिश्रुत्वा, सामिश्रुतं च सम्यक् श्रुत्वा अवगच्छतीति दृष्टानुसारेण कल्पितं भवति। तदुक्तं सूत्रभाष्ये 'दृश्यन्ते हि सकृच्छ्रुतात् वाक्यात् मन्दप्रतीतं वाक्यार्थम् आवर्तयन्तः तत्तदाभासव्युदासेन सम्यक् प्रतिपद्यमानाः' (सू भा ४-१-२) इति। युक्तश्चायम् आवृत्त्यभ्युपगमः, दृष्टफलत्वात् श्रवणादेः। उक्तं चैतदपि सूत्रभाष्ये — 'दर्शनपर्यवसानानि हि श्रवणादीनि, आवर्त्यमानानि दृष्टार्थानि भवन्ति। यथा अवघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि, तद्वत्।' (सू. भा. ४-१-१) इति। अत एव प्रसंख्यानाभ्युपगमे न कश्चिदपि दोषो भविष्यतीत्यभिप्रायः ॥

अत्र 'श्रवणादावेव' इति सन्न्यवाक्ये श्रवणमननयोरेव ग्रहणम्, न निदिध्यासनस्यापि, वार्तिकप्रस्थाने 'अपरायत्तबोधोऽत्र निदिध्यासनमुच्यते' (बृ वा २-४-२१७) इति निदिध्यासनस्य वाक्यार्थज्ञानात्मकत्वाभ्युपगमात्। यद्यपि भाष्यप्रस्थाने निदिध्यासनमप्यावर्तनीयत्वेनोपदिष्टम् 'अपि च उपासनम्, निदिध्यासनं च — इत्यन्तर्णीतावृत्तिगुणैव क्रिया अभिधीयते' (सू. भा. ४-१-१) इति, तथापि तत् वाक्यार्थज्ञानलाभात् पूर्वभूतत्त्वपरीक्षणादिष्विव तत्त्वनिश्चयार्थम् अनुष्ठीयमानं मानसं प्रयत्नं निदिध्यासनशब्दवाच्यमङ्गीकृत्येव इति न भाष्यवार्तिकयोः सिद्धान्तादौ विरोधः। न हि

श्रवणादावपि ज्ञानं विधीयत इति कस्यचिदपीष्टम् । तदुक्तं भाष्ये 'लोकेऽपि इदं पश्य इदमाकर्णय ' इत्येवञ्जातीयकेषु निर्देशेषु प्रणिधानमात्रं कुर्वित्युच्यते न साक्षात् ज्ञानमेव कुर्विति ' (सू भा ३-२-२२) इति । न च वार्तिक प्रस्थानेऽपि ध्यानस्य ज्ञानहेतुत्वं वार्यते, तथा ह्यत्रापि ' ध्यानाशङ्कानिवृत्त्यर्थं विज्ञानेनेति भण्यते । निदिध्यासनशब्देन ध्यानमाशङ्क्यते यतः ' (बृ वा २-४-२३३) इत्युक्त्वा तच्छेषेण 'विज्ञानोत्पत्तिहेतुत्वं ध्यानादेः प्राग वादिषम् । स्वार्थमेव [illegible] विज्ञानं मुक्तिमात्रफलं स्मृतम् ॥' (बृ वा २-४-२३४) इत्युक्तम् । अधिकं त्वत्र प्रक्रियाप्रत्यभिज्ञातोऽधिगन्तव्यम् । तस्मात् सूक्तं श्रवणादावेवाभ्यासो विधीयते, न वाक्यज्ञाने इति । उक्तं चेदं कण्ठरवेण बृहद्वार्तिके ' अतोऽपुरुषतन्त्रत्वात्रात्मज्ञाने विधिर्भवेत् । अन्वयादि क्रिया त्वस्य तत्तन्त्रत्वाद्विधीयते ॥ श्रवणं मननं तद्वत्तथा शमदमादि यत् । पुमान् शक्नोति तत्कर्तुं तस्मादेतद् विधीयते ॥ ' (बृ वा २-४-१२१, १२२) इतीत्यलमतिप्रपञ्चेन ॥ १२५ ॥

इदानीं श्रवणादिविधौ लाभान्तरमप्यस्तीति प्रदर्शयिष्यन् प्रतिवादिनं शङ्कां तावदुत्थापयति – नन्विति ॥ यदा हि प्रसंख्याने विधिरभ्युपेयते तदा कृतसर्वकर्मसंन्यासः साधको यावदनुभवं प्रसंख्यानं नियमेनानुतिष्ठति, अपरिसमाप्य चात्मदर्शनं ततः प्रच्यवमान आरूढपतितो भवतीति पारमहंस्यचर्या शास्त्रैकसंवेद्या भविष्यति । तथा हि पारमर्षं सूत्रम् – ' तद्भूतस्य [illegible] नातद्भावः ' (वे सू ३-४-४०) इत्यादि । यदा पुनः प्रसंख्यानविधि र्नाभ्युपेयते, ततः स्वच्छन्दवृत्तिरेव सर्वकर्मसंन्यासो भविष्यति इत्यभिप्रायः । न च तस्मिन् पक्षे सर्वकर्मसंन्यासस्यावसरः, ' यावज्जीवमग्निहोत्रं जुहोति '(?) इत्यादिश्रुतिचोदितानां कर्मणां संन्यासे प्रत्यवायप्राप्तिप्रसङ्गश्च इत्याह – अशेषकर्मणां च निवृत्तिर्न प्राप्नोतीति । तमिमम् आक्षेपं परिहरिष्यन् श्लोकमवतारयति – उच्यते इति ॥

त्वमर्थस्येति ॥ 'शमादिसाधनः पश्येत्'(३-४) इति श्लोकसंबन्धोक्तौ उक्तमेवेदं यत् त्वम्पदार्थविवेकाय संन्यासो विहित इति । तत् स्मर्तुमर्हसि

त्यभिप्रायः । उपदिष्टं चैतत् भगवत्पादैः 'त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् । साधनत्वं व्रजत्येव शान्तो दान्तानुशासनात् ॥ (उप. १८-२१२) इति, 'यथेष्टाचरणप्राप्तिः संन्यासादिविधौ कुतः । पदार्थज्ञानवृद्धस्य वाक्यार्थानुभवार्थिनः ॥ (उप. १८–२२९) इति च ॥

तदेवं कृतपदार्थविवेकस्य तत्त्वमस्यादिवाक्यादेव प्रमाणात् अशेषाविद्यानिवृत्तिद्वारा अवाक्यार्थप्रतिपत्तिरित्येतत्प्रतिज्ञातं सर्वथापि निरवद्यमित्युपसंहृतमिति सर्वं शिवम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीपूज्यपादशङ्करभगवच्चरणकमलपरिचर्यावाप्तवेदान्तप्रवेशेन श्रीगोपालनन्देन्द्रसरस्वतीशिष्येण श्रीमच्चिदानन्देन्द्रसरस्वत्याख्येन भिक्षुणा प्रणीतायां नैष्कर्म्यसिद्धिव्याख्यायां क्लेशापहारिण्यां तृतीयोऽध्यायः

ॐ तत्सत्

# अथ चतुर्थोऽध्यायः

( प्रकरणार्थसंक्षेप )

—: § :—

## १. अध्यायसंबन्धः

( मूलम् )

ॐ पूर्वाध्यायेषु यद् वस्तु विस्तरेणोदितं स्फुटम् ।
सङ्क्षेपतोऽधुना वक्ष्ये तदेव सुखवित्तये ॥ १ ॥

सङ्क्षेपविस्तराभ्यां हि मन्दोत्तमधियां नृणाम् ।
वस्तूच्यमानमेत्यन्तःकरणं तेन भण्यते ॥ २ ॥

( क्लेशापहारिणी )

एवं तावत् प्रथमाध्याये स्वतःसिद्धात्माज्ञाननिरसनद्वारेण सर्वानर्थनिवारकं नित्यानन्दप्रापकं च वेदान्तवाक्यजन्यज्ञानमेव केवलमिति, कर्मणा तु तत्रारादुपकारकत्वमेव न तु साक्षाद्धेतुत्वमिति च प्रतिपादितम् । द्वितीये च वाक्यज्ञानप्रतिबन्धनिरासार्थं त्वंपदार्थविवेकाय द्विविधान्वयव्यतिरेकलक्षणो न्यायः प्रदर्शितः । तृतीये पुनः, दशमवाक्यदृष्टान्तेन सर्वप्रमाणान्तराविरुद्धमात्माऽपरोक्षज्ञानं वाक्यादेवोत्पद्यते, न तज्ज्ञानप्राप्त्यनन्तरं कार्यान्तरमवशिष्यत इत्येतत् प्रतिष्ठापितम् । अथेदानीं सर्वमप्येनं प्रकरणार्थं सङ्क्षेपेणोपसंहर्तुम्, यच्च तदादौ प्रतिज्ञातम् स्वसंप्रदायस्य चोदितप्रमाणकत्वमस्तीति (१–२) तदाविष्करणाय श्रीमच्छङ्करभगवत्पादश्रीगौडपादाचार्ययोः संमतिमुदाहर्तुं चाध्याय आरभ्यते । तत्रादौ तावत् पूर्वाध्यायत्रयार्थस्य सङ्क्षेपकथनं प्रतिजानीते पूर्वाध्यायेष्विति ॥ विस्तरेणोक्तत्वान्मन्दधियः प्रकीर्णरूपमर्थं न निश्चेतुं प्रभवन्ति, तस्यैव त्वेकत्र पुञ्जीकृत्य कथने सुखेन वेदितुं पारयन्तीति तदर्थं सङ्क्षिप्य कथनम् – इति श्लोकद्वयार्थः ॥

## २. वृत्तग्रन्थार्थः संक्षेपतः

(मूलम्)

आत्माऽनात्मा च लोकेऽस्मिन् प्रत्यक्षादिप्रमाणतः ।
सिद्धस्तयोरनात्मा तु सर्वत्रैवात्मपूर्वकः ॥ ३ ॥

अनात्मत्वं स्वतःसिद्धं देहादिश्चास्य वस्तुनः ।
ज्ञातुरप्यात्मता तद्वन्मध्ये संशयदर्शनम् ॥ ४ ॥

असाधारणास्तयोर्धर्मान् ज्ञात्वा धूमाग्निवद् बुधः ।
अनात्मनोऽथ युद्ध्यन्तान् जानीयादनुमानतः ॥ ५ ॥

इदमित्येव बाह्येऽर्थे अहमित्येव बोद्धरि ।
द्वयं दृष्टं यतो देहे तेनायं मुह्यते जनः ॥ ६ ॥

(क्लेशापहारिणी)

### निर्णेतव्यो विषयः

संदिग्धं सप्रयोजनं च विचारमर्हति – इति न्यायात्, लोके देहादिषु संदिग्धार्थत्वं प्रदर्शयिष्यन् सर्वसंप्रतिपन्नमर्थं तावदनुवदति – आत्माऽनात्मा चेत्यादिश्लोकद्वयेन । प्रत्यक्षादिप्रमाणतः आत्मानात्मानौ लोके तावत् सिद्धौ । तत्र अनात्मा तावत् प्रमेयत्वेन सुप्रसिद्धः । प्रत्यक्षादिप्रमाणानां तत्रैव स्वभावतः प्रवृत्तेः । आत्मा तु 'येन मया एते पदार्था प्रमीयन्ते सोऽहं प्रमाणप्रवृत्तेः पूर्वमेव स्वतःसिद्धः' इति परिशीलनेन प्रमातृत्वेन निश्चयात् सिद्धः । तदाह 'तयोरनात्मा तु सर्वत्रैवाऽऽत्मपूर्वकः' इति ॥

अथेदानीं संशयितमर्थं विविच्य दर्शयितुम् अनात्मजातं द्वेधा राशीकृत्य निश्चितराशिं तावन्निर्दिशति – अनात्मत्वमिति ॥ देहादिलक्षणस्य पराचो घटादेर्वस्तुनः अनात्मत्वं स्वतःसिद्धम्, न तत्र कस्य संशयः । न हि जातु कश्चिदपि संदिग्धे 'किमयं घटः, अहं वा नाहं वा' इति । स्फुटतरं स्वात्मविविक्ततयैव बहिर्दर्शनात् इति भावः । एवं ज्ञातुरप्यात्मता स्वतःसिद्धा ।

तत्रापि न जातुचिदपि संशयो भवति – 'अहं वा नाहं वा' इतीति सुप्रसिद्धमेतत् । सिद्धस्य हि ज्ञातुर्ज्ञेयसतत्त्वनिश्चयाय प्रवृत्तिरिति । कुत्र तर्हि संशयस्थानत्वम् ? तदाह – 'मध्ये' इति ॥ देहादिबुध्यन्ते वस्तुनि तु किमयमात्मा अनात्मा वा इति संशयो वर्तते, तत्र हि ममप्रत्ययगोचरत्ववद् अहंप्रत्ययगोचरत्वमपि लोके दृष्टम् इत्यभिप्रायः ॥ ३–४ ॥

## देहादिषु संशये बीजम्

केन तर्हि प्रमाणेन तत्र निर्णयः कर्तव्यः, कुतो वा कारणात् तत्र संशयः ? कुतस्तत्रापि बाह्यघटादिष्विव स्फुटतरमनात्मत्वं यत्न विनैव न विज्ञायते ? – इति प्रश्नत्रयापाकरणायोपरश्लोकद्वयम् । तत्र प्रथमप्रश्नस्य निर्णयमाह – असाधारणान् इति ॥ स्थूलत्वम्, दृश्यत्वम्, अचेतनत्वम्, आगमापायित्वम्, व्यभिचरत्स्वरूपत्वं च– इत्यादयोऽनात्मनोऽसाधारणा धर्माः । तथा सूक्ष्मत्वम्, दृग्रूपत्वम्, चेतनत्वम्, कूटस्थनित्यत्वं चेत्यादयश्च आत्मनोऽसाधारणा धर्माः । तान् ज्ञात्वा धूमाग्निवत् धूमेन अग्निमिव अनात्मधर्मवत्त्वात् बुद्ध्यन्ता अनात्मान एवेति अनुमानतो जानीयात् निश्चिनुयात्, तद्विविक्तः प्रत्यगात्मा इति च । तत्र यद्यपि ज्ञाता अहंप्रत्ययगोचरत्वेनैव प्रथते व्यवहारे, ततोऽपि विविच्यैव प्रत्यगात्मा विज्ञेयः – इति द्रष्टव्यम् । उक्तं हि प्रागेव 'दृश्यत्वा गमापायित्वादिभिर्धर्मैः शरीरेन्द्रियमनोनिश्चयादिवृत्तीरनात्मतया व्युदस्य, अहं वृत्तिमतोऽपि दृश्यत्वाविशेषात् द्रष्टृपूर्वकत्वमवसीयते ' (३ ५६) इति ॥ ५ ॥

'मध्ये संशयदर्शनम्' इत्युक्तम् । तत्र संशयबीजमाह – दृढमित्येवेति ॥ देहे स्थूले, सूक्ष्मे च बुद्ध्यन्ते द्वय दृष्टम् 'अहम्', 'मम' इति च बुद्धिद्वयमपि दृष्टम् इत्यर्थः । यद्यपि 'अहं देहः' इत्यादिरूपा बुद्धिर्न दृष्टा, तथापि 'अहं मनुष्यः', 'स्थूलः', 'कृशः', 'काणो', 'बधिरो', 'बुद्धिमान्', 'जडः' – इत्यादिरूपेण देहद्वयतादात्म्यबुद्धिर्दृष्टैवेति न विरोधः । तेन बुद्धिद्वयगोचरत्व दर्शनेन हेतुना अयं जनः मुह्यते आत्मत्वेनानात्मत्वेन वा देहादीन् निश्चेतु- मसमर्थो भवतीत्यर्थः ॥ ६ ॥

(मूलम्)

केन पुनर्न्यायेन आत्मानात्मनोरश्वमहिषयोरिव विभागः क्रियत इति ? उच्यते –

न्यायः पुरोदितोऽस्माभिरात्मानात्मविभागकृत् ।
तेनेदमर्थमुत्सार्य ह्यहमित्यत्र यो भवेत् ॥ ७ ॥
विद्यात् तत्त्वमसीत्यस्माद् भावाभावदृशं सदा ।
अनन्तरमबाह्यार्थं प्रत्यक्स्थं मुनिरञ्जसा ॥ ८ ॥

(क्लेशापहारिणी)

आत्मानात्मविवेके न्यायः

अथ विभागक्रमं पृच्छति – केन पुनरिति । उत्तरत्वेन श्लोकद्वयमवतारयति – उच्यत इति ॥

न्याय इति ॥ आत्मानात्मविभागकृन्न्यायः । द्रष्टृदृश्यविभागेन, आगमापायितत्साक्षिविभागेन चान्वयव्यतिरेकलक्षणः पुरा द्वितीये विस्तरशः, तृतीये च सङ्क्षिप्य अस्माभिरुदितः । तेन न्यायेन अहमित्यत्र इदमर्थम् अनात्मांशम् उत्सार्य परित्यज्य, यः परिशिष्टो भवेत् तं भावाभावदृशम् भावाभावोभयसाक्षिणम्, अनन्तरमबाह्यार्थम् असण्डैकरसं प्रत्यक्स्थम् निरुपचरितप्रत्यगात्मस्वरूपे स्थितं तत्त्वमसीत्यनो वाक्यात् निरवशेषमविद्यानिरासपूर्वकं विद्यात् 'अनुमानादयं भावात्' (२–११), 'न व्यावृत्तिर्यथा भावात्' (२–११४) इत्युपपादितनीत्या पुनर्मननशीलः वाक्यादेव अञ्जसा विद्यात् । वाक्यमेवावाक्यार्थज्ञानसाधनम्, न तत्रान्वयव्यतिरेकानुसरणं प्रगल्भते, न च प्रसङ्ख्यानादिकं वाक्यज्ञानातिरिक्तं किञ्चिदप्यपेक्ष्यते इति भावः ॥ ८ ॥

(मूलम्)

उच्यतां तर्हि कया तु परिपाट्या वाक्यार्थं वेत्तीति । उच्यते । अन्वयव्यतिरेकाभ्याम् –

त्यक्तकृत्स्नेदमर्थेन्यात् त्यक्तोऽहमिति मन्यते ।
नावगच्छाम्यहं यस्माच्चिदात्मानमनात्मनः ॥ ९ ॥

अथ शरीरादिबुद्धिपर्यन्तः स सर्वोऽनात्मैवेति प्रमाणाद् विनिश्चित्य किमिति बुभुत्सातो नोपरमते ? शृणु –

अनुच्छिन्नबुभुत्सश्च प्रत्यग्हेतोरनात्मनः ।
डोलायमानचित्तोऽयं मुह्यते मौतन्नरः ॥ १० ॥

(क्लेशापहारिणी)

## कृतपदार्थविवेकस्य मनःस्थितिः

अथ वाक्यात् प्रत्यगात्मप्रतिपत्तिक्रम दिदर्शयिषु कृतान्वयव्यतिरेकस्य त्वपदार्थविवेकवतो मनस स्थिति तावद् वर्णयिष्यति । इदानीं तावत् तदर्थं वाक्यार्थज्ञानमुद्दिश्य प्रश्नमुत्थापयति – उच्यतां तर्हीति ॥ पुरोदित न्यायेनानात्मानमुत्सार्य वाक्यात् प्रत्यगात्मान विद्यात् इत्युक्तम् । तदेव वाक्यार्थज्ञान कया परिपाट्या भवतीति जिज्ञासोरय प्रश्न । तदुत्तरत्वेन श्लोकमवतारयति उच्यत इति । तदन्वयग्रन्थस्य 'अन्वयव्यतिरेकाभ्याम्' इत्यस्य श्लोकान्त स्थितेन 'त्यक्तस्त्वेदमर्थत्वात्' इत्यनेनान्वय ।

त्यक्तेति ॥ कृत्स्न देहादिबुद्ध्यन्त इदमर्थ । पूर्वमहमर्थत्वेन शङ्कित, इदानीमन्वयव्यतिरेकाभ्याम् अनात्मतया निश्चित्य त्यक्त, येन सोऽय त्यक्तकृत्स्नेदमर्थ । तस्मात् अय मुमुक्षु, त्यक्तोऽहम् इति मन्यते । तत्र हेतु – अहमनात्मन सकाशात् विविक्त निजात्मान स्वात्मान नावगच्छामि यस्मात्, तस्मात् अहमेवानात्मतया त्यक्त – इति मन्यते । अत को नु स्यामहम् ? किं ममाऽऽत्मा कश्चिदपि नास्त्येव ? – इति वीक्षापरो भवति । अत एव तस्य वाक्यात् प्रतिपत्तिरपेक्ष्यत इति भाव ॥ ९ ॥

तमिममभिप्राय विशदयन्, तदर्थं प्रश्नमुद्भावयति अथेति ॥ श्लोके नैवोत्तरं वक्ष्यामीत्याह – शृण्विति ॥

अनुच्छिन्नबुभुत्सश्चेति ॥ यस्मान्निजात्मान नावगच्छामीति वीक्षापन, अत एव प्रत्यग्हेतो, प्रत्यगात्मप्रतिपत्तिहेतो, प्रत्यगात्मान प्रतिपित्सु – इति यावत् । अनुच्छिन्नबुभुत्स, अपरिसमाप्तजिज्ञास, को न्वस्मि – इति

इतस्ततो दोलायमानचित्त, संशयसम्भ्रान्तकरण, गौवत्स् मूलगृहीत इव मुह्यते मूढो भवति । पर्याकुलितचित्तो भवतीत्यर्थः ॥ १० ॥

( मूलम् )

अविलुप्तविज्ञानात्मन आत्मत्वादेव नित्यसान्निध्यात् मुमुक्षुः किमिति न प्रतिपद्यत इति ? यस्मात् –

यैरद्राक्षीत् पुराऽऽत्मानं मनसात्मेति वीक्षते ।
दृष्टेर्द्रष्टारमात्मानं तैः प्रसिद्धैः प्रमित्सति ॥ ११ ॥

कस्मात् पुनर्हेतोः पराचीनाभिः शब्दाद्यवलेहिनीभिः, बुद्धिभिः, आत्मानम् अनात्मवच्च वीक्षत इति ? उच्यते –

चक्षुर्न वीक्षते शब्दमतदात्म्यकारणात् ।
यथैवं भौतिकी दृष्टिर्नात्मानं परिपश्यति ॥ १२ ॥

प्रत्यक्षादिप्रमाणप्रामाण्यानुरोधेन तावत् तददर्शनकारण-मुक्तम् । अथ प्रमेयसामान्यानुरोधेन प्रतिषेध उच्यते –

धीविक्रियासहस्राणां हानोपादानधर्मिणाम् ।
सदा साक्षिणमात्मानं प्रत्यक्त्वाद्वाहमीक्षते ॥ १३ ॥

क्व पुनरियं विवेकबुद्धिः ? किमात्मनि, उतानात्मनीति ? किञ्चातः ? यद्यात्मनि कूटस्थत्वव्याघातः, अनात्मदर्शित्वात् ; अथानात्मनि, तस्याप्यचैतन्यान्न विवेकसंबन्धः इति । उच्यते– 'दाह्यदाहकवत्तत्र' – इत्युक्तपरिहारात् –

बुद्धेरेव विवेकोऽयं यदनात्मतया भिदा ।
बुद्धिमेवोपमृद्नाति कदली तत्फलं यथा ॥ १४ ॥

सोऽयमतस्तं तत्पदक् –

अनुमानप्रदीपेन हित्वा मानोऽनात्मनः ।
संसारकारणम्बिन्या तदसारं धियेप्सति ॥ १५ ॥

योऽयम् अन्वयव्यतिरेकजो विवेकः, आत्मानात्मविभागलक्षणः, अनात्मस्थः, स्थाणौ संशयावबोधवत् प्रतिपत्तव्यः ; अयथावस्तुस्वाभाव्यात्, मृगतृष्णिकोदकप्रबोधवदिति । अत आह –

संसारबीजसंस्थोऽयं तद्धिया मुक्तिमिच्छति ।
शशो निमीलनेनेव मृत्युं परिजिहीर्षति ॥ १६ ॥

अस्यार्थस्य द्रढिम्ने श्रुत्युदाहरणम् –

इममर्थं पुरस्कृत्य श्रुत्या सम्यगुदाहृतम् ।
यच्चक्षुषेति विस्रब्धं न दृष्टेरिति च स्फुटम् ॥ १७ ॥

( क्लेशापहारिणी )

वीक्षापन्नस्य आत्माप्रतिपत्तौ हेतुः

अथ नित्यचैतन्यस्वभावत्वात्, आत्मत्वेन नित्यप्राप्तत्वाच्च नास्त्येव तदप्रतिपत्तिकारणम् इति शङ्कयति – अविलुप्तविज्ञानात्मन इति ॥ श्लोकेन परिहारं विवक्षुस्तमवतारयति – यस्मादिति ॥

यैरिति ॥ ॥ देहादिवुद्धयन्तम् अन्वयव्यतिरेकाभ्यामिदानीम् अनात्मेति मन्यते तं यैः प्रमाणैः पूर्वमनात्मानमद्राक्षीत्, तैरेव प्रसिद्धैः प्रत्यक्षादिभिः प्रमेयमात्रावभासनक्षमैः दृष्टेर्द्रष्टारं सर्वप्रमाणसाक्षिणं परमार्थतः तेषामप्यात्मानं प्रमिमीते । तस्मादेव न प्रतिपद्यते इत्यर्थः ॥ ११ ॥

तत्र तैरेव प्रमाणैः किमिति न प्रमीयत आत्मा इत्याशङ्कायां हेतुरुक्त एव दृष्टेर्द्रष्टारमिति विशेषणेन । उक्तं हि श्रुत्यैव 'न दृष्टेर्द्रष्टारं पश्येः' (बृ. ३-४-२) इत्यादिना । लौकिक्या दृष्टेः, उत्पत्तिविनाशवत्याः द्रष्टारं स्वकीयया नित्यया दृष्ट्या व्याप्तारं न पश्येः । असौ हि लौकिकी दृष्टिः कर्मभूता स्वोत्पत्त्या स्वाभिव्यञ्जिका नात्मानं स्वात्मना व्याप्तारं प्रत्यञ्चं व्याप्तुं शक्नोति । तस्मात् तं प्रत्यगात्मानं दृष्टेर्द्रष्टारं न पश्येः इति श्रुत्यर्थः ।

अथ प्रकारान्तरेणापि उत्तरं वक्ष्यामीति प्रश्नमुत्थापयति – कस्मात् पुनरिति । उत्तरत्वेन श्लोकमवतारयति – उच्यते इति ॥

चक्षुरिति ॥ यथा चक्षुः शब्दं न वीक्षते अतदात्मत्वकारणात् स्वात्मत्वाभावात् शब्दस्य–इत्यर्थः । एवं भौतिकी दृष्टिः प्रमाणभूता यस्मात् भौतिकी भूतैरारब्धा भूतान्येव द्रष्टुं शक्ता, नात्मानं सा परिपश्यति, तस्य अभौतिकत्वात् इत्यर्थः ॥ १२ ॥

उत्तरश्लोकेन हेत्वन्तरमुच्यत इत्याह – प्रत्यक्षादीति ॥ भौतिकं प्रमाणम् अभौतिकमात्मानं न द्रष्टुं प्रभवेदिति प्रमाणस्वाभाव्यमनुरुध्योक्तम्; अथ प्रमेयस्वभावं प्रमेयत्वेनाभिमतस्यात्मन. स्वभावम् अनुरुध्य तद्दर्शन-प्रतिषेध उच्यत इत्यर्थः ॥

धीविक्रियासहस्राणामिति ॥ सकलबुद्धिवृत्त्युदयास्तमयसाक्षित्वात् निरुपचरितप्रत्यक्त्वमात्मनः । अतस्तं स्वस्यापि साक्षिणम् अविषयत्वादेव अहम् अन्त.करणं नेक्षते न द्रष्टुं शक्नोतीत्यर्थः ॥ १३ ॥

एवं तावदन्वयव्यतिरेकन्यायस्यावधिम् आत्मानात्मविवेकं प्रदर्श्य अथैतद्विवेकस्याश्रयं निर्णिनीषुराक्षेपमुत्थापयति – क पुनरिति ॥ यदीयं विवेकबुद्धिरात्मनः, यदि वा अनात्मन॰, किं ततः स्यादिति विचारप्रयोजनं पृच्छति – किञ्चातः ? इति ॥ उभयथापि सिद्धान्ते दोषमेव पश्यामीत्या-हाक्षेप्ता – यद्यात्मनीति ॥ अयमभिप्रायः, अनात्मानं विशिष्य पश्यत-स्तावत् तत्परिच्छेदार्थं तदाकारेण परिणामो वाच्यः । तथा च कूटस्थत्वं व्याहन्येतेति स्फुटो दोषः । एवमात्मानात्मानौ विषयीकृत्य तद्विवेकलक्षण-विशेषाकारपरिणामे स्वात्मनोऽपि स्वात्मनैव विषयीकरणं दोषः स्यादित्यपि द्रष्टव्यम् । अथ मतमनात्मन्येवायं विवेक इति । तस्यापि न विवेकः सम्भवति । कुतः ? अचैतन्यात् । न ह्यचेतनस्य तस्य आत्मानात्मदर्शनम्, तद्विवेको वा न व्याहन्यत इत्यर्थः । सिद्धान्ती तु 'दाह्यदाहकतैकत्र' (३.५९) इत्यत्रोक्तं परिहारं स्मारयन्नेव यथोक्तोभयविधदोषं परिहरतीत्यर्थकं श्लोक-मवतारयति – उच्यत इत्यादिना । 'दाह्यदाहकतैकत्र इत्युक्तपरिहारात्'

इत्यस्य 'बुद्धावेव विवेकोऽयम्' इत्यन्तेन संबन्ध । न चैवम् अनात्मपक्षोक्त क्षेप । विवेको ह्यय वृत्तिरूपो बुद्धावेव भवति । ज्ञान तु तत्र स्वाभास समर्पकमात्मन एव – इति सर्वदोषातङ्कनिवारणात् । यथोपदिष्ट भगवत्पादैः 'बुद्धेस्तु प्रत्ययास्तस्मादात्माभासेन दीपिता । ग्राहका इव भासन्ते दहन्ती वोल्मुकादय ॥' (उप १८-७१) इति ॥

बुद्धावेवेति ॥ यत् यस्मात् विवेकात् अनात्मतया भिदा 'नायमात्मा' इति विवेचन भवति, सोऽय विवेक, बुद्धावेव भवति । स च बुद्धिमेव स्वप्रसवित्रीमपि उपमृद्नाति अनात्मतया असत्यामापादयति । तत्र दृष्टान्त – 'कदलीं तत्फलं यथा' इति । यथा जातमात्र फल स्वजननीं कदलीं नाशयति एवमिद विवेकरूप फलमपि जातमात्रमेव बुद्धिमनात्मतया निरस्य तीत्यर्थ । अत्राय गीताभाष्यवाक्यार्थोऽनुसन्धेय – "यथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्य अविक्रिय एव सन् बुद्धिवृत्त्यविवेकविज्ञानेन अविद्यया 'उपलब्धा' आत्मा कल्प्यते, एवमेव आत्मानात्मविवेकज्ञानेन बुद्धिवृत्त्या विद्यया असत्यरूपयैव परमार्थतोऽविक्रिय एवाऽऽत्मा विद्वान् उच्यते" (गी भा २-२१) इति । एव च अध्यारोपदृष्ट्या आत्मा विवेकीति व्यवह्रियत इति सर्वमनवद्यम् ॥ १४ ॥

तदेव प्रासङ्गिकमाक्षेप परिहृत्य प्रकृतामेव चिन्तामनुवर्तयते – सोऽयमिति ॥ कृतान्वयव्यतिरेकोऽप्यज्ञ एव, यावत् वाक्येनात्मैकत्व न विजानातीति हि प्रकृतम् । सोऽयम् अनुमानेन अनात्मान निरस्य स्थित, अत वे आत्मानात्मविवेकरूपे तत्त्वदृक् लब्धपरमार्थदृष्टि इत्यर्थ ॥

अनुमानप्रदीपेनेति ॥ अन्वयव्यतिरेकलक्षणेन सर्वान् देहादि बुद्ध्यन्तान् अनात्मन हित्वा संसारैकावलम्बिन्या धिया द्वैतमात्राश्रयया बुद्ध्या तदभाव संसाराभावम् ईप्सति आप्तुमिच्छति । अनुमानेन भावादभाव प्राप्त, तस्मादपि व्यावृत्तिमनुमानेनैव प्राप्तुमीहते । न च सा वाक्य विना प्राप्या इत्यत उक्तम् 'अनत्वे तत्त्वदृक्' इति ॥ १५ ॥

ननु किमित्यात्मानात्मविवेकेन सहितापि बुद्धिः संसारावलम्बिनीत्युपालभ्यते ? न हि वाक्यादात्मनि कश्चिदतिशयः क्रियते यतस्तदपेक्षा स्यादपि इत्याशङ्क्याह – योऽयमिति ॥ योऽयमनात्मस्थः अनात्मानमपरित्यज्यैव तिष्ठतीति । स च संशयावबोधवत् 'स्थाणुर्वा पुरुषो वा' इतिवद् द्विकोटिकत्वात्, अनिश्चयरूपः प्रतिपत्तव्यः । अयथावस्तुत्वात्मान्यात् यथावस्तुस्वाभाव्यम् आत्मनोऽद्वितीयत्वम्, तद्विपरीतत्वात् नानात्मवस्तुप्रदर्शकत्वात् ; मृगतृष्णिकोदकप्रबोधवत् अयथार्थश्च इति प्रतिपत्तव्यः । अतोऽज्ञानाश्रय एवायं विवेको नाम इत्याहोत्तरः श्लोक इत्यभिप्रायेण तमवतारयति–अत आहेति ॥

संसारबीजसंस्थोऽयम् इति ॥ संसारस्य बीजम् अज्ञानम् तस्मिन् संस्थितोऽयम् आत्मानात्मविभागदर्शी । अज्ञानेनैव हि अद्वितीयम् अविक्रियं च स्वात्मानम् आत्मानात्मरूपेण द्वेधा विभक्तं पश्यति, विवेकविज्ञानं च बुद्धिवृत्तिलक्षणं स्वात्मन इति भ्राम्यति । तद्धिया संसारैकविषययैव विवेकलक्षणया बुद्ध्या मुक्तिं प्राप्तुमिच्छति । अतोऽयं यथा शशो नेत्रनिमीलनमात्रेण व्याधभयं तनो मृत्युं च परिजिहीर्षति, एवं ज्ञानचक्षुर्निमीलनरूपेणाज्ञानेनैव संसारमृत्युं परिजिहीर्षतीत्यनुकम्प्यः इत्यर्थः ॥ १६ ॥

अस्यार्थस्येति ॥ अन्वयव्यतिरेकाविधियैव नात्मज्ञानमित्यर्थस्येत्यर्थः ॥

इममर्थं पुरस्कृत्य यथास्माभिरुक्तं तथा सर्वप्रमाणागोचरत्वमात्मनः स्वीकृत्य श्रुत्या सम्यगेवैतं सम्यक् स्फुटम् उदाहृतम् । किं तदुदाहृतमिति ? आह – यच्चक्षुषेति ॥ 'यच्चक्षुषा न पश्यति' (के. १-७), 'न दृष्टेर्द्रष्टारं पश्येः' (बृ. ३-४-२) इति च अज्ञानो थप्रत्यक्षाद्यगोचरत्वम् आत्मन आह – इत्यर्थः ॥ १७ ॥

## ३. वाक्यस्यैवात्मैकत्वबोधकत्वम्

(मूलम्)

बुद्ध्यन्तमपविद्धयैवं कोऽन्यहं स्वामिनीक्षितुः ।
श्रुतिस्त्वमसीत्याह सर्वमानातिगामिनी ॥ १८ ॥

( क्लेशापहारिणी )

तृतीयाध्यायार्थं सङ्क्षिप्योपसंहरति – बुद्ध्यन्तामिति ॥ तदेव देहादि बुद्ध्यन्तम् अन्वयव्यतिरेकन्यायद्वयेनापविद्धय अनात्मत्या निराकृत्य 'यद्यपि देहादिबुद्ध्यन्तव्यतिरिक्त एवाहमिति ज्ञातम्, तथापि कोऽन्वह स्याम्' इतीक्षितु, वीक्षापन्नस्य सर्वमानातिगामिनी प्रत्यक्षादीनि बाह्यप्रमेयविषयाणि सर्वाण्यपि अतीत्य सकलप्रमेयविलक्षणेऽपि अद्वितीयप्रत्यगात्मन्यविषयेऽपि गन्तु शील यस्या सा श्रुति 'तत्त्वमसि' इत्याह, भावाभावविलक्षण विशेषस्वरूप ज्ञापयतीत्यर्थ ॥ १८ ॥

## ४. अभियुक्तवचनसंवादः

( मूलम् )

एष सङ्क्षेपतः पूर्वाध्यायत्रयस्यार्थ उक्तः। सोऽयं न्याय्योऽपि वेदान्तार्थः शास्त्राचार्यप्रसादलभ्योऽपि अनपेक्षितशास्त्राचार्यप्रसादः, अनन्यापेक्षसिद्धस्वभावत्वात् कैश्चिन् श्रद्धानैर्न प्रतीयते। तेषा सग्रहार्थम् अभिमतप्रामाण्योदाहरणम् –

भगवत्पूज्यपादैश्चाप्युदाहार्यैवमेव तु ।
सुविस्पष्टोऽस्मदुक्तोऽर्थः सर्वभूतहितैषिभिः ॥ १९ ॥

( क्लेशापहारिणी )

अथेदानीं वर्तिष्यमाणग्रन्थस्य वृत्तेन संबन्ध वक्तुमारभते – एष इति ॥ वृत्त स्मारयति सक्षेपत पूर्वाध्यायत्रयार्थ इति । यद्यपि, अध्याय त्रयोक्त ज्ञानकर्मसमुच्चयवादखण्डनम्, आत्मनोऽहप्रत्ययविषयत्वखण्डनम्, प्रसङ्ख्यानादिवादखण्डन चेत्यादिक नात्र संगृहीतम्, तथापि न तत्र परम

तात्पर्यमिति न सोऽन्यायत्रयार्थः ; तत्त्वमस्यादिवाक्यादेव सर्वानर्थहेत्वज्ञानप्रहाणम् इत्येतावानेव तु विवक्षितः प्रकरणार्थः इति स एवात्र सङ्क्षेपेणोक्त इत्यवधेयम् । अथ वर्तिष्यमाणग्रन्थस्य तात्पर्यमाह — सोऽयमिति ॥ अयं वेदान्तार्थः वाक्यज्ञानेन सर्वानर्थनिरसनपूर्वकं निरतिशयानन्दरूपस्वात्मन्यवस्थानलक्षणः न्याय्योऽपि वर्णितरीत्या सार्वत्रिकानुभवानुसारियुक्त्युपेतोऽपि कैश्चिन्मन्दप्रज्ञैः श्रद्धानैः परप्रत्ययनेयबुद्धिभिः न प्रतीयते न विश्वस्यते । न साम्प्रदायिकयुक्तियुक्तोऽयम् इति मत्वा नाद्रियत इत्यर्थः । तथा शास्त्राचार्यप्रसादलभ्योऽपि अनपेक्षितशास्त्राचार्यप्रसादोऽयमर्थः । 'नावेदविन्मनुते तं बृहन्तम्' (तै. ब्रा. ३-१२-९-७), 'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ.३-९-२६) इत्यादिश्रुतिभ्यः । शास्त्रप्रसादेन लभ्योऽयम् न पुरुषमत्यूहमात्रेण, 'नैषा तर्केण मतिरापनेया' (का. १-२-९) इति श्रुतेः । आचार्यप्रसादलभ्यश्च 'आचार्यवान् पुरुषो वेद' (६-१४-२), 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' (गी. ४-३४) इति च श्रुतिस्मृतिभ्याम् । न तु सम्प्रदायविदा येनकेनचित् तार्किकेण प्रोक्ता सुज्ञानाय भवेदित्यर्थः । एतादृशोऽपि अस्य अर्थस्य तज्ज्ञानस्य च अनन्यापेक्षसिद्धस्वभावत्वात्, स्वयंसिद्धनित्यचैतन्यस्वरूपपरमात्मानन्दस्वाभाव्यात्, अनपेक्षितशास्त्राचार्यप्रसादत्वम् । न हि शास्त्रप्रसादेन आचार्यप्रसादेन वा अयमर्थः प्रागसिद्धः सन् नूतनतया निष्पाद्यते, किं तु स्वयंसिद्ध एव सन् अविद्यामात्रव्यवहितत्वात् शास्त्रेणाचार्येण च अविद्याध्यारोपितातद्धर्मनिरसनपूर्वकं विज्ञाप्यते इत्यभिप्रायः । योऽयमेतादृशो न्याय्योऽपि स्वयंसिद्धस्वभावश्च वेदान्तार्थः सर्वथा नातिशङ्कनीय एवास्माभिः प्रकरणेनानेन प्रतिपादित , तमेनमेतादृशमपि श्रद्धानैः 'अभिनवोऽयम् कश्चित् सिद्धान्तो नास्मद्गुरुसम्प्रदायागत' इति शङ्कमानैः ; अभियुक्तोक्त्या अस्य दृढीकरणम् अपेक्षमाणैरिति यावत् । न प्रतीयते न विश्वस्यते इत्यपि स्यात् । तेषामपि संवादार्थम् आवर्जनेनास्मत्प्रकरणार्थे श्रद्धोत्पादनार्थम्, तदभिमतप्रामाण्यसम्प्रदायविद इत्यभिप्रायः ॥ भगवत्पूज्यपादैरिति श्लोकः सुगमार्थः ॥ १०॥

(मूलम्)

किं परमात्मन उपदेशः, उत अपरमात्मन इति ? किञ्चातः ? यदि परमात्मनः, तस्योपदेशमन्तरेणैव मुक्तत्वात् निरर्थक उपदेशः। अथापरमात्मनः, तस्यापि स्वत एव संसारस्वभावत्वान्निष्फल उपदेशः। एवम् उभयत्रापि दोषवत्त्वात्। अत आह –

अविविच्योभयं वक्ति श्रुतिश्चेत् स्याद् ग्रहस्तथा।
इति पक्षमुपादाय पूर्वपक्षं निशात्य च ॥ २० ॥

तत्रेदम् अविवेकात् स्वतो विविक्तात्मने 'तत्त्वमसि' इत्युपदिष्टम्।

युष्मदस्मद्विभागज्ञे स्यादर्थवदिदं वचः।
यतोऽनभिज्ञे वाक्यं स्याद् बधिरेष्विव गायनम् ॥ २१ ॥

तस्य च युष्मदस्मद्विभागविज्ञानस्य का युक्तिरुपायभावं प्रतिपद्यते ? शृणु –

अन्वयव्यतिरेकौ हि पदार्थस्य पदस्य च।
स्यादेतदहमित्यत्र युक्तिरेवावधारणे ॥ २२ ॥

कथं सौ युक्तिरिति ? अत्राह –

नाद्राक्षमहमित्यस्मिन् सुषुप्तेऽन्यन्मनागपि।
न वारयति दृष्टिं स्वां प्रत्ययं तु निषेधति ॥ २३ ॥

एवं विज्ञातवाक्यार्थे श्रुतिर्लोकप्रसिद्धितः।
श्रुतिस्तत्त्वमसीत्यादौ श्रोतुर्मोहापनुत्तये ॥ २४ ॥

तत्र त्वमितिपदं यत्र लक्षणया वर्तते सोऽर्थ उच्यते –

अहंतत्त्वस्य या निष्ठा ज्योतिषि प्रत्यगात्मनि।
सैवोक्ता सदसीत्येवं फलं तत्र विमुक्तता ॥ २५ ॥

( केनापदादीपिका )

## अविविक्तात्मतत्त्वस्यैव श्रोतृत्वम् इत्यत्र भगवत्पादसंमतिः

भगवत्पादै कथमयमर्थ उदाहारि ? – इति शङ्कायाम् उपदेश-साहस्याम् उपस्थापितं पूर्वपक्षमाह – **किं परमात्मन** इति ॥ एवं हि तत्रोक्तम् – 'अर्थी दुःखी च यः श्रोता स स्वध्यक्षोऽथवेतर । अध्यक्षस्य च दुःखित्वमर्थित्वं च न ते मतम् ॥ कर्ताध्यक्ष सदसीति नैव सद्ब्रह्ममर्हति । सदेवासीति मिथ्योक्तिः श्रुतेरपि न युज्यते ॥' (उप. १८–७६, ७७) इति । एवं पूर्वपक्षे आत्मनि अनात्मनि वा उपदेशाङ्गीकारे उभयत्रापि दोषवत्त्वात्, उपदेशानर्थक्यप्राप्तिदोषपातादवन्ध्यात्, नैवोपदेशः संभवतीति वाक्यदोष । अत आह – अत्र परिहारमाह सिद्धान्तीति श्लोकमवतारयति –

**अविविच्येति** ॥ उभयम् आत्मानम् अनात्मानं च अविविच्य विवेकाभाववन्तमेवोद्दिश्य प्रवृत्तं चेत्, इदं तत्त्वमसीति वचः अर्थवत् स्यात् इत्युदाहृतस्य भगवत्पादीयश्लोकार्धस्यार्थः । तच्छेषत्वेन पठ्यते – 'असदस्तु विनिश्चैव त्वमेवेति वदेद्यदि । प्रत्ययान्वयिनिष्ठत्वमुक्तदोषं प्रसज्यते ॥' (उप १८–७८) इति । अस्मदर्थप्रत्ययहङ्कारं विनिश्चैव तन्निष्ठत्वं त्वंपदस्य वदेद्यदि तदा उक्तः दोषः, अचेतनत्वात् तस्य श्रोतृत्वाभाव, 'अन्वयी ग्राहकस्तेषामिष्येतदपि तत्समम् । अचितित्वस्य तुल्यत्वादन्यस्मिन् ग्राहके सति ॥' (उप १८–७४) इत्यत्रोक्तं, प्रत्ययग्राहकाभावो वा प्रसज्यते इति तदर्थः । तथा च 'बुद्धावेव विवेकोऽयम्' (४–१४) इत्यत्रास्माभिरप्युक्तम् इति भावः । इति पक्षम् उपादाय चिदाभासानङ्गीकारिपूर्वपक्षं निरस्य च भगवत्पूज्यपादैश्चाप्युदाहारि' इत्यनेन पूर्वश्लोकगतेन सम्बन्ध । अत्र आत्मानात्माविवेककारणं चिदाभासमनभ्युपगच्छतां पक्ष एव पूर्वपक्षः । तथा ह्युपक्रमे–' बुद्धेस्तु प्रत्ययास्तस्मादात्माभासेन दीपिता । ग्राहका इव भासन्ते दहन्तीवोल्मुकादयः ॥' (उप १८ ७१) इति प्रत्ययानां ग्राहकाभासत्वमूरीकृत्यैव विचारः प्रवर्तितः । पूर्वपक्षे अन्वय्येवाहङ्कारो ग्राहक इत्यभ्युपगतम्, सिद्धान्तिना तु तस्याप्यचितिमत्त्वात् न स्वत एव ग्राहकत्वम्, नाप्यध्यक्ष

सानिध्यात् – इत्युक्त्वा तदनन्तरमेव वाक्यश्रोतुरप्यसिद्धिरस्मिन् पूर्वपक्षे इति वक्तु यथावर्णित 'अर्थी दु सी च य श्रोता' इति श्लोकस्थो विकल्प उपन्यस्त । अत एव च समनन्तरोत्तरश्लोके पठिष्यति 'त्वमित्यध्यक्षनिष्ठश्चे दहमध्यक्षयो कथम् । सम्बन्धो वाच्य एवात्र येन त्वमिति लक्षयेत्' (उप १८-७९) इति । आभासानङ्गीकर्तृमते हि सम्बन्धाभावदोष प्रसज्यत इत्यलमतिप्रपञ्चेन ॥ २० ॥

तदेवमविविक्तोभयरूपस्यैव श्रोतृत्वम् इत्यत्र भगवत्पादसमतिरभिहिता । अथेदानी उपदेश कस्मिन्नधिकारिणि प्रमितिजनक इत्यत्रापि तत्सम्मति विवक्षुराह तस्येति ॥ इदमविवेकात् इदम सकाशात् अविवेकापनात् 'अयमहमस्मि' इत्येवरूपात् स्वत स्वस्मात् आत्मन , चिदाभासयुक्तात् अहप्रत्ययिन सकाशादिति यावत् । तस्मात् विविक्त साक्ष्यन्वयसाक्ष्य व्यतिरेकाभ्या विभज्य निश्चित आत्मा येन तादृशे अधिकारिणे उपदिष्टम्-इत्यर्थ । आत्मानात्मविवेकवत एवायमुपदेश इत्यत्र भगवत्पादोक्तिमुदाहरति-'युष्मदस्मद्विभागज्ञे स्यादर्थवदिद वच' (उप १८-९०) इति । कुत पुनरेतदेवम् ? उपदेशोऽपि सत्त्वज्ञस्यैव युज्यते इत्याशङ्क्य प्रतिवक्ति – यतोऽनभिज्ञ इति । आत्मानात्मविभागानभिज्ञे त्वपदार्थविवेकाभाववति वाक्य बधिरेष्विव गायनम् न फल्द स्यात् । यथा बधिरो गानमेव न ताव च्छृणोतीति गानरसं न शक्नुयाद्वेदितुम्, एव त्वपदार्थमेवाजानन् कथमपि न शक्नुयात्तस्य तत्पदार्थभाव बोद्धुमित्यर्थ । यत्पुनराशङ्कितम्, उपदेशोऽपि तत्त्वज्ञस्यैव युज्यत इति तत्परिहृतम् विवेकोऽप्यनात्मस्य एवेति 'संसारबीज संमोऽयम्' इति श्लोकेनेति भाव ॥ २१ ॥

अन्वयव्यतिरेकविषयेऽपि भगवत्पादसमतिः

अथेदानीं युष्मदस्मद्विभागज्ञाने अन्वयव्यतिरेकन्यायानुसरणमेव उपाय इत्यत्रापि भगवत्पादवाक्यसम्मतिमुदाहर्तुं प्रश्नमुद्भावयति – तस्य चेति ॥ उत्तरत्वेन श्लोकमेवावतारयति – शृण्विति ॥

अन्वयव्यतिरेकौ हीति ॥ अस्य उपदेशसाहस्रीश्लोकस्य (उप १८-९६) अयमभिप्राय – 'इदमहम्' इति इदमहमो सामानाधिकरण्येन प्रयोगे पदस्य पदार्थस्य च अन्वयव्यतिरेकौ युक्तिरेव स्यात्, न तु तन्मात्रेण वाक्य विना अद्वितीयप्रत्यगात्मरूपविशेषार्थज्ञान भवतीति । तथथा 'अह मनुष्य', 'अहगन्ध', 'अहमिच्छामि', 'अह निश्चिनोमि' इत्यादौ मनुष्यादिपदव्यतिरेकेऽपि अहपदान्वयात् मनुष्यादिपदवाच्यदेहादीनामपि पदार्थाना व्यतिरेकात् अहपदवाच्यस्यापि देहादिव्यतिरिक्तत्वमवधार्यते इति । एव 'सुखमहमस्वाप्सम्, न किञ्चिदवेदिषम्' इति सुप्तोत्थितपरामर्शात्, अहङ्कारादिरहितेऽप्यात्मन्यहपदप्रयोगात्, अहप्रत्ययसाक्षिण्यपि तस्य पदस्य वृत्तिरस्तीति विज्ञायते । तदेव पदपदार्थान्वयव्यतिरेकौ अहपदार्थस्य सतत्त्व निर्धारणे युक्ति । एव तत्पदार्थान्वयव्यतिरेकावपि तदर्थनिर्धारणे युक्ति । तथथा 'सदेव सोम्येदमग्र आसीत्' इति वाक्यात् सन्मात्र तदर्थ इति गम्यते । तदैक्षत इति वाक्ये सत एवान्वयात् ईक्षणकर्तृत्वव्यपदेश दृष्ट्वा तदेव सत् चित्स्वरूपमिति निर्धार्यते । एव 'सता सोम्य तदा सपन्नो भवति' इत्यतो जीवाना सर्वपिसान सदिति गम्यते । तथा 'सन्मूला सोम्येमा सर्वा प्रजा सदायतना सत्प्रतिष्ठा' (छा ६-८-४) इत्येतद्वाक्यात् जगज्जन्मादिकारण इत्यादिकमूह्यम् ॥ २२ ॥

तत्राऽऽत्मान्न करणयोर्विशिष्यान्वयव्यतिरेकौ भगवत्पादैरपि प्रदर्शितौ इति वक्तु श्लोकमवतारयति – कथमिति ॥

नाद्राक्षमिति ॥ 'सुषुप्तेऽन्यन्मनागपि स्वल्पमपि नाद्राक्षम्' इति स्वां स्वरूपभूता दृष्टि चैतन्य न वारयति, प्रत्ययमेव तु निषेधति । तदेवमस्मिन् परामर्शे अविलुप्तदृष्टिरूपमात्मानमन्वयेन लुप्तदृष्टि च व्यतिरेकेणावगन्तु शक्यत इति भाव । अस्मिन् भगवत्पादीये श्लोके (उप १८-९७) प्रत्यय शब्द केचिदित्थ व्याचख्युः – 'प्रतीयत इति प्रत्ययः प्रमातृप्रमाण प्रमेयादिरूप सर्व एव विशेषो गृह्यत' इति । वय तु पूर्वापरग्रन्थार्थ समालोचनया प्रत्ययशब्देनात्र प्रत्यय एव ग्रहीतव्य इति मन्महे, वाक्यशेषे

तथैवावधारणात् । एवं हि समनन्तरोत्तरश्लोक 'स्वयंज्योतिर्न हि द्रष्टुरित्येवं संविदोऽस्तिताम् । कौटस्थ्यं च तथा तस्या प्रत्ययस्य तु लुप्तताम् । स्वयमेवाब्रवीच्छास्त्र प्रत्ययावगती पृथक् ॥' (उप. १८–९८) इति । अयमभिप्राय – 'अत्राय पुरुष स्वयंज्योतिर्भवति' (बृ. ४–३–१४), 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' (बृ ४–३–२३) इति च ब्रुवती श्रुति, सुषुप्तावपि आत्मचैतन्यस्य अस्तिताम्, तस्य कौटस्थ्यं च स्वयमेवाह, प्रत्ययस्य तु 'यद्वै तन्न पश्यति' इत्यनेन लुप्तता च स्वयमेवाह ; अतोऽत्र प्रत्ययावगती पृथक्कृत्य दर्शिते इति गम्यत इति । प्रत्ययादितरस्य प्रमेयस्य तु नास्तिक्य पृथगेव श्रुत्या प्रोक्तम् 'न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्त यत् पश्येत्' (बृ. ४–३–२३) इति । ततो द्वितीयं विभक्त नास्ति, यदि हि तद् विद्येत तर्हि पश्येत् इत्यर्थ । तस्मात् 'स्यादेतदहमित्यत्र युक्तिरेवावधारणी' इति प्रक्रमात् । 'प्रत्ययस्य तु लुप्तताम्' इति च विशिष्य प्रत्ययस्यैव वाक्यशेषे ग्रहणाच्च अहंपदार्थे युष्मदशाद् विविच्य कूटस्थात्मनिर्धारणार्थमेवेदमुदाहरणमिति युक्तमुत्पश्याम ॥ २३ ॥

## कृतान्वयव्यतिरेकस्यैवैकत्वोपदेश इत्यत्रापि भगवत्पादसंमतिः

अथेदानीं यत्तदुक्तमस्माभि नान्वयव्यतिरेकमात्रेण कृतार्थता किं तु कृतान्वयव्यतिरेक श्रुत्यैव प्रतिबोध्यत (३–११५) इति, तत्रापि भगवत्पादसमति वक्ष्यामीति श्लोकमुदाहरति – एवमिति ॥ अस्य श्लोकस्य (उप. १८–९९) अयमर्थ – एव विज्ञात वर्जनीयतया वाच्यार्थ, अहमर्थः तत्पदार्थश्च येन तादृशे सति पुरुषे, इद ज्ञान व्यतिरेकानुसारिण । 'अन्वयानुसारेण विवेचितत्वत्त्वपदार्थे' इत्यपि द्रष्टव्यम् । एव चान्वयव्यतिरेकाभ्यामवगतपदार्थे इत्यर्थ फलिष्यति । अथवा विज्ञानवाच्यार्थे इत्यस्यैव वाच्यार्थ विवेकपूर्वकमवगमनफलार्थे इत्यभिप्रायोऽस्येय । श्रुतिलोकप्रसिद्धितः इति । लोकप्रसिद्धिस्तावदुदाहृतैव सुषुप्तपरामर्शेन्द्रा । श्रुतिप्रसिद्धिश्च 'अत्रायं पुरुष स्वयंज्योति' (बृ. ४–३–९, १४), 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते'

(बृ ४-३-२३) इत्यादिवाक्यज्ञानजन्या । तदेव श्रुतिलोकप्रसिद्धित· एवमवगततत्त्वपदार्थे पुरुषे सति श्रुतिः, श्रोतुर्मोहापनुत्त्यै अविद्यानिरसनपूर्वक जिज्ञासापरिसमाप्त्यर्थं 'तत्त्वमसि' इत्याह – इत्यर्थ । 'विज्ञातवाक्यार्थे' इति पाठस्तु नादरणीय । न हि श्रुतिलोकप्रसिद्धितो वाक्यार्थविज्ञानम् इत्याञ्जसं भवेदिति । यत्तु केषाञ्चिद्व्यूहः 'विज्ञातावान्तरवाक्यार्थे' इत्यर्थ इति । स प्रकृतहानाप्रकृतकल्पनाप्रमव्जक इत्युपेक्ष्य । प्रकृतो हि अन्वय-व्यतिरेकाभ्या पदार्थविवेक, नावान्तरवाक्यार्थ इति । अतो यथास्वीकृत एव पाठ साधीयानित्युत्पश्याम ॥ २४ ॥

अथ यत्तदुक्तम् 'अहवृत्त्या लक्ष्यतेऽनर्हयापि स' (३-९७) इत्यादिना । तथैव त्वपदलक्ष्यत्वमात्मनो भगवत्पादैरप्युक्तम् इति दर्शयितु श्लोकावतरणिका तत्र रवमिति पदमिति ॥ 'अहशब्दस्य' (उप १८-९८) इति भगवत्पादीयश्लोकस्यायमर्थ । अहशब्दस्य या प्रत्यगात्मनि लक्षणया निष्ठा पर्यवसानम् सैव 'सदसि' इत्येववाक्ये त्वपदार्थस्य उक्ता विवक्षितेति । सदभिन्नत्वपदार्थज्ञाने फल विमुक्तता । एतल्लक्ष्यार्थाज्ञानादेव वाक्यार्थो न ज्ञायते लोकैरिति भाव ॥ २५ ॥

(मूलम्)

अन्वयान्वयव्यतिरेकोदाहरणम् –

छित्त्वा त्यक्तेन हस्तेन स्वयं नात्मा विशेष्यते ।
तथा शिष्टेन सर्वेण येन येन विशेष्यते ॥ २६ ॥
निशेषणमिदं सर्वं साध्वलङ्करणं यथा ।
अविद्याध्यामतः सर्वं ज्ञात आत्मन्यसद् भवेत् ॥ २७ ॥
तस्मात्त्यक्तेन हस्तेन तुल्यं सर्वं विशेषणम् ।
अनात्मत्वेन तस्माज्ज्ञो मुक्तः सर्वविशेषणैः ॥ २८ ॥
ज्ञातैवात्मा सदा ग्राह्यो ज्ञेयमुत्सृज्य केवलः ।
अहमित्यपि यद्ग्राह्यं व्यपेताङ्गसम हि तत् ॥ २९ ॥

दृश्यत्वादहमित्येष नात्मधर्मो घटादिवत् ।
तथान्ये प्रत्यया ज्ञेया दोषाश्चात्माऽमलो ह्यतः ॥ ३० ॥

( क्लेशापहारिणी )

अन्वयव्यतिरेकोदाहरणान्तरम् उपदेशसाहस्रीतः

भगवत्पादीय वाक्यान्तरमप्यस्त्य-वयव्यतिरेकन्याय यथोक्त दर्शयदिति वक्तु विशेषापोहप्रकरणगतान् श्लोकानुदाहरति – अन्यच्चेति ॥

'छित्त्वा' (६–१) श्लोकस्यायमर्थ – यथा छित्त्वा त्यक्तेन हस्तेन आत्मा न स्वय विशेष्यते तथा शिष्टेन हस्तातिरिक्तेनापि सर्वेण । येन येनाङ्गैर्विशेष्यते, तेन तेन स्वय नात्मा विशेष्यत इति ॥ २६ ॥

त्यक्तहस्तदृष्टा-तेन किमवगम्यत इत्यत्रोच्यते भगवत्पादे – विशेषण-मिदमिति ॥ तदिद सर्वं विशेषण साध्वलङ्करण यथा । यथा प्रजापति नोपदिष्टप्रकारेण आगन्तुकसाध्वलङ्कारादिवत् शरीरादीनामपि छायाकरत्वा विशेषात्, अनात्मत्वे दृढीकृतेऽपि तयोर्विपरीतनिश्चयो नापगत, एवम् अविद्याध्यासत सर्वम् अविद्यया अध्यस्तमपि आत्मन एवेदम् इति सर्वत्र मतिर्भवति । ज्ञाते त्वात्मनि – यथा इन्द्रस्य प्राग्भाविता सशरीरत्वबुद्धि र्ज्ञानात्परमपगता, अमृतस्याशरीरस्यात्मनोऽधिष्ठानमात्र शरीरम् असदेवेति च निश्चयोऽभूत् तथा – सर्वमिदम् असद् भवेद् इत्यथ ॥ २७ ॥

तस्मादिति ॥ उक्तन्याय सर्वेष्वपि अध्यारोपितविशेषणेष्वतिदिशति – तस्मात् सर्वं विशेषण छित्त्वा त्यक्तेन हस्तेन तुल्यम्, नैवात्मधर्म इत्यर्थ । तस्मात् ज्ञ आत्मा सर्वविशेषणैर्मुक्त इति सिद्धम् इत्यर्थ ॥ २८ ॥

ज्ञातैवात्मा इति ॥ उपदेशसाहस्रीत उद्धृतोऽय (उप ६–५) श्लोक स्पष्टार्थ । ज्ञेयम् अनात्मत्वेनोत्सृज्य, केवल शुद्ध आत्मा ज्ञातेत्येव माह्य । 'अविज्ञातो विज्ञाता' (बृ ३–७–२३) इति श्रुते । एतेन दृष्ट्रन्वयदृश्यव्यतिरेकवत् साक्ष्यन्वयसाक्ष्यव्यतिरेकावपि सिध्यत इत्याह –

'अहमित्यपि यत् ग्राह्यम्' अहमित्यत्रापि ग्राह्यांशः त्यक्तहन्त्वदेवानात्मा इति सिद्धमित्यर्थः ॥ २९ ॥

अत्रैव नान्यदन्यत्प्रकरणस्थं श्लोकम् (१५–१६) उदाहरति – दृश्यत्वादिति ॥ स्पष्टार्थः श्लोकः । अयमेव ह्यर्थ इहापि 'घटादयो यथा लिङ्गम्' (३–५६) इत्यत्र प्रदर्शित इत्याशयः ॥ ३० ॥

(मूलम्)

सर्वन्यायोपसंग्रहः –

नित्यमुक्तत्वविज्ञानं वाक्याद् भवति नान्यतः ।
वाक्यार्थस्यापि विज्ञानं पदार्थस्मृतिपूर्वकम् ॥ ३१ ॥

अन्वयव्यतिरेकाभ्यां पदार्थः स्मर्यते ध्रुवम् ।
एवं निर्दुःखमात्मानमक्रियं प्रतिपद्यते ॥ ३२ ॥

सदेवेत्यादिवाक्येभ्यः प्रमा स्फुटतरा भवेत् ।
दशमस्त्वमसीत्यस्माद् यथैवं प्रत्यगात्मनि ॥ ३३ ॥

(क्लेशापहारिणी)

किं बहुना ? प्रकरणार्थः सर्व एवैकत्र प्रदर्शितोऽस्ति पूज्यपादैरित्याह– सर्वन्यायोपसंग्रह इति ॥ अस्मिन्नर्थे श्लोकत्रिकं 'तत्त्वमसि'प्रकरणस्थम् उदाहरति – नित्यमुक्तत्वविज्ञानमित्यादि ॥ श्लोकाः (उप. १८–१९०, १९१, १९२) स्पष्टार्थाः ॥ ३१ ॥ ३२ ॥ ३३ ॥

(मूलम्)

वीप्सापन्नस्योदाहरणम् –

नवसंख्याहृतज्ञानो दशमं नैव पश्यति ।

नरस्तुदव्यपहाराद्धि स्वात्मानं दशपूरणम् ।
अपश्यन् ज्ञातुमेवेच्छेत् स्वमात्मानं जनस्तथा ॥ ३४ ॥

अविद्याबद्धचक्षुष्ट्वात् कामापहृतधीः सदा ।
विविक्तं दृशिमात्मानं नेक्षते दशमं यथा ॥ ३५ ॥

( क्लेशापहारिणी )

### वीक्षापन्नस्योपदेश इत्यत्र भगवत्पादसंमतिः

येय वाक्याद्द्वितीयात्मप्रतिपत्ति, सा स्वत सिद्धात्मवस्त्वज्ञान निरसनमात्रेण तत्त्वावबोधिनी दशमवाक्यार्थप्रतिपत्तिवत् । नातो वाक्य श्रवणानन्तरं कार्यान्तरे नियोगोऽत्र इति यदस्मिन् प्रकरणेऽभिहितम् तत्र भगवत्पादीय सम्मतिमुदाहरिष्यन् आत्मानात्मविभागानन्तर को न्वहमस्मीति वीक्षापन्नस्य श्रुत्युपदेशो भवतीत्यत्र तावत् तदुक्तिमुदाहरति वीक्षापन्नस्येति ॥ 'नवबुद्ध्यपहाराद्धि', 'अविद्याबद्धचक्षुष्ट्वात्' (उप १७४, १७५) इति श्लोकद्वय निगदव्याख्यातम् ॥ ३४ ॥ ३५ ॥

( मूलम् )

सोऽयमेवम् अविद्यापटलावगुण्ठितदृष्टिः सन् कथमुत्थाप्यत इत्याह –

यथा स्वापनिमित्तेन स्वप्नदृक् प्रतिबोधितः ।
करणं कर्म कर्तारं स्वाप्नं नैवेक्षते स्वतः ॥ ३६ ॥

अनात्मज्ञस्तथैवायं सम्यक् श्रुत्यावबोधितः ।
गुरुं शास्त्रं तथा मूढं स्वात्मनोऽन्यं न पश्यति ॥ ३७ ॥

( क्लेशापहारिणी )

### श्रुत्यैव निःशेषाविद्यानिवृत्तिः

अविद्याप्रतिबद्धज्ञानचक्षुष्ट्वात् कामेन विक्षिप्तचित्त सन् दशमवत् नित्यविविक्तमेवापि सन्त न विजानातीत्युक्तम् । अथेदानीं दशमवाक्ये न दशमज्ञान यथा नवभ्यो विविक्तत्वेन निश्चय, यथा चोपदेष्टृपदेश्योपदेशादि विभाग परमार्थ एव तत्र, न तथा प्रत्यगात्मज्ञाने, किं तु अन्यादृश एवेति विवरीतुकाम श्लोकान्तरमवतारयति – सोऽयमिति ॥ अविद्याकृतदृष्टित्वात् द्वैतमेव सत्यत्वेन पश्यन् सन् कथम् उत्थाप्यते केन प्रकारेण प्रतिबोध्यत

इतीति प्रश्नः । श्लोकद्वयेनोत्तरमाह—यथेत्यादिना ॥ स्वापनिमित्तेन 'यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति' (बृ. ४–३–२०) इत्याद्युपवर्णितप्रकारेण अविद्याकृतेन भयेन, हस्तिव्याघ्रचोरादिदर्शननिमित्तेन प्रतिबोधितः स्वप्नदृक् स्वाप्नं कर्तृकरणकर्मलक्षणं द्वैतं स्वात्मनो विविक्तं नैव वीक्षते, तथैवायम् अनात्मज्ञः, अनाद्यविद्यया सुप्तः श्रुत्या तत्त्वमस्यादिकया सम्यक् अज्ञानापबाधेन अवबोधितः स्वाप्नकर्त्रादिस्थानीयं गुर्वादिकं नैव स्वात्मनः कूटस्थाद्वितीयात् अन्यं ततः प्रविभक्तं पश्यति । तं प्रति शास्त्रशिष्यलक्षणो विकल्पो अत्यन्ताय निवर्तते इत्यभिप्रायः । तथा ह्यभियुक्तवचनम् – 'विकल्पो विनिवर्तेत कल्पितो यदि केनचित् । उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥' (गौ. का. १–१८) इति ॥ ३६ ॥ ३७ ॥

## ५. श्रुत्यैव निःशेषमविद्यानिवृत्तिरित्यत्र वृद्धसंमतिः

(मूलम्)

स किं सकलसंसारप्रविविक्तमात्मानं वाक्यात् प्रतिपद्यत उत नेतीति ? अत्र श्रूमः । कूटस्थावगतिमात्रशेषत्वं[1] प्रतिपत्तेः, अत आह –

दण्डावसाननिष्ठः स्याद्दण्डसर्पो यथा तथा ।
नित्यावगतिनिष्ठं स्याद्वाक्याज्जगदसंशयम् ॥ ३८ ॥

कुत एतत् ? यस्मात् –

पश्यन्निति यदा होबैः प्रत्यक्तत्त्वमजमद्वयम् ।
अपूर्वानपरानन्तं त्वमा तदुपलभ्यते ॥ ३९ ॥

तत्त्वमस्यादिवाक्योत्थविज्ञानेनैव बाध्यते । यस्मात् –

अस्माद्यदपरं रूपं नास्तीत्येव निरूप्यते ।
अन्यथाग्रहणाभावाद्बीजं तत्स्वप्नबोधयोः ॥ ४० ॥

1. शेषत्वात् इत्येव रूप पाठः साधीयान् ॥

अस्यार्थस्य द्रढिम्न उदाहरणम् –

कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिध्यतः ॥ ४१ ॥
अन्यथागृह्णतः स्वप्नो निद्रा तत्त्वमजानतः ।
विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥ ४२ ॥

तथा भगवत्पादीयमुदाहरणम् –

सुषुप्ताख्यं तमोऽज्ञानं बीजं स्वप्नप्रबोधयोः ।
आत्मबोधप्रदग्धं स्याद्बीजं दग्धं यथाभवम् ॥ ४३ ॥
एवं गौडैर्द्राविडैर्नः पूज्यैरयमर्थः प्रभाषितः ।
अज्ञानमात्रोपाधिः सन्नहमादिदृगीश्वरः ॥ ४४ ॥

( क्लेशापहारिणी )

**समस्तस्यैवापि प्रपञ्चस्य आत्मस्वरूपत्वं ज्ञानिनः**

*न केवलं गुर्वादिविकल्प, किं त्वखिलमेव जगत् तत्त्वमस्यादिवाक्य-* ज्ञानात्परम् आत्मैवास्य भवति – इति प्रतिपादयितुम् आक्षेपमुद्भावयति – **स किमिति** ॥ यदि वाक्यात् सकलसंसारविविक्तमात्मानं प्रतिपद्यते, तर्हि सद्वितीयत्वं तस्य, अथ न प्रतिपद्यते, तर्हि वैयर्थ्यमेव वाक्योपदेशस्य – इत्युभयथापि दोष एवेत्याक्षेप्तुरभिप्रायः । परिहारमाह – **अत्र ब्रूमः इति** । कूटस्थावगतिमात्रत्वात् प्रतिपत्तेरिति । नात्मन संसारप्रविविक्तत्वं प्रतिपद्यते, नाप्यप्रतिपत्तिः ; किं तर्हि, अद्वितीयकूटस्थावगतिरूपत्वमेव प्रतिपत्तेः इत्यभिप्रायः । तथा च ज्ञातृज्ञेयज्ञानविभागशून्यं नित्यनिवृत्तप्रपञ्चमात्मानं प्रतिपादयतो वाक्यस्याप्रामाण्यं न शङ्क्यशङ्कम् इत्यभिप्रायः । अत्रार्थे श्लोक-मवतारयति – **अत आहेति** ॥

**दण्डायमानानिष्ठ इति** ॥ यथा दण्डज्ञानात् दण्डसर्पो दण्डावसान-निष्ठः स्यात् – दण्डरूपेणैव पर्यवस्य तिष्ठति न तु विकल्पितस्वरूपेण, एवं

जगत्सर्वम् आत्मनि विकल्पितम् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि' इत्यादिवाक्यज्ञानात् अवश्यं नित्यावगतिनिष्ठं स्यात् कूटस्थावगतिमात्रस्वरूपात्मरूपेणैवावतिष्ठते, न तस्य तस्मात् प्रविविक्तत्वं प्रणाशो वा इत्यर्थः। तथा चोक्तमभियुक्तैः— 'प्रपञ्चो यदि विद्येत निवर्तेत न संशयः। मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥' (गौ. का. १-१७) इति। भगवत्पादैरप्युक्तम् अविद्यामात्रमेव संसारो नित्य कूटस्थावगतिरूपात्मनैवात्मवानिति 'रज्जुसर्पो यथा रज्ज्वा सात्मकः प्राग्विवेकतः। अवस्तु सन्नपि ह्येष कूटस्थेनात्मना तथा ॥' (उप. १८-४६) इत्यत्र ॥

वाक्यात् जगत् सर्वमेव नित्यावगतिनिष्ठं स्यात् न पृथगवतिष्ठते इति कुत एतत्?-इति प्रश्नपूर्वकं वाक्यस्थत्वंपदार्थस्वरूपं विशदयति-यस्मादिति ॥ 'उपलभ्यते' इति श्लोकस्थेनास्य सबन्धः ॥

पश्यन्निति ॥ 'यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्। न तु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् पश्येत्' (बृ. ४-३-२३) इति यत् प्रत्यक्त्वं सर्वान्तरम् अजं सर्वविकाररहितम् अद्वयम् स्वतो विभक्तद्वैतरहितम् यच्च प्राह श्रुतिः, 'अपूर्वं कारणरहितम् अनपरं कार्यरहितम् अनन्तरं देशकालादिपरिच्छेदरहितं च' (बृ. २-५-१९) तदेव वस्तु त्वमा तत्त्वमसिवाक्ये उपलभ्यते। अतस्तादृशे कूटस्थाद्वितीयतत्त्वमात्र एव जगत् पर्यवस्यति वाक्यार्थज्ञानेन इत्यवगम्यत इत्यभिप्रायः ॥ २९ ॥

ननु च यथोदाहृतश्रुत्या सुषुप्ते स्वत एव तादृशं वस्तु सिद्धमित्युच्यते चेत् किं तत्त्वमस्यादिवाक्यस्य कृत्यमवगम्यते? तत्राह — तत्त्वमस्यादिवाक्योत्थविज्ञानेनैव बाध्यते इति। अविद्याकल्पितं द्वैतम् इति शेषः। किं कारणं पुनः सुषुप्तस्वरूपप्रतिपादकश्रुतिज्ञानेनैव तत् बाध्यत इति? तत्राह — यस्मात् इति ॥ 'नान्यैरेव निरूप्यते' इत्यनेन श्लोकस्थेनास्य संबन्धः ॥

अस्मादिति ॥ अस्माद् अवगतिरूपात् यदपरं रूपं प्रमात्रादिद्वैतयुक्तं तन्नास्तीत्येव न तत् सुषुप्तेऽस्ति इत्येतावन्मात्रं निरूप्यते श्रुत्या । तत्र तदभावे कारणमाह – अन्यथाग्रहणाभावादिति । 'न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्' इति हि श्रुतिः । ग्रहणाभावश्चाग्रहणं नाम । तदत्र सुषुप्तौ 'न पश्यति' इति यदुरीकृतम्, तदेव स्वप्नप्रबोधयोरन्यथाग्रहणलक्षणयोर्बीजम् । एवं च सुषुप्तपरीक्षामात्रेण नात्मनोऽज्ञानातिरिक्तत्वसिद्धिः, न हि तत्राग्रहणस्याप्यपबाधकं ज्ञानं समस्ति येन तावन्मात्रेण कृतार्थता भवेत् जिज्ञासोः – इति भावः ॥ ४० ॥

अथ केवलात् सुषुप्तनिरूपणात्, न निष्प्रपञ्चावगमः, किं तर्हि वाक्यादेव । सुषुप्तावस्थायामप्यनर्थबीजस्य अग्रहणस्य सत्त्वात् – इति यत्तत्प्रकरणे ( ३–५८ ) उक्तम्, तत्राप्यभियुक्तसम्मतिमुदाहरिष्यामीति श्लोकद्वयमवतारयति – कार्यकारणबद्धौ तावित्यादिना ॥

तत्र 'कार्यकारणबद्धौ' (गौ. का १–११) इत्यस्य गौडपादीयश्लोकस्य तावदयमर्थः – कार्यम् अन्यथाग्रहणम् । कारणम् अग्रहणम् । ताभ्यां कार्यकारणाभ्यां तौ यथावर्णितौ विश्वतैजसौ बद्धौ, प्राज्ञस्तु कारणबद्धः अग्रहणमात्रेण बद्धः, न तु कार्यबद्धः विश्वतैजसाविव । तत्त्वाप्रतिबोधमात्रमेव हि प्राज्ञत्वे निमित्तमिति । तावेतौ कार्यकारणबन्धौ कार्ये अवस्थात्रयसंपर्करहिते, तुर्ये चतुर्थे निर्विकल्पे परमार्थात्मनि न संभवत इत्यर्थः । यथा त्वत्र प्राज्ञशब्दवाच्यस्यापि सुषुप्तात्मनोऽज्ञत्वं सर्वज्ञत्वं च दृष्टिभेदेन, तथा माण्डूक्यरहस्यविवृतौ वर्णितं तत्रत एवाधिगन्तव्यम् । न तत् प्रकृतोपयोगीत्यतो नेह प्रपञ्च्यते । प्रकृतं तु सुषुप्तात्मा कारणाज्ञानबद्ध इतीति स्मर्तव्यम् ॥

य एवायमात्मा उभयविधबन्धयुत इव भाति संसारावस्थायाम्, स एव तु परमार्थतत्त्वबोधे सति नित्यासंसारी तुरीय इति निर्धार्यते इति बोधयन्तीं कारिकाम् (१–१५) उदाहरति – अन्यथागृह्णतः इति । स्वप्नजागरितयोः परमार्थात्मानमन्यथागृह्णन् रज्जुमिव सर्पत्वेन वैपरीत्येन

सप्रपञ्चात्मत्वेन विभावयत स्वप्नो भवति । यद्यपि तयोरवस्थयो कारणाज्ञान मप्यस्ति निद्राख्यम्, तथापि गुणभूत तदिति अन्यथाग्रहणरूप स्वप्न एव तत्र विपर्यास इत्युक्तम् । सुषुप्तौ पुन तत्त्वाग्रहणरूपा निद्रैव केवला विपर्यास । तयो स्थानयोर्विपर्यासे यथोक्तलक्षणे क्षीणे वाक्यात् तत्त्व-प्रतिबोधनो बाधिते सति तुरीय पदमश्नुते, तदा तत्र कार्यकारणरूप बन्ध मपश्यन् स्वात्मनि निश्चितो भवतीत्यर्थ ॥

'विपर्यासे क्षीणे' इत्युक्त्या सुषुप्तौ कारणाज्ञानसत्त्वम्, स्वप्न जागरितयो कार्याज्ञानसत्त्व च विपर्यासमात्रेणेति वाक्यार्थज्ञाने सति तदप बाधनेन तुरीयनिश्चयोपपत्तिरिति ध्येयम् ॥ १२ ॥

यथा गौडपादाचार्याणाम्, एव भगवत्पादानामपि सम्मतिरस्ति सुषुप्ते वाक्यज्ञानापनोद्याग्रहणमस्ते इति दर्शयन् उपदेशसाहस्रीस्थ श्लोकम् (१७-२६) उदाहर्तुमुपक्रमते – तथेति ॥

सुषुप्ताख्यमिति ॥ 'तम', 'अज्ञानम्' इति च पर्यायौ । तमसैव हि आत्मस्वरूपविवेकाभावलक्षणेन निमित्तभूतेनाज्ञानेन विविधमात्मान विकल्पयन् संसरति लोक इति । तस्यैवाज्ञानस्य सुषुप्तम् इत्याख्या, 'निद्रा तत्त्वमजानत' इति कारिकाप्रामाण्यात् । तदेतदज्ञानं स्वप्नप्रबोधयोर्बीजम् । सत्त्वमेव हि तयोरवस्थयोरुभयोरपि अन्यथाग्रहण स्वात्मन इति । अत एव वेदान्तसम्प्रदायविद: स्थानयोरुभयोरपि वस्तुत स्वप्नत्वमेवेत्यास्थितवन्त 'स्वप्नजागरिते स्थाने ह्येकमाहुर्मनीषिण । भेदाना हि समत्वेन प्रसिद्धेनैव हेतुना' (गौ का २-५) इति । तदेवमन्यथाग्रहणबीजभूताया निद्राया संसारहेतुभूताया कदा नु निवृत्ति ' – इत्याकाङ्क्षायामाह – आत्मबोध-प्रदग्धं सत् तत् सुषुप्ताख्य बीजम् आत्मबोधप्रदग्ध वेदान्तवाक्यजनितात्मै कत्वज्ञानेन बाधित सत् अभव स्यात्, न पुन प्रादुर्भवेत्, अन्यथाग्रहणे निमित्त न भवेदित्यर्थ । तत्र दृष्टान्त 'बीजं दग्धं यथाभवम्' इति । स्मर्यते हि 'बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुन । ज्ञानदग्धैस्तथाक्लेशैर्नात्मा संपद्यते पुन' (मो ध ११-१७) इति ॥

अत्र केचित्–'तमः' इति विशेषणेन अज्ञानस्य भावरूपत्वमुच्यते ; तस्य च बीजत्वं स्वप्नप्रबोधयोरुपादानत्वम्–इति प्रक्रियान्तरमभ्यूहन्ति । तदयुक्तम् ; अत्रैव समनन्तरपूर्वश्लोके भगवत्पादैः सुषुप्तस्य स्वप्नाभावलक्षणत्वेनोद्घोषणात् 'दृष्टं जागरितं विद्यात् स्मृतं स्वप्नं तदेव तु । सुषुप्तं तदभावं च स्वमात्मानं परं पदम्' (उप. १७–२५) इति । उपनिषद्यपि तथैव लक्षितत्वात् सुषुप्तस्य 'यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्' (मां. ५) इति । सूत्रकारेण च 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' (ब्र. सू. ३–२–७) इति स्वप्नाभावत्वेनैव निर्देशात् । यदि हि भावलक्षणा काचिदविद्या सुषुप्ते स्थिता इति मतं स्यात् श्रुतेः, सूत्रकारस्य, भाष्यकारस्य वा, तर्हि किमिति स्वप्नाभावत्वेनैव सर्वत्र सुषुप्तिलक्षणं प्रणीयत इति प्रष्टव्यास्ते भावाविद्यापक्षपातिनो वावदूकाः । कारिकायामपि 'द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः' (गौ. का. १–१३) इति ग्रहणाभावस्यैव प्राज्ञोपाधित्वेन कथनात् ; कारिकाभाष्येऽपि 'तत्त्वाग्रहणान्यथाग्रहणाभ्यां बीजफलभावाभ्याम्, तत्त्वाप्रतिबोधमात्रमेव हि बीजं प्राज्ञत्वे निमित्तम्' (गौ. का. भा. १-११) इति चाग्रहणत्वेनैव वर्णनाच्च । अभावलक्षणस्याप्यज्ञानस्यानर्थविनिपातहेतुत्वेन तमःशब्दवाच्यत्वमुचितमेव । 'सर्पान् कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्जयन्ति । अज्ञानतस्तत्र पतन्ति केचिज्ज्ञाने फलं पश्य यथा विशिष्टम् ॥' (शान्ति. २०१–१६) इत्यादिस्मृतिप्रामाण्यात् । बीजशब्दस्तु कारणवाचीति सुप्रसिद्धम् । तस्मात् कारिकाभ्युपदेशसाहस्र्यामपि द्वैतोपादानलक्षणभावाविद्यावादो नाकाङ्क्षितस्य सुधीभिरित्यलमतिप्रपञ्चेन ॥ ४३ ॥

सौषुप्ताज्ञानविषयकसम्प्रत्युदाहरणमुपसंहरति – एवमिति ॥ एवं गौडैर्गौडपादाचार्यैर्द्राविडैश्च भगवत्पादाचार्यैश्च माण्डूक्यकारिकासु, उपदेशसाहस्र्यां च नः पूज्यैरयमर्थः प्रकाशितः । कोऽयमर्थ इति ? आह – अज्ञानमात्रोपाधिः सन् ईश्वरः सर्वभासी परमात्मा अहमादिदृश्यभवति ; निरस्ताज्ञानस्तु प्रपञ्चोपशमः शान्तः शिवोऽद्वैत एवावतिष्ठत इत्येषोऽर्थ इति ॥ ४४ ॥

## ६. उभयविधाज्ञानमप्यनात्मधर्म एव

( मूलम् )

तत्रान्यथाग्रहणवत् अन्यथाग्रहणबीजमग्रहणम् अनात्मधर्म एवेत्याह –

इदं ज्ञानमहं ज्ञाता ज्ञेयमेतदिति त्रयम् ।
योऽविकारो विजानाति परागेवास्य तत्तमः ॥ ४५ ॥

यत एतदेवम्, अतस्तस्यैव बीजात्मनस्तमसः, चित्तधर्मविशिष्टस्य स्वकार्योद्वितीयाभिसंबन्धो, न ह्यविकारिण आत्मन इत्याह दृष्टान्तेन –

रूपप्रकाशयोर्यद्वत् सङ्गतिर्विक्रियावतः ।
सुखदुःखादिसंबन्धश्चित्तस्यैवं विकारिणः ॥ ४६ ॥

तदेतदन्वयव्यतिरेकाभ्याम् दर्शयिष्यन्नाह –

मन्प्रमादेऽविकारित्वादस्तं याते विकारिणि ।
पश्यतो नात्मनः किञ्चिद् द्वितीयं स्पृशतेऽण्वपि ॥ ४७ ॥

( क्लेशापहारिणी )

तदेवमवस्थात्रितयेऽप्यज्ञानम् अग्रहणान्यथाग्रहणान्यतररूपं समस्तीति कृतान्वयव्यतिरेकस्य वाक्यादेवाज्ञाननाश. – इत्ययं प्रकरणार्थोऽभिमतवचनोदाहरणेन समर्थित. । अथेदानीं येयमभ्युपगमिता अज्ञानानुवृत्ति· सर्वत्र, सेयमनात्मन एव अज्ञानदृष्ट्या, प्रत्यगात्मदृष्ट्या तु न कस्यचिदपि ; अत एवास्य वाक्यान्निवृत्तिरुपपद्यते इत्येतत् प्रदर्शयिष्यन्नाह– तत्रेति ॥ अग्रहणमपि अनात्मधर्म एव, अज्ञानोपाधिकप्रमातृधर्म एव । अथवा अन्त.करणधर्म एव, अन्त·करणोपाधिनिमित्तमेव हि प्रमातृत्वमात्मन , तद्द्वारेण च प्रमातृधर्मत्वव्यवहारश्चाज्ञानस्येति । न तु प्रत्यगात्मन इत्यर्थः । 'इत्येतदाहोत्तर. श्लोक ' इति शेष ॥

इदं ज्ञानमिति ॥ ज्ञातृज्ञेयज्ञानविभागं य स्वयम् अविकारो विजानाति स्वचैतन्यप्रकाशेनावभासयतीत्यर्थ । अस्य प्रत्यगात्मनः तत् यस्मास्तित्वमेतावत्पर्यन्तमुपपादितं तम. अज्ञान परागेव बहिरेव न तद्धर्मः – इत्यर्थ. । अयमाशय – ज्ञातृज्ञानज्ञेयक्षेत्रे एवाज्ञानस्यावकाश इत्यतो न तत्साक्षिणस्तत्सम्भवतीति ॥

अत्र केचित् श्लोकाभिप्राय शङ्कान्तरसमाधानत्वेन वर्णयन्ति । कथम् ? 'तम आसीत्', 'आसीदिदं तमोभूतम्' इति श्रुतिस्मृतिप्रसिद्धस्य जगद्बीजस्याज्ञानस्य परमेश्वरशक्तितया तदभेदात् कथ तस्य ज्ञाननिवर्त्यत्व मिति ? – इति शङ्का । तम शब्दवाच्यमज्ञानम् आत्मन स्वरूपं धर्मो वा न भवति, जडत्वात्, दृश्यत्वाच्च । आत्मशक्तित्वव्यपदेशस्तु अस्य सत्ता प्रतीत्योस्तत्परतन्त्रत्वादेव – इति समाधानम् । सैषा प्रस्तुतमनादृत्याप्रस्तुत-प्रक्रिया । न ह्यज्ञानस्य जगद्बीजत्व प्रतिपाद्यत्वेन प्रस्तुतम्, ज्ञानादित्रय-साक्षीभूतपरमेश्वरस्य शक्तित्वं वा अज्ञानस्य, येनेदं व्याख्यानं संस्यात् । इद तु प्रस्तुतम् यत् सुषुप्तिनिरूपणमात्रेणाप्यज्ञानस्य न निवृत्तिरस्तीत्यतो वाक्यज्ञान तत्रापेक्षितव्यमिति । कथ तर्हि वाक्यज्ञानाद्वा तन्निवृत्ति ? – इत्याकाङ्क्षाया प्रत्यगात्मदृष्ट्या न कुत्राप्यज्ञानं समस्ति, चित्तधर्मयुक्तप्रमातृदृष्ट्यैव तु तदात्म-नीति विभाव्यते । अतो वाक्यं ज्ञानादिक पराग्भूत साक्ष्यत्वेन बहिर्भूत ज्ञापयत्, प्रमात्राश्रितमप्यज्ञानम् अतद्धर्मत्वेन ज्ञापयतीति परिहार उच्यते । एवमेवेह ग्रन्थव्याख्यानं सङ्गतमिति पूर्वापरवाक्यसमालोचनेनावगम्यते । उक्त चैवं बृहद्वार्तिकेऽपि – 'नैवाज्ञानं मृषाज्ञान संशयज्ञानमीक्ष्यते । प्रत्यक्प्रवणया दृष्ट्या जाग्रत्स्वप्नसुषुप्तिषु ॥' (बृ वा. १-४-२९९), इति । यद्यप्येव वास्तवेन वृत्तेनाज्ञान सर्वथापि नास्त्येवात्मनि, तथापि 'नाह वेद्मि' इत्यनुभवादविद्या दृष्टेति न तदस्तित्व वारयितुं शक्यते । न चात्मवृत्तमात्रमज्ञाननाशकम्, किं तर्हि वाक्यप्रमाणारूढमेवेति वाक्य मेष्टव्यं भवति । तदप्युक्तं तत्रैव – 'तस्माच्च वास्तव वृत्त तद् ध्वान्तापनोद-कृत् । तस्मिन् सत्येव मोहादिव्युत्पत्ते प्रागभूयत ॥ प्रमाणारूढमेवैतद्ध्वान्त-

निःशेषतः । ब्रह्मविद्भिरतो यत्नात् प्रामाण्यमिह सन्निनम् ॥' (बृ. वा. १-४-३१४, ३१५) इति । यत्तु, अज्ञानस्य परमेश्वरशक्तित्वमिति तदभेदात् कथं तस्य ज्ञाननिवर्त्यत्वमिति, न तच्चोद्यमत्रावतरति । अज्ञान कल्पितस्य मायाशब्दवाच्यस्यापि गौण्या वृत्त्या अज्ञानशब्दवाच्यत्वाभ्युप गमात् वार्तिकप्रस्थाने 'अनात्मेतीह यद्भाति तदविद्याविजृम्भितम् । तस्मा दविद्या साप्युक्ता विद्या त्वात्मैकरूपिणी ॥' (तै. वा. २-१७७) इति । 'नामरूपादिना येयमविद्या प्रथतेऽसती । माया तस्या पर सौक्ष्म्यं मृत्यु नैवेति भण्यते ॥' (बृ. वा. १-२-१३५) इति । सूत्रभाष्ये तु स्पष्टमेव लिखितमस्ति 'मुक्तानां च न पुनरुत्पत्तिः । कुतः ? विद्यया तस्या बीजशक्ते र्दाहात् ।', 'अविद्यात्मिका हि बीजशक्तिः अव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुप्तिः, यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः' (सू. भा. १-४-३), 'अव्यक्ता हि सा माया' (सू. भा. १-४-३) इति च मायाया अविद्याकल्पितत्वम्, 'अविद्या अव्यक्तम्' (सू. १-४-३) इति चाविद्याया तत्कल्पकत्वं च विभज्य दर्शयद्भिर्भगवत्पादै । प्रकृते तु बीजशक्तिविचारो नास्त्येवेति तदानयनमिह सर्वथा अप्रस्तुतम् । अतो यथाव्याख्यात एव श्लोक सङ्गत इति ध्येयम् ॥ ४५ ॥

ननु सुखदु खादिवत् सर्वोऽपि द्वैतसंबन्ध आत्मन एवेति युक्तम् । तत्राह – यत एतदेवम् इति ॥ बीजात्मनस्तमस एव चिद्धर्मविशिष्टस्य स्वकार्याद्वितीयाभिसंबन्ध । अज्ञातात्मन एव चिदाद्यनात्मरूपेणावभास इत्यर्थ । अत तस्यैव च चित्तस्य सुखदु खादिसंबन्ध इत्यभिप्रायक श्लोक मवतारयति – इत्याह दृष्टान्तेनेति ॥

रूपप्रकाशयोरिति ॥ रूपप्रकाशौ विषयभूतौ यथा यद्वत् निष्क्रियावता चक्षुषैव संबद्धौ, न त्वविकारिणा आत्मना, एवं सुखदु खादयोऽपि विकारिणश्चित्तस्यैव भवितुमर्हन्ति । नाविकारिण आत्मन – इत्यर्थ । 'काम सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव' (बृ. १ ५ ३) इति श्रुते सुखदु खाद्युपलक्षणार्थत्वात् इति भाव ॥ ४६ ॥

उत्तरश्लोकस्यानेन सम्बन्धमाह – तदेतदिति ॥ जागरिते विकारिणि सति सुखदुःखसम्बन्धो दृष्ट इत्यन्वय उक्त, अथाधुना असति तस्मिन् न सुखदुःखादिसम्बन्ध इति व्यतिरेकं वक्तुमारम्भ इत्यभिप्राय ॥

संप्रमादे इति ॥ सुषुप्तौ विकारिणि चित्ते अस्त याते, अदर्शन गते अवशिष्टस्य आत्मन अविकारित्वात् पश्यतोऽपि साक्षिणि स्थितेऽपि पश्यन्त मप्यात्मान न किञ्चित् स्पृशते स्पृशतीति षष्ठीं द्वितीयार्थत्वेन स्वीकृत्य– स्पृशते इत्यस्य आत्मन आत्मसंबन्धि किञ्चिदपि न स्पृशति तस्य तदानी मद्वितीयत्वात् तत्सबन्धिनोऽभावादेवेति योजनेन वा – अर्थो वर्णनीय । नास्त्येव तस्य द्वितीयसंबन्ध इत्यभिप्राय । स्पृशते इत्यपाणिनीय प्रयोग कथञ्चित् समाधेय । अत्र 'इदज्ञान मवेज्ज्ञातुर्ममज्ञान तथाहम' (३–६०) इत्यनेन समानार्थक पूर्व श्लोक, अय तु विक्रियाज्ञानशून्यत्वात् (३–६२) इत्यनेन तुल्यार्थक इत्यनुसधेयम् ॥ ४७ ॥

## ७. आत्मनः नित्याद्वैतत्वम्

(मूलम्)

सोऽय कूटस्थज्ञानमूर्तिरात्मा –

यथा प्राज्ञे तथैवायं स्वप्नजागरितान्तयोः ।
पश्यन्नप्यविकारित्वाद् द्वितीय नैव पश्यति ॥ ४८ ॥

(क्लेशापहारिणी)

यथा प्राज्ञे इति ॥ वस्तुतोऽय यथा प्राज्ञे प्राज्ञावस्थाया सुषुप्तौ तथैव स्वप्नजागरितयो ज्ञानाज्ञानादिविकारसम्बन्धरहित एवेति अविकारित्वात् प्रमातुरिव विकाराभावेन नित्यकूटस्थचैतन्यस्वरूपत्वात् पश्यन्नपि द्वितीय नैव पश्यति । अहङ्काररूपोपाधिसपर्कादेव तु तयोरवस्थयोर्द्वैतदर्शीति भ्रान्त्या विभाव्यते लोके, वस्तुवृत्तेन तु सर्वसाक्षित्वात् अज्ञानसंस्पर्शाभावाच्च अद्वितीयचैतन्यस्वरूप एवावतिष्ठते इत्यभिप्राय ॥ ४८ ॥

## ८. ज्ञानफलम्

(मूलम्)

एवं ज्ञानवतो नास्ति ममाहंमतिसंश्रयः ।
भास्वत्प्रदीपहस्तस्य ह्यन्धकार इवाग्रतः　　॥ ४९ ॥

तत्र दृष्टान्तः —

आ प्रबोधाद्यथाऽसिद्धिर्द्वैतादन्यस्य वस्तुनः ।
बोधादेवमसिद्धत्वं बुद्ध्यादेः प्रत्यगात्मनः　　॥ ५० ॥

स एव विद्वान् हानोपादानशून्यम् आत्मानम् आत्मनि पश्यन् —

सर्वमेवानुजानाति सर्वमेव निषेधति ।
भेदात्मलाभोऽनुज्ञा स्यान्निषेधोऽद्वत्वभावतः　　॥ ५१ ॥

(क्लेशापहारिणी)

एवं कूटस्थाद्वयचैतन्यरूपमात्मानं स्वात्मत्वेन विजानतः किं फल मित्याह — अहङ्कारान्धशून्यत्वात् एवंविदुषो नास्ति अहंममेति नैसर्गिकव्यवहार-संस्पर्शः । तत्र दृष्टान्तः — भास्वत्प्रदीपहस्तस्य पुरुषस्य अग्रतः यथा अन्धकारो न विद्यते, एवम् अज्ञानादिसर्वसाक्षिणोऽस्य नैवाज्ञानकृताहंममबुद्धिसंश्रय इत्यभिप्रायः ॥ ४९ ॥

ज्ञानाज्ञानावस्थयोरत्यन्तवैलक्षण्यादेवं युज्यत इति वक्तुं व्यतिरेक दृष्टान्त इत्याह — तत्रेति ॥

आ प्रबोधात् इति ॥ यावदात्मज्ञानोदयः तावत् 'ज्ञातृस्वरूप एवाहम्' इति नैसर्गिकबुद्धेरनुवृत्ते द्वैतवस्तुनः, ज्ञातृज्ञानज्ञेयलक्षणात् विभागात् अन्यस्य परमार्थवस्तुनः यथा असिद्धिः, अविद्यया एव प्रमाणबुद्ध्या स्वीकारात्; एवं बोधादूर्ध्वं बुद्ध्यादेः ज्ञानादिद्वैतस्य प्रत्यगात्मनः सकाशात् अन्यत्वे नासिद्धत्वम् अविद्यायाः सर्वथा विनष्टत्वात् इत्यभिप्रायः । तदेतदुक्तं बृहद्वार्तिके 'यमोच्छित्त्वात्ममोहस्य निहेतुरपि निवृत्तिः । एवं प्रागात्मसंबोधा-

दद्वयैकात्म्यनिह्नुति ॥ काकोलूकनिशेवाय ससारोऽज्ञात्मवेदिनो । या निशा सर्वभूतानामित्यवोचत् स्वय हरि ॥' (बृ वा. १-४-३१२, ३१३) इति ॥ ५० ॥

विदुषो नास्ति द्वैतमित्युक्त्या तस्याचार्यत्वमपि न सिद्ध्येदित्याशङ्क्य परिहारत्वेन श्लोकान्तरमवतारयन्नाह – स एष विद्वानिति ॥ हानोपादान-शून्यम् आत्मानम् अद्वितीयमेव पश्यन् परमार्थदृष्ट्या 'सर्वमेव निषेधति', व्यवहारदृष्ट्या 'सर्वमेवानुजानाति' इति श्लोकस्थेन संबन्ध करणीय ॥

सर्वमेवेति ॥ यथा लोके शुक्तितत्त्व विजानन्नपि 'शुक्तिका रजत वदवभासते' इति व्यवहर्तुं शक्नोति बाधितानुवृत्त्या, एवमयमपि सर्वमेव भेदस्य स्वरूपलाभम् अनुजानाति, स्वस्य तु दृष्ट्या नित्यनिर्भेदस्वभावत मद्व्यतिरिक्त न किञ्चिदप्यस्तीत्यपि व्यवहरतीत्यदोष इत्यभिप्राय ॥ ५१ ॥

## ९. प्रकरणार्थोपसंहारः

(मूलम्)

सर्वस्योक्तत्वात्, उपसंहारः –

परमार्थात्मनिष्ठं यत् सर्ववेदान्तनिश्चितम् ।
तमोऽपनुद्भिर्यां ज्ञानं तदेतत् कथितं मया ॥ ५२ ॥

एतावदिहोक्तम् –

नेहात्मविन्मदन्योऽस्ति न मत्तोऽज्ञोऽस्ति कश्चन ।
इत्यजानन् विजानाति यः स ब्रह्मविदुत्तमः ॥ ५३ ॥

(क्लेशापहारिणी)

अथेदानीं प्रकरणमुपसंहरति सर्वस्येति ॥ विवक्षितस्य ज्ञानस्य सपरिकरम् उक्तत्वात्, प्रकरणोपसहार क्रियते आगामिश्लोकेनेत्यर्थ ॥

परमार्थात्मनिष्ठमिति ॥ कल्पितात्मा, परमार्थात्मा चेति दृष्टिभेदेन द्वौ आत्मानौ । तदत्र कल्पितात्मनिषेधेन परमात्मनिष्ठम्, परमात्मन्येव पर्यवस्यत् यत् सर्ववेदान्तनिश्चितम्, सर्वैर्वेदान्तैः यन्निश्चितम्, तात्पर्येण बोधितम् आत्मैकत्वज्ञानम्, तदेतत् कथितं मया । तत्र कथं कल्पितात्मा निराकृतः, ज्ञानं वा कथं परमार्थात्मनिष्ठम् ? तत्राह — तमोपनुद् धियामिति ॥ व्यवहारदृष्ट्या अनेकजीवानां परिदृश्यमानत्वात्, बुद्धिवृत्तीनामानन्त्याद् वा बहुवचनम् । अन्तःकरणसंबन्धि यत् तमः, आत्माज्ञानम्, तन्निरसनद्वारा ज्ञानस्य परमार्थात्मैकनिष्ठत्वं भवेत् । तमोऽपनोदने हि सति अनेकजीवा वा, तदन्तःकरणविशेषा वा, तदाश्रितं तमो वा नावशिष्यते । परमार्थात्माभिन्नावगतिरूपेणैव तत्रैव प्रशाम्यति । यथा चैतत् तथा प्रतिपादितमस्मिन् प्रकरणे इत्यभिप्रायः । 'तमोऽपनुद् हि यज्ज्ञानम्' इति पाठे तु अज्ञानस्य अत्यन्तापनोदनसमर्थं यद् ज्ञानं तदेतत् कथितं मयेत्यर्थः ॥ ५२ ॥

प्रकरणार्थं संगृह्य दर्शयितुमुत्तरः श्लोक इत्याह — एतावदिहोक्तमिति ॥

नेहात्मविदिति ॥ मदन्यः आत्मवित्नास्तीह लोके । न च मत्तोऽन्योऽज्ञोऽस्ति । विद्याविद्याविभागस्य, विद्वदविद्वद्विभागस्य च मय्येव विकल्पितत्वात्, ज्ञातृज्ञानज्ञेयविभागस्यैव मय्यभावाच्च—इति भावः । ननु एवं ब्रह्म विदितं चेत्, तर्हि ज्ञातृज्ञानज्ञेयविभागाभिन्नं प्रसज्यते, न विदितं चेत् कथमिदं प्रतिज्ञायते ब्रह्म ज्ञातमिति ? तत्राऽऽह — 'इत्यजानन् विजानाति यः स ब्रह्मविदुत्तमः' इति । अयमाशयः । अद्वितीयानुभवः स्वयमेव प्रथते, न तु कर्तृकर्मविभागेन, ज्ञानव्यापारेण वा । व्यवहारदृष्ट्या तु यत् अद्वितीयस्वात्माभासयुक्ताया बुद्धिवृत्तेर्जन्म 'अनुभवात्मकोऽहम्' इति, तस्या मिथ्याभूतत्वात्र द्वैतावहत्वमिति । तदुक्तम् भगवत्पादैः 'दृशिरेवानुभूयेत स्वेनैवानुभवात्मना । तदाभासतया जन्म धियोऽप्यनुभवः स्मृतः ॥' (उप. १८-२०५) इति । गौडपादाचार्याश्चाहुः — 'अकल्पकमजं ज्ञानं ज्ञेयाभिन्नं प्रचक्षते । ब्रह्मज्ञेयमजं नित्यमजेनाजं विबुध्यते ॥' (गौ. का. ३-३३) इति । अतो न विरोधः ॥ ५३ ॥

# १०. आत्मज्ञानी न प्रवृत्तिनिष्ठः, नापि निवृत्तिनिष्ठः

(मूलम्)

एवमात्मानं ज्ञात्वा किं प्रवर्तितव्यम्, उत निवर्तितव्यम्, आहोस्वित् मुक्तप्रग्रहतेति ? उच्यते –

ज्ञेयाभिन्नमिदं यस्माज्ज्ञेयवस्त्वनुसार्यतः ।
न प्रवृत्तिं निवृत्तिं वा कटाक्षेणापि वीक्षते ॥ ५४ ॥

कुत एतज्ज्ञेयाभिन्नमिति ? यतः –

प्रागात्मबोधाद् बोधोऽयं बाह्यवस्तूपसर्जनः ।
प्रध्वस्ताखिलसंसार आत्मैकालम्बनः श्रुतेः ॥ ५५ ॥

एवम् अवगतपरमार्थतत्त्वस्य न शेषशेषिभावः ; तत्कारणस्य उत्सारितत्वात् इत्याह –

वास्तवेनैव वृत्तेन निरुणद्धि यतो भवम् ।
निवृत्तिमपि मृद्नाति सम्यग्बोधः प्रवृत्तिवत् ॥ ५६ ॥

सकृदात्मप्रवृत्त्यैव निरुणद्ध्यखिलं भवम् ।
ध्वान्तमात्रनिरासेन न ततोऽन्यान्यथामतिः ॥ ५७ ॥

देशकालाद्यसंबन्धादेशादेर्मोहकार्यतः ।
नानुत्पन्नमदग्धं वा ज्ञानमज्ञानमस्त्यतः ॥ ५८ ॥

सम्यग्ज्ञानशिखिप्लुष्टमोहतत्कार्यरूपिणः ।
सकृन्निवृत्तेर्यध्यस्य किं कार्यमवशिष्यते ॥ ५९ ॥

(क्लेशापहारिणी)

ज्ञानिनो न कार्यम्

अथ ज्ञानिनो व्यवहारं कथमिति निर्णेतुकामः प्रश्नमुत्थापयति – 'एवमात्मानं ज्ञात्वा' इति ॥ मुक्तप्रग्रहतेति । यथेष्टचेष्टा – इत्यर्थः । उत्तरत्वेन श्लोकमवतारयति – उच्यते इति ॥

ज्ञेयाभिन्नमिति ॥ ज्ञातुर्ज्ञानस्य ज्ञेयब्रह्माभिन्नत्वात् पूर्वोदितेन न्यायेन नित्यनिवृत्तकर्मणस्तस्य न प्रवृत्तिर्न वा निवृत्तिः, प्रागेव न यथेष्टचेष्टता इत्यर्थः ॥ ५४ ॥

ज्ञेयाभिन्नत्वाज्ज्ञानस्य, ज्ञेयस्य च नित्यनिवृत्तकर्मत्वात् न प्रवृत्तिनिवृत्ती संभवतो ज्ञानिन इत्युक्तम् । अथ ज्ञानस्य ज्ञेयाभिन्नत्वमेव कथमिति शङ्कामुत्थापयति–कुत एतदिति ॥ परिहारत्वेन श्लोकमवतारयति–यत इति ॥

प्रागात्मप्रबोधादिति ॥ आत्मप्रबोधात् प्राक् अयं बोधः बाह्यवस्तूपसर्जनः । इन्द्रियाणां स्वभावत एव बहिःप्रवृत्तेः, 'पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ्पश्यति नान्तरात्मन्' (का. २-१-१) इति श्रुतेः । तस्मादेव बाह्यवस्तूपसर्जनत्वहेतोः, रागद्वेषप्रेरितो जनः प्रवृत्तिनिवृत्तिवशगो भवतीति भावः । बोधादूर्ध्वं तु प्रध्वस्ताखिलसंसारत्वात्, निवृत्तनिखिलद्वैतत्वात् कुतः प्रवृत्तिं वा निवृत्तिं वा अवलम्बेत ? यतोऽयं आत्मैकालम्बनस्तदा । तथा च श्रुतिः 'यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति तदितर इतरं मनुते तदितर इतरं शृणोति' (बृ. २-४-१४) इति, 'यत्र वा अस्य सर्वमात्मैवाभूत् तत्केन कं जिघ्रेत् तत्केन कं पश्येत् तत्केन कं मन्वीत तत्केन कं शृणुयात्' (बृ. २-४-१४) इत्यादिश्च । अत आत्मैकालम्बनं ज्ञानमिति युक्तमुक्तं ज्ञेयाभिन्नमिदं ज्ञानमिति–इति भावः ॥ ५५ ॥

अत एवायं ज्ञानी न प्रवृत्त्यादिदोषो भवतीत्याह – एवमवगतपरमार्थतत्त्वस्येति ॥ एतदभिप्रायकं श्लोकमवतारयति – इत्याहेति ॥

यास्तवेनैव वृत्तेनेति ॥ सम्यग्बोधो वस्तुवृत्तमनुरुध्यैव जायते, आत्मवस्तुस्वभावश्चायं यन्नित्यनिरस्तकर्मापि कूटस्थचैतन्यरूपत्वम् । अतः प्रवृत्तिवन्निवृत्तिमपि मृद्नाति बाधते 'नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन' (गी. ३-१८) इति स्मृतेः– इत्यभिप्रायः ॥ ५६ ॥

नन्वनादिकालप्रवृत्ता निरूढनिबिडा अविद्या पुनरपि प्रवृत्तिमुत्पादयेत्, तत् कथं सा विद्यया आगन्तुकया निरुध्येतेत्याशङ्क्याह – सकृदात्मप्रसूत्यै-

वेति ॥ विद्याविद्ययोर्बाध्यबाधकभाव एव सम्बन्ध इति सकृदुत्पन्न एव सम्यग्बोधो प्रवृत्तिनिवृत्त्यात्मकम् अखिलमपि भव ससार ध्वान्तमात्रनिरासेन अज्ञानसामान्यापनयनेन निवर्तयेत्, यथा सकृदुत्पन्न एव सावित्र प्रकाशो निखिल शार्वर तमो निवारयेत् तथा । न हि बाध्यबाधकयोर्योगो भवति तयो शक्तिस्तु कुण्ठिता भवेत् इति युक्तम् – इति भाव । यथोक्त बृहद्वार्तिके 'बाध्यबाधकयोर्योग स्वशक्त्यनपहारत । योऽन्यथा सङ्गतिं ब्रूते चर्मवत् वेष्टयेत् स खम्' (बृ वा १–४–२५५) इति – इत्यभिप्राय । अथ अज्ञाननिवृत्तावपि तत्कार्यभूत मिथ्याज्ञानमनुवर्तेत, तत्राह – **न ततोऽन्याऽन्यथामतिः इति** । अज्ञानमिथ्याज्ञानयो कार्यकारणसबन्धेन नियमविनाभावात् अज्ञाननाशेऽपि मिथ्याज्ञानानुवृत्तिप्रत्याशा न कार्या इति भाव । तदुक्त बृहद्वार्तिके 'यदेव नित्यमज्ञान मिथ्याज्ञान तदेव तु । कारणेतररूपेण तयोरव्यभिचारत ॥ (बृ वा १ ४ ३८६) इति । इदमुपलक्षण संशयस्यापि । तदप्युक्त हि बृहद्वार्तिके 'अज्ञान संशयज्ञान मिथ्याज्ञानमिति त्रिकम् । अज्ञान कारण तत्र कार्यत्व परिशिष्टयो ॥ (बृ १ ४ १३६८) इति । यदप्याशङ्क्यते कैश्चित् अविद्याया अनादिकालप्रवृत्तत्वात् सैव विद्यामप्यागन्तुकीं बाधेत, अथवा निवृत्तायामप्यविद्याया तत्संस्कारोऽपबाधेत विद्यामिति, अतो ज्ञानाभ्यास एषितव्य कृत्स्नशोऽविद्यानिवृत्तय इति । तत्र पूर्वमेव परिहार उक्त – 'बाधितत्वादविद्याया विद्या सा नैव बाधते । तद्वासनानिमित्तत्व यान्ति विद्यास्मृतेर्ध्रुवम् ॥' (१–३८) इति । अत साधूक्तमिदम् 'सकृदात्मप्रसूत्यैव निरुणद्ध्यखिल भवम्' इति – इति ज्ञेयम् ॥ ५७ ॥

*अथैवमाशङ्क्येत केनचित् नाखिल भव निरोद्धुमुत्सहेत ज्ञानम्।* यत्कारणमनाद्यनन्तयोर्देशकालयो सम्भाव्यमानानामज्ञानाना नास्तीयत्ता । तद् यदि नाम ज्ञानमज्ञान बाधेत तथाप्यनादिकालकृताना कर्मणाम्, आगामि काले करिष्यमाणत्वेन सम्भाव्यमानाना च न युक्तो नाश कल्पयितुम् इदानीमुत्पन्नेन ज्ञानेनेति । तत्राह – **देशकालाद्यसंबन्धादिति** ॥ देशकाल निमित्तादीनामानन्त्येऽपि तेषा मोहकार्यत, अविद्ययैव प्रत्युपस्थापितत्वात्,

परमार्थात्मनश्च सर्वसाक्षिणो देशकालादिसम्बन्धासम्भवात्, अज्ञानस्य चाज्ञान प्रसिद्ध्यैव प्रसिद्धेः, अज्ञानं ज्ञानेनाबाध्यम्, ज्ञानं वा बाधकमनुपपन्नं न समस्ति। तदेवं नित्यमेव ज्ञानाज्ञानसम्पर्करहित आत्मा इत्यतो यथोक्तं चोद्यं नैवावतरत्यत्रेत्यभिप्रायः ॥ ५८ ॥

सम्यग्ज्ञानशिखिप्लुष्टेत्यादि ॥ तदेवं वाक्यश्रवणेन सम्यग्ज्ञाने संजाते अज्ञानस्य निरवशेषतया निवृत्तिः, नित्यनिवृत्ताज्ञानत्वेनैवात्मनोऽव गम्यमानत्वात् अज्ञानकार्यस्य च मिथ्याज्ञानादेः स्वप्रत्युपस्थापितसकलद्वैतस्य च बाधितत्वात्, वस्तुवृत्तेन निष्कर्मात्मत्वेनात्मानं विज्ञातवतः किं कार्य-मवशिष्यते ? न किमपीत्यर्थः। तथा हि भागवती स्मृतिः – 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥' (गी ३–१७) इति। अभियुक्तैरप्युक्तम् – 'गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादि बाधनात्। सद्ब्रह्मात्माऽहमित्येवं बोधे कार्यं कथं भवेत् ॥' इति ॥ ५९ ॥

## ११. व्यवहारदृष्ट्या निवृत्तिनिष्ठत्वं ज्ञानिनः

(मूलम्)

वास्तवेनैव वृत्तेन अविद्यायाः प्रध्वस्तत्वात् न किञ्चि-दवशिष्यत इत्युक्तः परिहारः। अथापरः साम्प्रदायिकः –

निवृत्तसर्पः सर्पोत्थं यथा कम्पं न मुञ्चति।
विध्वस्ताखिलमोहोऽपि मोहकार्यं तथात्मवित् ॥ ६० ॥

यतः प्रवृत्तिबीजमुच्छिन्नम्, तस्मात् –

तरोरुत्खातमूलस्य शोषेणैव यथा क्षयः।
तथा बुद्धात्मतत्त्वस्य निवृत्त्यैव तनुक्षयः ॥ ६१ ॥

अथालेपकपक्षनिरासार्थमाह –

बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि।
शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥ ६२

कस्मान्न भवति ? यस्मात् –

अधर्माज्जायतेऽज्ञानं यथेष्टाचरणं ततः ।
धर्मकार्ये कथं तत् स्याद्यत्र धर्मोऽपि नेष्यते ॥ ६३ ॥

प्रत्याचक्षाण आहातो यथेष्टाचरणं हरिः ।
यस्य सर्वे समारम्भाः प्रकाशं चेति सर्वदृक् ॥ ६४ ॥

( क्लेशापहारिणी )

नन्वेव ज्ञानिन सर्वथा प्रवृत्त्यभावे परानुग्रहार्थम् उपदेशेऽपि प्रवृत्तिर्न स्यात्, तथा च 'आचार्यवान् पुरुषो वेद' (छा ६-१४-२) इति श्रुतिरपरुध्येत, आचार्यस्यैव कस्यचिदप्यभावात् - इत्याशङ्क्य परिहार वक्तु वृत्तमनुद्रवति – वास्तवेनैव वृत्तेनेति ॥ वस्तुवृत्तेन न कस्यापि शरीरेन्द्रियसङ्घातसंयुक्तत्वमस्ति मिथ्याज्ञानकृत तदभिमान मुक्त्वा । तस्मात्, वास्तवेन वृत्तेन 'नित्यप्रध्वस्ताविद्योऽहम्' इति ज्ञानिदृष्ट्या न तस्य कार्यमवशिष्यत इत्युक्तम् । तथापि व्यवहारदृष्ट्या ज्ञानिनोऽपि बाधितमिथ्या ज्ञानानुवृत्तिर्विद्यत एव । यथोक्त सूत्रभाष्ये – 'बाधितमपि तु मिथ्याज्ञान द्विचन्द्रज्ञानवत् संस्कारवशात् कञ्चित् कालमनुवर्तत एव । अपि च नैवात्र विवदितव्य ब्रह्मविदा कञ्चित् काल शरीर ध्रियते न वा ध्रियत इति । कथ ह्येकस्य स्वहृदयप्रत्यय ब्रह्मवेदन देहधारण च अपरेण प्रतिक्षेप्तु शक्येत ?' (सू भा ४-१-१५) इति ॥

'तस्मात् मिथ्याप्रत्ययनिमित्तत्वात् सशरीरत्वस्य सिद्ध जीवतोऽपि विदुषोऽशरीरत्वम्' इति च भाष्यम् । श्रुतिश्च भवति– 'तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेद शरीर शेते । अथायमशरीरोऽमृत प्राणो ब्रह्मैव तेज एव' (बृ ४-४-७) इति । तदेव वास्तवेन वृत्तेनाशरीरस्यापि व्यवहारदृष्ट्या सशरीरत्वस्याप्युपपत्तिरिति संप्रदाय । तदेतं संप्रदायमनुसृ य यथोक्तशङ्काया परिहार उच्यते आगमिश्लोकेनेत्याह – अथापरः सांप्रदायिकः इति ॥

निवृत्तसर्प इति ॥ सर्पज्ञाने बाधितेऽपि निवृत्तसर्पभ्रान्ति पुरुषो यथा कम्पं न मुञ्चति, कंचित् कालम् कम्पोऽनुवर्तत एव, एवं विध्वस्ताखिल-मोहोऽपि आत्मवित् मोहकार्ये कर्तृत्वं न विमुञ्चति, बाधिताविद्योऽपि कर्मणि प्रवर्तत एवेत्यर्थ. ॥

अत्र यथा मोहो बाधितः, एवं मोहकार्यमपि बाधितमेवानुवर्तत इति न तेन विदुष. कश्चिदर्थोऽनर्थो वा शक्यशङ्क इत्यवधेयम् । तथा च यदाहात्र मण्डनः, " जातेऽपि तत्त्वदर्शने, अनाहिते च पटौ संस्कारे, द्रढीयसि च मिथ्यादर्शनजे संस्कारे निश्चया अपि मिथ्यार्था भवन्ति । यथा दिङ्मूढस्यानुसहितास्तवचस. प्रागिव प्रवृत्तिदर्शनात् ; तथा प्रमितरज्जुभावाया अपि रज्ज्वाः प्रमाणाननुसन्धाने सर्पभ्रान्त्या भयदर्शनम् । तस्मात्, जातेऽपि प्रमाणात् तत्त्वदर्शने, अनादिमिथ्यादर्शनाभ्यासपरिनिष्पन्नस्य द्रढीयस. संस्कारस्याभिभवाय, उच्छेदाय वा, तत्त्वदर्शनाभ्यासं मन्यन्ते । तथा च 'मन्तव्यो निदिध्यासितव्य.' इत्युच्यते " (ब्र. सि. १–३, पा. ३५) इति, तदनादेयम् । न हि अज्ञानं तत्कार्यं वा वस्तुतो विद्यमानमेव तत्त्वज्ञानेन निवर्त्यते, येन तत्संस्कारानुवृत्ति. शङ्क्येत । 'नानुत्पन्नमदर्भं वा ज्ञानमज्ञान-मस्यत.' (४–५८) इति हि स्थितिः । न च सम्यग्ज्ञानम् अभ्यासेन कश्चिदतिशयं लब्ध्वा अज्ञानं नाशयति, किं तु वस्तुस्वरूपबोधनेनैव । अतोऽत्र प्रसङ्ख्यानवादिमतनिरासेनैव मण्डनतदनुयायिमतमपि निरस्तमेव वेदितव्यम् । व्यवहारदृष्ट्यैव तु प्रारब्धकर्मशेषम् अङ्गीकृत्येहोच्यते 'मोहकार्यं न मुञ्चत्यात्मवित्' इति – इति सन्तोष्टव्यम् । एवं च कैश्चिदाहतः सद्योमुक्ति-जीवन्मुक्तिविवेकोऽपि नात्र करणीयः । ज्ञानसमकालमेव परमात्मन्यव-स्थानं हि सद्योमुक्तिर्नाम, न तु ज्ञानलाभे सद्य शरीरपात । जीवतोऽपि व्यवहारदृष्ट्या प्रारब्धवशात् कार्यकरणसङ्घातानुवृत्तौ, यत् आयु.शेषाति-वाहनम्, लोकसंग्रहार्थं प्रवृत्तिर्वा, सैव जीवन्मुक्तिरिति व्यपदिश्यत इत्यलमतिप्रपञ्चेन ॥ ६० ॥

अथैवमभ्युपगतं कर्म प्रवृत्तिरूपम्, निवृत्तिरूपं वा ? – इत्यत्र विनिगमकमाह – यतः प्रवृत्तिबीजमुच्छिन्नं तस्मात् इति ॥ प्रवृत्तिर्बीजम्

अविद्याकामादिकम्, तस्य सम्यग्ज्ञानेनोच्छिन्नत्वात् तस्य न प्रवृत्तिः संभवतीति भावः । श्लोकमवतारयति – तस्मादिति ॥

**तरोरुत्खातमूलस्येति** ॥ स्पष्टार्थः श्लोकः । अत्र प्रवृत्ताविव निवृत्तावपि कारणं न गवेषणीयम् निष्कर्मात्मस्वभावत्वादेव विदुषः । उक्तं हि गीताभाष्ये 'अथैवं सति फलार्थित्वात् अविद्यावान् प्रवर्तते । विदुषः पुनः अविक्रियात्मदर्शिनः फलार्थित्वाभावात् प्रवृत्त्यनुपपत्तौ कार्यकरणसङ्घातव्यापारोपरमे निवृत्तिरुपचर्यते' (गी भा १३–२, पा १९४) इति ॥ ६१ ॥

## अलेपकपक्षनिरासः

अथ यदाहुः केचिद् वावदूकाः, ज्ञानिनः सर्वथा कर्मलेपासम्भवात्, प्रतिषिद्धसेविनोऽपि तस्य न किञ्चिद् हीयत इति, तमिमम् अलेपकपक्षं निरसितुमुत्तरग्रन्थः । तदाह – अथेति ॥

**बुद्धाद्वैतसतत्त्वस्येति** ॥ अद्वैततत्त्वज्ञानिनोऽपि यदि स्वैराचरणम् तर्हि श्वविड्वराहादिजन्तुतुल्यमेव स्यात् तस्य जीवनम् । न तु तदिष्यते केनचिदपीत्यर्थः ॥ ६२ ॥

अथ यथेष्टाचरणमपि किं न स्याद्विदुषः इत्याशङ्क्य प्रत्याह श्लोकान्तरेण । तदाह – कस्मान्न भवति ? यस्मादिति ॥

**अधर्मादिति** ॥ अधर्माद् हि शास्त्रमप्युल्लङ्घ्य यथेष्टाचरणे प्रवृत्तिजनकमज्ञानं जायते समुद्भवति । ज्ञानं तु धर्मकार्यम् । धर्मेण हि पापमपनुदतीति तेन चित्तशुद्धिस्ततो ज्ञानम् – इति स्थितिः । 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते'[1] (मो ध २७०–३८) इति स्मृतेः । तत्त्वज्ञाने ज्ञाते 'नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति' (गी १८–४९) इत्युक्तदिशा धर्मोऽपि नेष्यते, सर्वधर्मान् परित्यज्यैव हि भगवच्छरणो ज्ञानमवाप्नोतीति । तस्मान्नात्र यथेष्टाचरणप्रसक्तिरित्यभिप्रायः ॥ ६३ ॥

---

1 शारीरकभाष्ये (३-४-२६) उदाहृतोऽयं श्लोकः । मुद्रितमहाभारतकोशे तु उत्तरार्धे किञ्चित् पाठान्तरमुपलभ्यते ॥

अत्र भगवत्सम्मतिमाह – प्रत्याचक्षाण इति ॥ 'यस्य सर्वे समारम्भा कामसङ्कल्पवर्जिता । ज्ञानाग्निदग्धकर्माणं तमाहु पण्डित बुधा ॥' (गी ४–१९) इति श्लोकेन लोकसंग्रहार्थं जीवनमात्रार्थं वा ज्ञानिन सर्वाणि कर्माणि भवेयु । कामसङ्कल्पवर्जितत्वादेव न तस्य यथेष्टचेष्टाप्रसङ्ग इत्याह । 'प्रकाश च प्रवृत्ति च मोहमेव च पाण्डव । न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥' (१४–२२) इत्यनेन च गुणत्रयव्यापारे न विदुषो रागद्वेषौ इत्याह । तथा च नेदृशस्य स्वैराचरण सभवति–इति भाव ॥ ६४ ॥

## १२. मुमुक्षोरपि न यथेष्टाचरणम्, किं पुनर्मुक्तस्य

(मूलम्)

तिष्ठतु तावत् सर्वप्रवृत्तिबीजघस्मरं ज्ञानम्, मुमुक्षुत्वावस्थायामपि न संभवति यथेष्टाचरणम् । तदाह –

यो हि यत्र विरक्तः स्यान्नासौ तस्मै प्रवर्तते ।
लोकत्रयविरक्तत्वान्मुमुक्षुः किमितीहते ॥ ६५ ॥

तत्र दृष्टान्तः –

क्षुधया पीड्यमानोऽपि न विषं ह्यत्तुमिच्छति ।
मिष्टान्नध्वस्ततृड् जानन्नामूढस्तज्जिघत्सति ॥ ६६ ॥

यतोऽनवगतपरमार्थतत्त्वस्य यथेष्टाचरणं न मनागपि घटते, मुमुक्षुत्वेऽपि च, तस्मात् –

रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु ।
कुतः शाड्वलता तस्य यस्याग्निः कोटरे तरोः ॥ ६७ ॥

(हेयापहारिणी)

यो हि मोक्तुमिच्छति, तस्यापि नास्ति सम्भवो यथेष्टाचरणस्य,

किमु वक्तव्य मुक्तस्य ज्ञानिन इत्याह भगवत्पादीयं श्लोकद्वयम् उदाहरन्–तिष्ठतु इति ॥ प्रथम श्लोकमवतारयति तदाहेति ॥ निगदव्याख्यातौ उपदेशसाहस्रीगतौ (१८–२३१, २३२) श्लोकौ ॥

उपसहरति – राग इति ॥ चित्तविहारक्षेत्रभूतेषु विषयेषु राग, अज्ञानस्य लिङ्गम् । दृष्टान्तेन ज्ञानिनो रागाभावे कारणमाह – कुत इति ॥ यस्य तरो कोटरे अग्नि, तस्य शाड्वलता कुत स्यात् ? एव ज्ञानाग्निना भस्मीक्रियमाण कर्म यस्मिन् ज्ञानिचित्ते तत्र अज्ञानकार्यभूतरागस्य कुतोऽवकाश स्यादिति भाव ॥ ६७ ॥

## १३. ज्ञानिनो निवृत्तिधर्मोऽपि स्वभावत एव

( मूलम् )

सकलपुरुषार्थसमाप्तिकारिणोऽस्यात्मावबोधस्य कुतः प्रसूतिरिति ? उच्यते –

अमानित्वादिनिष्ठो यो यश्चाद्वेष्ट्रादिसाधनः ।
ज्ञानमुत्पद्यते तस्य न बहिर्मुखचेतसः ॥ ६८ ॥

उत्पन्ने आत्मविज्ञाने किम् अविद्याकार्यत्वात् प्रवृत्तिवत् निवृत्त्यात्मकामानित्वादयो निवर्तन्त उत नेति ? नेति ब्रूमः । किं कारणम् ? निवृत्तिशास्त्राविरुद्धस्वाभाव्यात्परमात्मनः, न तु नियोगवशात् । कथ तर्हि ? शृणु –

उत्पन्नात्मप्रबोधस्य त्वद्वेष्टृत्वादयो गुणाः ।
अयत्नतो भवन्त्यस्य न तु साधनरूपिणः ॥ ६९ ॥

( क्लेशापहारिणी )

मुमुक्षूणामेवेन्द्रियलोलुपत्व तावन्नास्ति कुत पुनर्मुक्तस्य ज्ञानिन इत्युक्तम् । किं पुन कारण मुमुक्षूणां बाहिर्मुख्य नास्ति, किं च कारण ज्ञानिनो

निवृत्त्यैकपरत्वम् – इत्येतद् विशदयितुमिच्छन् मुमुक्षूणां तावत् ज्ञानैककाङ्क्षित्वात् निवृत्तिधर्मपरता इति दर्शयितुं ज्ञानसाधनगतं प्रश्नमुत्थापयति – सकलपुरुषार्थेति ॥ अत्यन्ताय दुःखनिवृत्तिः सुखप्राप्तिश्च खलु परमपुरुषार्थः। तत्र दुःखस्य च परम्परया आत्मानवबोध एव निदानमिति नित्यसुखस्य चात्मस्वभावस्य आत्माऽनवबोध एव पिधानम् – इत्यतश्च तस्योच्छित्तौ अशेषपुरुषार्थपरिसमाप्तिः – इत्युक्तं ग्रन्थारम्भे । आत्मानवबोधनिवृत्तिश्च आत्मावबोधादेव भवतीति तत्काङ्क्षित्वं मुमुक्षूणामिति कृत्वा प्रश्नः। उत्तरत्वेन श्लोकमवतारयति – उच्यते इति ॥

अमानित्वादीति ॥ अमानित्वादिसाधनगणस्त्रयोदशाध्याये गीतासु परिपठितः (गी. १३–७ प्रभृति ११तमश्लोकपर्यन्तम्), तस्मिन् सत्यात्मविज्ञानेऽधिकारो भवति । उपसंहृतं हि अन्ते 'एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥' (गी. १३–११) इति । अद्वेष्टृत्वादिगुणाश्च तत्रैव द्वादशाध्याये अक्षरोपासकधर्मवर्णनप्रसङ्गेन परिपठिताः (गी. १२–१३ प्रभृति १९तमश्लोकपर्यन्तम्) । पर्यन्ते चोक्तम् – 'ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते । श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥' (१२–२०) इति। तेन च, तस्मादिदं धर्म्यामृतं मुमुक्षुणा यत्नतोऽनुष्ठेयम् अक्षरज्ञानाख्यं भगवतः प्रियं धाम जिगमिषुणा इत्युक्तं भवति । तस्मात् अमानित्वादिनिष्ठस्य, अद्वेष्टृत्वादिसाधनवतश्च ज्ञानमुत्पद्यते न बहिर्मुखचेतसो विषयलालसस्येति गम्यत इति भावः ॥ ६८ ॥

तदेवं मुमुक्षोर्ज्ञानार्थित्वात् न बाहिर्मुख्यं भवेदित्युपपादितम् । अथेदानीम् उत्पन्नात्मविज्ञानस्य निवृत्तिनिष्ठत्वादेव ज्ञाननिष्ठत्वं सिध्यति नान्यथा–इत्यनन्तरस्य सुतरामसंभवः स्वैराचारस्येति दर्शयन्नाह – उत्पन्ने आत्मविज्ञाने इति ॥

उत्पन्नात्मप्रबोधस्येति ॥ निवृत्तिशास्त्राविरुद्धस्वभावत्वात्, निवृत्तिशास्त्रे यानि लक्षणानि प्रदर्श्यन्ते तत्स्वभाव एव परमात्मा, तदभिन्नश्चासौ। तस्मात्, यद्यपि न शास्त्रनियुक्तो निवृत्तिधर्मान् सेवते, तथापि

स्वभावत एवाय निर्वृत्तिनिष्ठो भवतीत्यभिप्राय । एतदेव विवरीतुमाह – न नियोगवशात्, कथ तर्हि ? – इति प्रश्नोत्तरत्वेन श्लोकमवतारयति – भृगिवेति ॥

उत्पन्नात्मप्रबोधस्य तु इति ॥ तुशब्दो मुमुक्षुतो वैलक्षण्य द्योतनार्थ । 'न तु साधनरूपिण ' इति । यथा मुमुक्षो – इति शेष । उक्त हि गीताभाष्ये – 'सर्वत्रैव हि अध्यात्मशास्त्रे कृतार्थलक्षणानि यानि, तान्येव साधनान्युपदिश्यन्ते । यत्नसाध्यत्वात्' (गी भा २–५५) इति । अद्वेष्टृत्वादय इत्युपलक्षणम् अमानित्वादयश्च– इत्यपि द्रष्टव्यम् ॥ ६९ ॥

## १४. ग्रन्थश्रवणाधिकारी

(मूलम्)

यत एतदेवम्, अतः –

इम ग्रन्थमुपादित्सुरमानित्वादिसाधनः ।
यत्नतः स्यान्न दुर्वृत्तः प्रत्यग्धर्मानुगो ह्ययम् । ॥ ७० ॥

न दातव्यश्चायं ग्रन्थः –

नाविरक्ताय संसारान्नानिरस्तैषणाय च ।
न चायमवते देयं वेदान्तार्थप्रवेशनम् ॥ ७१ ॥

ज्ञात्वा यथोदितं सम्यग्ज्ञातव्यं नावशिष्यते ।
न चानिरस्तकर्मेदं जानीयादञ्जसा ततः ॥ ७२ ॥

निरस्तसर्वकर्माणः प्रत्यक्प्रवणबुद्धयः ।
निष्कामा यतयः शान्ताः जानन्तीदं यथोदितम् ॥ ७३ ॥

(क्लेशापहारिणी)

यस्मादेव ज्ञानिन परमात्मस्वभावनिष्ठत्वात्, मुमुक्षोश्च ज्ञानार्थित्वात् अमानित्वादिसाधनगणो नियमेन लक्षणत्वेन साधनत्वेन च अपेक्षणीय,

तस्मादेव इमं ग्रन्थं नैष्कर्म्यसिद्धिविषयकम् उपादित्सुः श्रवणेन स्वीचिकीर्षुः, न दुर्वृत्तः स्यात्, यत्नेन अमानित्वादिसाधनं च संपादयेत् । हि यस्मात् अयम् अधिकारी प्रत्यग्धर्मानुगः प्रत्यग्धर्मान् अनुगन्तुमुद्युक्तः । संसारिधर्मं मुत्सृज्य प्रत्यगात्मस्वरूपमधिगन्तुं प्रवृत्तो हि, अतः तदनुगुणं च साधनगणमेव संपाद्य ग्रन्थं पिपठिषेत् इत्यर्थः ॥ ७० ॥

आचार्यस्याप्ययमेव नियमो यदुत यथोदिताधिकारिगुणवते एव ग्रन्थः उपदेष्टव्य इतीत्याह – न दातव्यश्चेति ॥ अविरक्ताय संसारात् इहामुत्रार्थभोगविरागरहितायेत्यर्थः । नानिरस्तैषणाय एषणात्रयादनुत्थिताय इत्यर्थः । साध्यसाधनविलक्षणो हि परमात्मा वेदान्तार्थः । अतः नानिरस्तैषणाय अत्र प्रवेशो देयः । न चायमवते योगशास्त्रपरिपठितमानससाधनशून्याय, अथवा अमानित्वादिसाधनरहिताय – इत्यर्थः ॥ ७१ ॥

कुतश्चैष ग्रन्थो यथोक्तसाधनवते देयः, न यस्मैकस्मैचिदिति ? तत्राह – ज्ञात्वेति ॥ अस्मिन् प्रकरणे यथोदितं आत्मतत्त्वं ज्ञात्वा तदूर्ध्वं ज्ञातव्यं नावशिष्यते । एतस्मिन् विदिते सर्वं विदितं भवतीत्यर्थः । **न चानिरस्तकर्मेति** ॥ *क्रियाकारकफलविलक्षणं हीदमात्मतत्त्वम्*, तस्मात् असंन्यस्तकर्मा नैतज्जानीयात् इति यतः, अतः यथोक्तसाधनरहिताय न दातव्योऽयं ग्रन्थः –इत्यर्थः । 'नाविरतो दुश्चरितात् नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥' (क. १–२–२४) इति श्रुतेः ॥ ७२ ॥

अत एव सर्वकर्मसंन्यासपूर्वकम् अन्तर्मुखचित्ताः वेदान्तश्रवणतत्पराः एव जानीयुरिमं यथोक्तं प्रकरणार्थमित्याह – निरस्तसर्वकर्माण इति ॥ शास्त्रोक्तं कर्म [redacted] चित्तशुद्ध्यर्थं संसारासारताज्ञानद्वारा वैराग्योत्पादनार्थं चेति प्रथमाध्याये (५२तमश्लोकसंबन्धोक्तौ) समुदीरितसाधनसोपानानुसन्धानेन विज्ञेयम् ॥ ७३ ॥

# १५. ग्रन्थोपसंहारः

( मूलम् )

श्रीमच्छङ्करपादपद्मयुगलं संसेव्य लब्धोच्चिमान्
ज्ञानं पारमहंस्यमेतदमलं स्वान्तान्धकारापनुत् ।
मा भूदत्र विरोधिनी मतिरतः सद्भिः परीक्ष्यं बुधैः
सर्वैरेव विशुद्धये मतमिदं सन्तः परं कारणम् ॥ ७४ ॥

सुभाषितं चार्थवपि नाऽमहात्मना
दिवाकरो नक्तदृशामिवामलः ।
प्रभाति भात्येव विशुद्धचेतसां
निधिर्यथापास्ततृषां महाधनः ॥ ७५ ॥

विष्णोः पादानुगां यां निखिलभवनुदं शङ्करोऽवाप योगात्
सर्वज्ञं ब्रह्मसंस्थं मुनिगणमहितं सम्यगभ्यर्च्य भक्त्या ।
विद्यां गङ्गामिवाहं प्रवरगुणनिधेः प्राप्य वेदान्तदीप्तां
कारुण्यात्तामवोचं जनिमृतिनिवहध्वस्तये दुःखितेभ्यः ॥ ७६ ॥

( क्लेशापहारिणी )

अथेदानीं प्रकरणमुपसंहरन् अत्रोक्तार्थस्य सम्प्रदायागतत्वमाह श्रद्धालूनां संग्रहार्थम् । वेदान्तार्थविदुषश्च प्रार्थयते स्वोक्तग्रन्थे सारासार-विवेचनेन परीक्षणं कर्तव्यमिति – श्रीमदित्यादिना ॥ स्पष्टार्थः श्लोकः ॥ ७४ ॥

तत्र ग्रन्थे दोषैकदृशः, विद्यमानमपि ग्रन्थगुणं न बहुमन्यन्ते तान् दुराराध्यान् प्रति न किञ्चिद् वक्तव्यम्, गुणलुब्धानां सहृदयानां तु प्रकरणोक्ता अमूल्यविचारविशेषाः स्वत एव हृदयङ्गमा भवेयुरित्यतः परिशुद्ध-चित्तानां परीक्षणायैवेदं प्रकरणं समर्पितमस्ति मयेत्याह – सुभाषितमिति ॥ उलूकादिनक्तदृग्दृष्टान्तो योगसूत्रस्थितसर्वरत्नोपस्थानसिद्धिदृष्टान्तश्च यथोक्तार्थ-स्फुटनार्थौ ॥ ७५ ॥

अथेदं प्रकरणं मुमुक्षूणामुपकारायैव विरचितम् न ख्यातिलाभाद्यर्थमित्यतो मुमुक्षुभिरादर्तव्यमित्याह – विष्णोरिति ॥ यथा महादेवो विष्णो पादात् विनिःसृतां गङ्गां योगैश्वर्यबलात् लोकोपकारार्थम् अवाप जटाजूटे धृतवान्, तथैव या विद्या विष्णोः परमं पदं दर्शयन्ती शङ्करोऽस्मद्गुरुयोगादवाप । स शङ्करः परमार्थविज्ञानेन सर्वज्ञं ब्रह्मनिष्ठं शिष्यभूतमुनिगणसहितं भक्त्या सम्यगभ्यर्च्य तस्मात् प्रवरगुणनिधेर्महाकारुणिकात्, सर्वेवेदान्तप्रकाशितामिमां ब्रह्मविद्यां संसारदुःखितेभ्यः मुमुक्षुभ्यः कारुण्यादेव केवलं – कथं नु खल्वमी सर्वसंसारदुःखविमुक्ता भवेयुरित्यनुकम्पया – अवोचम् इत्यर्थः ॥ ७६ ॥

## १६. गुरुनमस्क्रिया

(मूलम्)

वेदान्तोदरवर्ति भास्वदमलं ध्वान्तच्छिदस्मद्धियो
दिव्यं ज्ञानमतीन्द्रियेऽपि विषये व्याहन्यते न क्वचित् ।
यो नो न्यायशलाकयैव निखिलं संसारबीजं तमः
प्रोत्सार्याविरकार्षीद्गुरुगुरुः पूज्याय तस्मै नमः ॥ ७७ ॥

(क्लेशापहारिणी)

अथ गुरुभक्तेर्विद्यां प्रति परमाङ्गत्वं दर्शयितुं प्रकरणारम्भे इव तदन्तेऽपि स्वकृतां नमस्कारक्रियां शिष्यशिक्षार्थं श्लोकेन निबध्नाति – वेदान्तोदरवर्तीति ॥ वेदान्तप्रमाणैकलभ्यम्, अत एवान्यप्रमाणानन्यत्वात् दोषविधुरं अतीन्द्रियविषयमपि परमार्थतत्त्वं नियमेन प्रकाशयत् ज्ञानं – संसारबीजम् अस्मद्बुद्धिगतम् अज्ञानम् अनुभवानुसारितर्केणैवापोद्यतोऽपसार्य विवृतवान् तस्मै गुरूणामपि सर्वेषां गुरवे पूज्याय नमः, मम नमस्कारोऽस्तु इत्यर्थः । निचृच्छार्दूलविक्रीडितमेतदिति छन्दःशास्त्रज्ञा वदन्ति ॥ ७७ ॥

# १७. संबन्धोक्त्युपसंहारः

( मूलम् )

संबन्धोक्तिरियं साध्वी प्रतिश्लोकमुदाहृता ।
नैष्कर्म्यसिद्धेर्ज्ञात्वेमां व्याख्यातासौ भवेद् ध्रुवम् ॥ ७८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादशिष्यश्रीसुरेश्वराचार्यविरचितायां
नैष्कर्म्यसिद्धौ ससंबन्धोक्तौ चतुर्थोऽध्यायः

( क्लेशापहारिणी )

अथ नैष्कर्म्यसिद्धिप्रकरणस्थश्लोकानां संबन्धं कथं सुखं विजानीयुरिति व्याख्यातृणां कृते समनुगृहीतां सम्बन्धोक्तिमुपसंहरति – संबन्धोक्तिरिति ॥ ७८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवरेण्यश्रीपूज्यपादशाङ्करभगवच्चरणस्मरणपरिचयावाप्त-
वेदान्तप्रवेशेन श्रीबोधानन्देन्द्रसरस्वतीशिष्येण श्रीसच्चिदानन्देन्द्रसरस्वत्याख्येन
भिक्षुणा प्रणीतायां नैष्कर्म्यसिद्धिव्याख्यायां
क्लेशापहारिण्यां चतुर्थोऽध्यायः.

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासिनो यां सुसुखं विशन्ति ।
नैष्कर्म्यसिद्धिस्तु मयापि दृष्टा श्रीशङ्कराचार्यवरप्रसादात् ॥

ॐ तत्सत्

—§०§—

# १. श्लोकानां वर्णानुक्रमणिका

अत्र दत्ता सङ्ख्या प्रकृतग्रन्थगतानामध्यायश्लोकानां परामर्शिका । '(वा)' इत्येतत् तत्तच्छ्लोको बृहदारण्यकवार्तिकेऽपि पठित इति सूचयति । '(उ)' इति च उपदेशसाहस्री ग्रन्थेऽपि श्लोकोऽस्तीति सूचयति । '(गौ)' इति तु श्रीगौडपादकृतमाण्डूक्यकारिकासङ्ख्या सूचयति ॥

| प्रतीकम् | अ.श्लो. | प्रतीकम् | अ.श्लो. |
|---|---|---|---|
| नेहात्मविन्मदन्योऽस्ति | ४-५२ | प्रमां चेत्तनवेद्वाक्यं | ३-९६ |
| नोग्निमात्रं दहत्यग्निः | २-२३ | प्रमितसायां च भासाति | ३-८ |
| न्यायः पुरोदितोऽस्माभिः | ४-७ | प्रसङ्गाने श्रुतावस्य | ३-१२५ |
| न्यायसिद्धमतो वच्मि | ३-५० | प्रागनात्मैव जगर्धं सत् | २-१२ |
| पदान्युद्धृत्य वाक्येभ्यो | ३-३१ | प्रागसद्भाति यथासत् | ३-५५ |
| परमात्मानुकूलेन | १-७२ | प्रागात्मबोधाद् बोधोऽयं | ४-५५ |
| परमार्थात्मनिष्ठं यत् | ४-५२ | प्रक्षम्यपरिहार्येषु | १-३३ |
| पराक्ष्येन तु सर्वाणि (वा) | ३-४५ | प्रामाण्याय न चादुष्यं | १-८६ |
| परिणामिधियां वृत्तं | २-८२ | बलवद्धि प्रमाणोत्थं | १-३६ |
| परिहृत्याक्षयोर्योगात् | १-३४ | बाधितत्वादविद्यायाः | १-३८ |
| परीक्ष्य लोकानित्यत्वा | १-८७ | बाध्यबाधकभावाच्च (वा) | १-५५ |
| पश्यन्निति यदाहोक्ते. | ४-३९ | बाह्य आकारवान् ग्राह्यः | २-१०७ |
| पापापनुत्तये वाक्यात् | १-८३ | बाह्यां वृत्तिमनुत्पाद्य | ३-५८ |
| पाप्मनां पाप्मभिर्नास्ति | १-८४ | बुद्ध्यद्वैतससत्त्वस्य | ४-६२ |
| पारंपर्येण कर्मैवं | १-५९ | बुद्धावेव विवेकोऽयं | ४-१४ |
| पारोक्ष्यं यत्तद्य स्यात् | ३-७७ | बुद्धिजन्मनि पुंसश्च | २-६१ |
| पूर्वाध्यायेषु यद्वस्तु | ४-१ | बुद्धेरनात्मधर्मत्वं | २-९६ |
| प्रत्यक्षास्य स्वतोरूपं | ३-७१ | बुद्धेर्यत्नस्य नात्मत्वं | ३-१८ |
| प्रत्यक्षवादिसूक्ष्मत्वात् | २-५५ | बुद्ध्यन्तमपविद्धैवं | ४-१८ |
| प्रत्यक्षप्रवणतां बुद्धेः | १-४९ | बुद्ध्यादीनामनात्मत्वं | ३-३३ |
| प्रत्यक्षं चेत्र शाब्दं स्यात् | ३-८५ | बुभुत्सोच्छेदिनी चास्य (वा) | ३-६७ |
| प्रत्यक्षस्य परात्त्वाच्च | ३-५१ | बुभुत्सोर्दीपकालादेः | २-१५ |
| प्रत्यक्षाद्विविरुद्धं चेत् | ३-८१ | बृहस्पतिसवे यद्वत् (वा) | १-५७ |
| प्रत्यगुद्भूतपिसत्य | ३-३० | बोद्धृता कर्तृता बुद्धेः | ३-१२ |
| प्रत्यग्रं तु विभिद्यन्ते | २-८६ | बोद्धृत्वं तद्वदेवास्याः | ३-१९ |
| प्रत्याचक्षाण आहातो | ४-६४ | बोधात् प्रागपि दुःखित्वं | २-९० |
| प्रमाणतन्निसेन्वथा. | २-७८ | बोधाबोधौ नभोऽस्पृष्ट्वा | ३-१०० |
| प्रमाणवद्मूलत्वात् | ३-८८ | बोधेऽप्यनुभवो यस्य | ३-२८ |
| प्रमाणमन्तरेणैयां | २-९९ | ब्रह्मात्मा वा सवेत्तस्य | १-६२ |
| प्रमाणव्यवहारोऽयं | ३-५२ | ब्राह्मण्याद्यात्मके देहे | १-३९ |
| प्रमाणैश्चावगम्यत्वात् | २-३० | भगवत्पूज्यपादैश्च | ४-१९ |

# २. प्रमाणवचनानामाकरग्रन्थानुक्रमणिका

अत्र दत्ताः संख्याः कंसचिह्नान्तर्गताः तत्तद्ग्रन्थस्याध्यायादिसूचिन्यः, पंक्त्यन्ते दत्ताः अष्टत्वमुद्रितपुस्तकस्य पत्रपार्श्वसूचिन्यः. उपदेशसाहस्र्याः श्लोकसंख्या तु मैसूरु प्राच्यपुस्तकागारे (Mysore Oriental Library) मुद्रापित गद्यपद्यात्मक-पुस्तकस्येति ज्ञेयम् ॥

